# श्रीगायत्रीपुरश्चरणपद्धतिना प्रकाशनसंबन्धे बे बोल



आज वर्षो थयां कच्छप्रान्तमां रहेनारा अमो पुष्करणाज्ञातिना ब्राह्मणो मुंबईमां रहीए छीए. अमारामां घणाओ यथाशक्ति वेपार अने घणाओ क्षत्रियकुलोत्पन्न **भाटीया-ज्ञातिनी** यजमानवृत्ति करीने पोतानी आजीविका चलावे छे. अमारी बधानी एवी इच्छा थई के एक आपणुं मंडळ स्थापी प्रतिवर्ष भगवत्प्रीत्यर्थ एकाद यज्ञ आपणेज बधाए आपणाज द्रव्यमांथी करवो अने आपणामांथीज योग्य कोई विद्वान् शोधी काढी तेना द्वारा ए कर्म कराववुं. आम निर्णय थया पछी **"श्रीपुष्टिकर (पुष्करणा) यज्ञमंडल"** ए नामनुं एक मंडल स्थापवामां आव्युं अने प्रथम सं० १९८१ना चातुर्मासमां सर्वे ब्राह्मणोनी तथा द्विजोनी उपास्यदेवता जगज्जननी श्रीगायत्रीदेवीना मंत्रनुं जपानुष्ठान-पंचांगसहित **श्रीगायत्रीपुरश्चरण** शरु कर्युं; अने ए वखते अमारा पंडित **जीवणलाल (जीवुभाई)भाणजी ओझाने** ए कर्मना आचार्य निमवामां आव्या. तेओए यथाशक्ति ए कार्य कराव्युं. तेमज अमारा स्वज्ञातिपंडित **रामचंद्र खीमजीए** पण आचार्य तरीके बे वरस ए कार्य कराव्युं. जीवुभाई पासे उपरोक्त कर्मने योग्य 'श्रीगायत्रीपुरश्चरणपद्धति'नो एक ग्रन्थ तेमना घरमां होवाथी ते छपाववानी इच्छा सहु कोईने थई अने ए कार्य श्री. **जीवणलालने** सोंपवामां आव्युं. तेओए ते कार्य वे. शा. सं. **शास्त्री अमृतलाल त्रीकमजी आचार्य** तथा संशोधन माटे वे. शा. सं. **शास्त्री तुलजाशंकर धीरजराम पंड्याने** सोप्युं. आजे आ ग्रन्थ तेओ सर्वना प्रयत्नथी तयार थयो छे जेने आप सर्वनी समक्ष मुकतां अमोने घणोज हर्ष थाय छे.

आ पुस्तक छपाववानुं ज्यारे नक्की थयुं त्यारे ते आर्थिक सहाय विना थवुं अशक्य हतुं एटले तेने माटे अमो प्रथम बधा मळीने रा. रा. श्री. **नारायणदास लक्ष्मीदास** पासे गया अने तेओने आ संबंधमां वातचीत करतां तेओए रु. ४००नी उदार मदद प्रथम आपी, त्यारपछी श्री. **धर्मसिंह देवकरणे** रु. ३००नी मदद आपी, श्री. कल्याणजी वीशनजीए रु. ३०० तेमज रु. २५०नी मदद मळी, **लक्ष्मीदास नारायणदासनी** कुंपनी-मांथी अमने आपी. रु. ३०० एक भाटीया सद्गृहस्थ तरफथी मळी छे. रु. १०० लक्ष्मीदास गिमजी व्यास. आम रुपीया १६५० प्राप्त थतां अमोए ए ग्रन्थ छपाववानो आरंभ कर्यो अने ते श्रीजगदम्बिका **गायत्रीदेवीनी** कृपाथी परिपूर्ण थयो छे. पुस्तकनुं काम धारवा

करतां वधारे थवाथी रूपयानी जरुर पडवाथी वहारनी मदद लेवा जरुर पडी अने ते रकम अमने जे भाईओए आपी छेतेओनां नाम अलग आपेल छे.

यज्ञमां लाभ लेवानी सभासद पासेथी फी तरीके रु. १० राखवामां आव्या हता अने सभासदोमांथी एक सभासद नकी करवामां आवतो हतो अने ते यज्ञनी पूर्णाहुतिना खर्च तरीके रु. १०० आपे. आ प्रमाणे आसरे ३० सभासदोए ए कार्यमां भाग लीधो हतो.

प्रत्येक यज्ञ कार्यमां जगा आपवा माटे नवी भाटीया महाजनवाडी तथा कानजी खेतसीवाडीना ट्रस्टीओनो आभार मानवामां आवे छे.

आ पुस्तकमां यन्त्रादिकनी आकृतिओ श्री. शास्त्री तुलजाशंकरना पुत्र चित्रकार चि. मुकुंदराये पाडी आपी छे ते माटे तेमने अभिनन्दन आप्या सिवाय अमे रही शकता नथी.

श्री. शास्त्री अमृतलाल तथा श्री. शास्त्री तुलजाशंकरे आ पुस्तकमां निरपेक्षवृत्तिथी सेवाभावे जे टिप्पणी तथा संशोधन करेलुं छे ते बदल तेमनो तेमज पैसानी मदद आपनार सद्‌गृहस्थोनो आभार मानवामां आवे छे.

आ पुस्तक अमोए विनामूल्ये आपवा छपावेल छे. जे भाईने ए पुस्तकनी जरुर होय तेणे पुस्तक मलवाना ठेकाणे पत्र लखी छापेलुं फारम मंगावी भरी मोकलवुं अने माथे १४ आनानी पोस्टनी टीकीट मोकलवी. पुस्तक हशे त्यांसुधी खात्री करी मोकलवामां आवशे. आ पुस्तक जेओने आपवामां आवे तेओ एनो सदुपयोग करशे एवी अमो आशा राखीए छीए, अने तो अमे अमारा मंडळनुं कर्तव्य सफळ थयुं समजीशुं.

सुज्ञेषु किं बहुना.

ली. शुभेच्छक

पुष्टिकर (पुष्करणा) यज्ञमंडळना सभ्यो.



## ॥ प्रास्ताविकम् ॥

श्रीगायत्रीं परां देवीं विप्रेभ्योऽभयदां मुदा।
वन्दे ब्रह्मप्रदां साक्षात्सच्चिदानंदरूपिणीम् ॥

सहृदया याज्ञिकप्रवराः सज्जनविद्वांसश्च !

विदांकुर्वन्त्वेव भवन्तो यदिह संसारे स्वकर्मानुसारेण प्राप्तमानुष्यभावानां प्राणिनां चातुर्वर्ण्यस्यैव पारलौकिकनिःश्रेयसादिमोक्षपर्यंतविषयप्राप्तित्वे श्रेष्ठत्वमिति । तत्रापि वामतः शूद्रादारभ्य क्रमेणाविप्रवर्णं मुक्तिसाध्यत्वे विशेषेण प्राशस्त्यमित्यपि निर्विवादमेव । तत्रापि वर्णत्रयस्योपनयनाधिकारत्वात्सत्यपि समाने द्विजत्वे क्रमेण ब्राह्मणादीनां श्रेष्ठतमत्वं श्रेष्ठतरत्वं श्रेष्ठत्वञ्च शास्त्रतस्तदनुसारिलोकव्यवहारतश्च दरीदृश्यत इत्यत्रापि न शङ्कास्पदम् । अपिनाम किं तदेतादृशं कारणं येन ब्राह्मणस्य "वर्णानां ब्राह्मणो गुरुः" इत्यनेन च विशेषेण वैशिष्ट्यं प्रतिपादितं भवति ? ॥ नहि तत्रान्यत् कारणं किन्तु गायत्र्युपासनमेव परं कारणमिति ज्ञायते । यतो महर्षिविश्वामित्रेण सत्यपि द्विजत्वसाम्ये ब्रह्मर्षिणा वशिष्ठेन सार्कं समानस्पर्धायां तस्यालौकिकं ब्रह्मबलं दृष्ट्वा स्वद्वितीयवर्णत्वेनासंतुष्टेन "धिग्बलं क्षत्रियबलं बलं ब्रह्मबलं स्मृतम्" इत्युक्त्वा तत्प्राप्त्यर्थमन्यतपसा सार्कं प्राधान्येन गायत्र्युपासनमेव कृत्वा परं ब्रह्मबलं प्राप्तमिति सुप्रसिद्धमेव। विश्वामित्रकल्प–वशिष्ठसंहिता–मनुस्मृति–याज्ञवल्क्यस्मृति–देवीभागवतादिग्रन्थेषु तथा ह्यथर्ववेदे शारदातिलकेऽपि च गायत्र्याः परमं माहात्म्यं सुवर्णितं दृष्टिगोचरं भवत्येव । यथाह भगवान् मनुः–" त्रिभ्य एव तु वेदेभ्यः पादंपादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ २–७७ ॥ एतदक्षरमेतां च जपन् व्याहृतिपूर्विकाम् । संध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ २–७८ ॥ सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः । महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥ २–८० ॥ ओंकारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः । त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम् ॥ २–८१ ॥ योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः। स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥ २–८२ ॥ एकाक्षरं परं ब्रह्म प्राणायामः परं तपः । सावित्र्यास्तु परं नास्ति मौनात्सत्यं विशिष्यते ॥ २–८३ ॥ विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥ २–८५ ॥ जपेनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ २–८७ ॥" योगिना याज्ञवल्क्येनापि गायत्र्याश्चतुर्विंशत्यक्षराणां देवता अभिधायानन्तरं "गायत्री वेदजननी गायत्री पापनाशिनी। गायत्र्यास्तु परं नास्ति दिवि चेह च पावनम् ॥ हस्तत्राणप्रदा देवी पततां नरकार्णवे। तस्मात्तामभ्यसेन्नित्यं ब्राह्मणोऽनुदये शुचिः ॥ गायत्रीनिरतं हव्यकव्येषु विनियोजयेत् । तस्मिन्न लिप्यते पापमब्बिन्दुरिव पुष्करे ॥ वेदाः साङ्गास्तु चत्वारोऽधीताः सर्वेऽथ वा-

ध्यायाः । गायत्रीं यो न जानाति वृथा तस्य परिश्रमः ॥ गायत्रीमात्रसंतुष्टः श्रेयान् विप्रः सुयन्त्रितः । नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥" इत्यभिहितम् ॥ छन्दोगपरिशिष्टे–"सर्वेषामेव वेदानां गुह्योपनिषदां तथा। सारभूता तु गायत्री निर्गता ब्रह्मणो मुखात् ॥" बृहद्यमोऽपि–"न तथा वेदजपतः पापं निर्दहति द्विजः। यथा सावित्रीजपतः सर्वपापैः प्रमुच्यते ॥" कूर्मपुराणे–"गायत्रीं चैव वेदांश्च तुलया समतोलयत्। वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्मृता" ॥ नागदेवोऽपि–"गायन्तं त्रायते यस्माद् गायत्री तेन चोच्यते" ॥ श्रीशारदातिलकेऽपि–एकविंशतिपटलारंभे–" अथो वक्ष्यामि गायत्रीं तत्त्वरूपां त्रयीमयीम्। यया प्रकाश्यते ब्रह्म सच्चिदानंदलक्षणम् " ॥ इति कथितम् ॥ एवमेतैरन्यैश्च बहुभिरपि प्रमाणैर्ब्राह्मणक्षत्रियविशां विशेषेण च ब्राह्मणानामैहलौकिकपारलौकिकादिकाम्यफलप्राप्तिपूर्वकं सच्चिदानंदस्वरूपब्रह्मप्राप्तिरूपं परं मोक्षलक्षणफलमपि प्राप्तुं महती फलदात्री देवता गायत्रीं विना न काप्यस्तीति दिव्यदृष्ट्यैवास्माकं लौकिकदृष्ट्यापि स्पष्टतरं प्रतिभातीत्यत्र किं वक्तव्यं स्यात्? ॥

अन्यत्रापि गायत्र्या माहात्म्यं श्रूयते यथाऽन्यत्रसंग्रहे–"गायत्री परदेवतेति गदिता ब्रह्मैव चिद्रूपिणी ॥" गायत्रीजपादौ फलमुक्तं वृद्धपराशरस्मृतौ–"गायत्रीजपकृद्भक्त्या सर्वपापैः प्रमुच्यते ॥" भविष्यपुराणे–"सर्वपापानि नश्यन्ति गायत्रीजपतो नृप" ॥ आग्नेये–"ऐहिकामुष्मिकं सर्वं गायत्रीजपतो भवेत्" ॥ पद्मपुराणे–"ब्रह्महत्यादिपापानि गुरूणि च लघूनि च । नाशयत्यचिरेणैव गायत्रीजापको द्विजः ॥"

श्रीमच्छंकराचार्यविरचितायां गायत्रीपुरश्चरणपद्धतौ–"तत्र तावत्सावित्रीशब्देन परदेवतेति चोच्यते। तदुक्तं भारद्वाजीये–सूते जगदादि सा सावित्री सर्वजगत्प्रसवादिकर्त्री सैव गायत्रीत्युच्यते । सैव सेव्यत्वेन शब्दब्रह्मेत्युच्यते । उक्तं च नारायणोपनिषदि–गायत्रीं छंदसां मातेदं ब्रह्म जुषस्व मे ॥ भगवद्गीतासु च–गायत्री छन्दसामहमिति" ॥

एभिरन्यैश्च विविधैः प्रमाणैः श्रीभगवत्या गायत्रीदेव्याः प्रभावः कीदृशः किंफलद इत्येतद्विषये न किञ्चिदपि शंकास्थानम्, यतः साक्षाद् सर्वदेवतात्मनः सर्वशक्तेः सर्वावभासकृत्तत्तेजोमयस्य परमात्मनः सर्वात्मकद्योतकः सर्वात्मप्रतिपादकोऽयं गायत्रीमन्त्रः । सप्रणवव्याहृतेरस्यार्थविषये संध्याभाष्ये त्वेवमभिहितम् । यथा–"अकारमात्रा प्रथमा द्वितीयोकारसंज्ञिता। मकारमात्रा त्रित्वं स्यान्नादे त्वात्मा व्यवस्थितः ॥ जाग्रत्स्वप्नसुषुप्त्याख्यं हित्वा स्थानत्रयं बुधैः। तुरीयाख्यं परब्रह्मार्धमात्रेणोपदिश्यते ॥सर्वलोकान् व्याहरन्तीति व्याहृतयः ॥ गायत्री तदित्यादिका चतुर्विंशत्यक्षराऽष्टाक्षरपादपरिच्छेदेन त्रिपदी। तस्यभेदत्रयमाह–प्राणा वै गयास्तेषां त्रयाणां गायत्री, गायन्तं त्रायते वा गायत्री । सवितृप्रकाशनार्थत्वात् जगतः प्रसवित्री सावित्री । वाग्रूपत्वात्सरस्वती ॥ ( कालत्रयभेदेन तस्या व्यवस्था–गायत्रीनाम पूर्वाह्णे सावित्री मध्यमे दिने । सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता । इति व्यासः ) वर्णविषयेऽपि–रक्ता भवति गायत्री सावित्री

शुक्लवर्णिका । कृष्णा सरस्वती ज्ञेया संध्यात्रयमुदाहृतम् ॥ अतोऽस्य मन्त्रस्यार्थमाह– ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ तत् भर्गः सवितुर्देवस्य धीमहि ध्यायेमहि । तत् भर्गः सवितुर्देवस्य धीमहीति सम्बन्धः । भर्गस्तेज उच्यते । देवस्य द्योतमानस्येत्यर्थः । धीमहि ध्यायेमहि । कीदृशं भर्गः? वरेण्यं सर्वतेजोभ्यः श्रेष्ठं वरणीयं वा भुक्तिमुक्तिकामैः । का पुनरादित्यस्य ईश्वरता येन धीमहि? इत्याकाङ्क्षायां धियो यो नः प्रचोदयात् । यो भर्गो नोऽस्माकं सर्वेषां प्राणिनां भोक्तॄणां दृष्टादृष्टफलकेषु कर्मसु धियो बुद्धीः प्रचोदयात् प्रेरयतीत्यर्थः । ईश्वरप्रेरितबुद्ध्यैव तत्कर्म कुर्वन्तीत्यर्थः । "सूर्य आत्मा जगतस्तस्थुषश्चे"ति श्रवणात् ईश्वरस्यैवायमवताराकारः सूर्य इति ॥ अर्थात् अव्याकृतस्वरूपस्य परमात्मनः सर्वेषां जीवनहेतुभूतप्राणस्वरूपिणः सर्वसुखदायकस्य च सचराचरजगदुत्पादकस्य प्रकाशमानस्य सूर्यरूपस्येश्वरस्य तत्प्रसिद्धं सर्वश्रेष्ठं सर्वाभिलषणीयं पापभर्जकं तेजो वयं ध्यायेमहि या यः सूर्योऽस्माकं बुद्धीरसन्मार्गान्निवर्त्य सन्मार्गं प्रेरयति ॥ श्रीमच्छंकराचार्यविरचितगायत्रीपद्धतावप्ययमेवार्थः प्रतिपादितः स विस्तरभयान्नात्रावतीर्यते ॥ अतः सर्वैरवश्यमेव ज्ञायत एव यत्संसारे ऐहलौकिकपारलौकिकसुखेन सार्धं साक्षात्परब्रह्मस्वरूपमाप्तुमयमेव मन्त्रो द्विजातीनां सिद्धिदायकः श्रेष्ठतर इति ।

श्रूयते च काचित्किंवदन्ती गायत्र्याः प्रभावविषयिणी यत्–ऐहलौकिकपारलौकिकश्रेयस्कामः कश्चिद्विप्रः कंचित्कालं गायत्र्युपासनरतोऽपि स्वपूर्वजन्मकृतपापक्षयावधिमदृष्टप्रतिस्तात्कालिकीं सिद्धिं प्राप्तुकामः कस्यचित्क्षुद्रदेवतोपासकस्य तात्कालिकीं लक्ष्मीप्राप्त्यादिरूपां सिद्धिं दृष्ट्वा बुद्धौ जनितविभ्रमो गायत्र्युपासनं विहाय तं विप्रं गत्वा स्वस्मै दीक्षां दातुं ययाचे । क्षुद्रदेवतोपासकः स विप्रो विनयेन "त्वं दृष्टफलमुग्धोसि, नैतदन्ततो निःश्रेयस्करमित्यनुभूतफलेनाहं कथयाम्यतो मोहं त्यक्त्वा स्वस्य पूर्वदेवतोपासनमेव कुरु, नहि तादृशं कल्याणकरमन्यत्किंचिदि"ति जगाद । तथापि पापवशात् संजातविभ्रमाकुलितबुद्धिः स पुनरपि दुराग्रहेण तामेव याचनां चकार । ब्राह्मणस्य दुराग्रहेणानिच्छन्नपि स तस्मै क्षुद्रदेवतादीक्षां ददौ । दीक्षया प्रसन्नो ब्राह्मणो गायत्र्युपासनं विहाय विधिवत्क्षुद्रदेवतोपासनं चकार । केनचित्कालेन सा क्षुद्रदेवता प्रसन्ना भूत्वा तस्य विप्रस्य पृष्ठतस्तिष्ठन्ती सती जगाद–'भक्त! प्रसन्नास्मि, व्रियतां वरः' । ब्राह्मणेन पृष्टम्–'देवि! का त्वम्?' । तयोक्तम्–'अहं ते इष्टदेवता, प्रसन्नास्मि, व्रियतां वरः ॥ ब्राह्मणस्तां पृष्ठतः स्थित्वा ब्रुवन्तीं दृष्ट्वा जगाद–'देवि! मयि प्रसन्ना चेत् मत्पुरतः समागत्य दर्शनं दातुं कृपां कुरु' । एतच्छ्रुत्वा क्षुद्रदेवतया कथितं–'भक्त! प्राक्तनगायत्र्युपासनसंजातौजस्वतस्ते तेजसा ज्वलन्तीवातिसंतप्ताहं ते पुरतः प्रतिष्ठातुं न शक्तासीत्यतोऽत्र स्थिताया एव मत्तो वरं ब्रूहि'। एतदाकर्ण्य प्राक्तनपुण्योदयेन विनष्टबुद्धिभ्रमः स उवाच–'देवि! यदि मत्पुरतोऽपि स्थातुं ते शक्तिर्नास्ति चेदलमायासेन । वरप्रदानरूपं ते फलं न काङ्क्षे, कृपया गच्छ स्वस्थानम्' ।

एवमभिहिता सा क्षुद्रदेवता स्वस्थानं जगाम। ब्राह्मणोऽपि गायत्र्युपासनस्यैतादृशमलौकिकं प्रभावं दृष्ट्वा देवतान्तराणां तात्कालिकविनाशिफलदातृत्वं गायत्रीदेव्यपेक्षया क्षुद्रत्वं च दृष्ट्वा लौकिकफलमोहं त्यक्त्वा पुनरपि दृढभक्त्या देव्या गायत्र्याः परमोपासनार्णवे निममज्ज। केनचित्कालेन विधूतपापपुञ्जः स परमशुद्धिमोजस्वितां च प्राप्य संजातगायत्रीप्रत्यक्षदर्शनो गायत्रीप्रसादात्प्राप्तैहिकसुखानन्दोऽपि समयप्रवाहेण संजातसच्चिदानन्दज्ञानविज्ञानसुखानुभवः क्रमेण ब्रह्मस्वरूपं प्राप। विचारयन्तु विद्वांसो यदतो गायत्र्या माहात्म्यादपरं कस्य माहात्म्यं विशिष्टतरं तत्? ॥

एवं परमसिद्धिदं गायत्र्युपासनं कृत्वा बहवो मुनिप्रवराः स्वस्वरूपमाप्ता इति श्रुत्वा ग्रन्थेभ्यो ज्ञात्वाऽपि चैतावत्कालावधि गायत्रीपुरश्चरणस्य द्विजातौ विशेषेण च ब्राह्मणेषु प्रचलितां परम्परां दृष्ट्वापि युगधर्मानुसारेण कलिकालवशाद् धर्मकर्माचरणे प्रतिदिनं प्रमाद्यमाना विशेषेण च संपत्तिमाप्तुमेवाहोरात्रं कृतायुष्यक्षणव्यया द्विजातयो गायत्र्युपासनरूपं परं कर्तव्यं विस्मृत्य ह्यधःपातमेव निरन्तरं गन्तारो दृश्यन्त इत्यतः परं शोकास्पदं किमपरं स्यात्?। तथापि 'बहुरत्ना वसुंधरा' इति लोकोक्त्या संप्रत्यपि गायत्र्युपासनविरहिताः सर्वेऽपि न संजाता इति मत्वा ये सज्जनास्तत्कर्मतत्परास्तेषां विधिपुरःसरमेवैतद्गायत्र्यनुष्ठानादिकं भवेत् इति मत्वा क्वचिद्दृश्यमानेऽपि गायत्रीपुरश्चरणप्रयोगादिके सविधिपुरःसरं सुलभं सुगमं च प्रयोगदर्शनं यथा स्यात्तथेयं गायत्रीपुरश्चरणपद्धतिरस्मत्स्नेहिवर्येण श्रीमता जीवनरामेण संकलिता वर्तते। अस्या अमृतवर्षिणी टिप्पणी त्वस्मन्मित्रवर्यैः अमृतलालशास्त्रिभिर्याज्ञिकानां सुसंतोषाय शास्त्रमालोच्य देशाचारव्यवस्थामप्यनुज्झित्य संलिखिता। अस्याः संशोधनं तु यथाशक्ति मया कृतम् ॥

अस्याः परिशिष्टप्रकरणे रुद्राष्टाध्याय्या गुर्जरभाषानुवादो मया उवटमहीधरभाष्यद्वयमालोच्य यथाशक्ति कृतस्तथापि वैदिकविषयस्यातिगहनत्वेन याज्ञिकानां तद्विषयस्य साभिज्ञत्वाच्च स्याच्चेत्प्रमादः सज्जनास्तं क्षाम्येयुरित्यत्र नाप्रत्ययः। एवं सर्वरीत्या सर्वयाज्ञिकानां यज्ञकार्यं कारयितुं सुगमा भवेत्तथेयं मुद्रापिताऽपि "नहि सर्वः सर्वं जानाति" इति मत्वा पुनः संशोधने दत्तेऽपि क्वचिद्दृष्टिदोषवशात् सीसकाक्षरयोजकानां प्रमादाद्वा विभ्रमात् दोषाः स्युश्चेत्सज्जनैस्ते स्मरणं कारयितव्या येन पुनर्द्वितीयावृत्तौ तस्य साफल्यं स्यात्। यदि याज्ञिकप्रवराणां संतोषायेयं गायत्रीपुरश्चरणपद्धतिः स्याच्चेत् पद्धतिग्रन्थकानां जीवनरामशर्मणां तथा च मम टिप्पणीकर्तुश्च प्रयत्नः सफलो भवेत् इति मन्ये। संप्रार्थये जगदम्बिकां गायत्रीदेवीं यत्सा हीयं गायत्रीपुरश्चरणपद्धतिः सर्वयाज्ञिकानां परमप्रमोदार्हतां भजेत तथा कुर्यात्। इति शम् ॥

श्रीगायत्र्याः कृपाकाङ्क्षी
तुलजाशङ्कर धीरजराम शास्त्री
संशोधकः।

## ॥ किंचिन्निवेदनम् ॥

सविनयं समाराधितश्रीशारदाचरणसरोरुहो विदुषः अस्याः श्रीगायत्रीपुरश्चरणपद्धत्या संग्रथने मुद्रापणे च किञ्चिन्निवेदितुमभ्यर्थये । क्षाम्यन्तु तत्रभवन्तो मदीयमज्ञानध्वान्तविलसितं कंचिद् वाग्विलासम् ।

न मया गुरोर्मुखाद्यथाक्रमं वैदिकाकरग्रन्था उत व्याकरणसाहित्यमन्त्रतन्त्रप्रभृतीनि शास्त्राण्यधितानि । अपि तु बाल्यादेव विदुषां समागमेन, तेषामुपदेशश्रवणेन, क्रियायाश्चावलोकनेन, तथैव स्वबुद्ध्यैव ग्रन्थाभ्यासेन, दृष्टं श्रुतञ्च यत्तस्य स्वहस्तेन स्वोपकाराय संछेखनेन च मया यज्ज्ञानलवमपि प्राप्तं तन्निवेदने न कापि क्षतिर्मम ज्ञानविषये तत्रभवतां समीपे । एवं प्राप्तेन ज्ञानेन कच्छदेशान्तर्गते मम मातृभूमौ माण्डवीनाम्नि नगरे यजमानवृत्त्यैवाहं स्वस्याजीविकां व्याहरम् ॥

परञ्च भगवत्कृपया तथैवास्मदीयज्ञातिबन्धूनामाग्रहेण मोहमय्या नामश्रवणेन च जातरागो भाग्यवशात् मोहमयीं–मुम्बापुरीम् आगत्यामोमुदम् । पूर्वं तु अस्यां नगर्यां केनापि विदुषा श्रेष्ठिना च सह मम परिचयः संबन्धश्च नासीत् । तथापि क्रमेण शनैः शनैः अत्रत्यानां कर्मकाण्डविषयेषु निपुणानां वैदिकानाम् अधिगतशास्त्राणां समवयस्कानां वृद्धानाञ्च विदुषां परिचयेन स्वकीयदेशमपि विस्मृत्य चातीव प्रसन्नोऽभवम् ॥ तैः सह मैत्रीं स्नेहञ्च कुर्वाणः पूर्वं कालबादेवीनाम्ना प्रसिद्धायां वीथ्यां पश्चाच दुर्ग-( कोट ) नाम्नि प्रसिद्धे स्थले निवासमद्यावध्यकरवम् ॥

एवं व्यतीते बहुकालेऽत्रत्यैः सर्वैर्ज्ञातिबन्धुमिश्च सह परिचये स्नेहे च संवर्धिते सर्वैर्मिलित्वा पुष्करणाज्ञातीयानाम् आबालवृद्धानां 'परस्परसाहाय्यकारकं' तथैव प्रतिवर्षं किमपि धार्मिकं कार्यं कर्तुञ्च "पुष्करणाज्ञातिमण्डलम्" नामकं मंडलं स्थापितम् । तस्मिन्नहन्येव 'प्रतिवर्षं धार्मिकं किं कार्यम्?' इति विषयस्य चर्चायां विघ्नविनायकस्य गणपतेः, श्रीमहादेवस्य, विष्णोः, देव्याश्चैवं स्वस्वाराधनदेवतानामभिधानं सर्वैर्दत्तम् । परञ्च ह्यन्ततो गत्वा "त्रैवर्णिकानामुपनयनतो यस्या दीक्षा शास्त्रेषु मुख्यतया विहिता या च वेदस्य जननी जगद्धात्री भगवती श्रीगायत्री देवी सा एव मुख्यतयोपास्येति द्विजानां मुख्यो धर्म" इति कृत्वा "तस्या एव मन्त्रजपहोमतर्पणब्राह्मणभोजनपञ्चाङ्गसहितमाराधनं कार्यमि"ति सर्वैः सुनिश्चितम् । तथैव तस्या आराधनाय दिवसस्यापि निश्चयः कृतः । तथैव तस्मिन्कार्ये एकमत्या 'आचार्यत्वेन भवानेव घृत' इत्यपि मां प्रति सूचितम् । मयापि सहर्षं तेषामनुरोधेन निमन्त्रणं स्वीकृतमपितु तस्मिन्काले नासीन्मत्समीपे भगवत्याःश्रीगायत्र्याः पूजनपद्धतिः । तथापि बाल्यतोऽनधीतेऽपि विषये मन्मनसि ग्रन्थावलोकनस्य परिपाट्यां जागरूकत्वात् तथैव कच्छमांडवीदेशवासिनो मम मित्ररत्नस्य जीवरामशर्मणः पुत्रस्य जयकृष्णशर्मणः (काकु महाराज नाम्ना प्रसिद्धस्य) सकाशादेका गायत्रीपूजनपद्धतिः

प्राप्ता। तथैवैका मया पुनापत्तने "आनन्दाश्रमसंस्कृतग्रन्थावलि" नाम्नि संस्कृतपुस्तक-प्रकाशने प्रसिद्धाप्यानीता। सा सुष्ठुतरापि ऋग्शाखीयेति कृत्वा मम संतोषाय नाभवत्तथापि तदर्थे तु येन केनापि प्रकारेण निर्वाहितं भगवत्याः श्रीगायत्रीदेव्याः पुरश्चरणरूप समाराधनम्, परंतु तत्र अन्तिमदिने होमकर्मसंपादानायाहूतानां याज्ञिककर्मकर्तॄणां विदुषां मध्ये प्रथमतः साधारणतया परिचितानां वेदशास्त्रसंपन्नानां जामनगरनिवासिनाम् आचार्योवटङ्कानाम् अमृतलाल त्रीकमजी शास्त्रिणां तथा चानन्तरं वेदव्याकरणादिशास्त्रेषु निपुणानां गुर्जरप्रदेशान्तर्गतराजपिप्पलसंस्थानान्तर्वर्तिनर्मदातटस्थ "भालोद"-ग्रामनिवासिनां पंड्योपाह्वानां तुलजाशंकर धीरजराम शास्त्रिणाश्च समागमेनाहमतीव प्रसन्नोऽभवम्। तथैव भगवत्या आराधनाय श्रीगायत्रीपुरश्चरणपद्धत्या अपूर्णा मदीया हृदयाशाऽपि अप्राप्तेऽपि ग्रन्थेऽकृतेऽपि प्रश्ने पूर्णा जातैवेति मन्मनसि समाधानमलभे॥

तत आरभ्योभयैः सह प्रतिदिनं मदीयः परिचयः स्नेहसंबन्धश्च स्वकीयाप्तवर्गतोऽप्यधिकादरेण प्रीत्या च परमसंतोषमावहन् वृद्धिंगतो यस्य फलरूपेण तेषां प्रेम्णैवेमां श्रीगायत्रीपुरश्चरणपद्धतिं विदुषामग्रे निवेदितुमहं समर्थः संजातः। इयं पद्धतिः अमृतलालशास्त्रिणां वे.शा.सं. स्वर्गस्थैः पूज्यपादैः पितृभिः त्रिकमजीआचार्यवर्यैः स्वकीयगुरोः सकाशात्स्वत्ररूपेण प्राप्ता तां स्वयं सरलतया सर्वेषामुपकाराय भवेदिति विचार्य शोधितवर्धितां कृत्वा मम परमस्नेहभाग्भिः अमृतलालशास्त्रिभिः सा मह्यं प्रदत्ता। पुनस्तां स्वचाञ्चल्येनेतस्ततोऽन्यग्रन्थेभ्योऽपि विषयान् संगृह्य प्रयोगरूपेण संग्रथ्यास्मदीयमण्डलस्थसभ्यानाम् अन्यश्रेष्ठिनाञ्च सहायेन मुद्रापयित्वा विदुषां करकमले निवेदितुमहं समर्थो ज्ञातः। अस्याः संशोधनं तु सादरेणास्मत्स्नेहिवर्यैः तुलजाशङ्करशास्त्रिभिः कृतं तथाचास्याः परमोपकारकर्त्री शास्त्रशिष्टाचारप्रदर्शिका अमृतवर्षिणी टिप्पणी स्वातन्त्र्येणास्मत्सुहृदुत्तमैः अमृतलालशास्त्रिभिः रचिता।

इयं गायत्रीपुरश्चरणपद्धतिस्तु केवलं याज्ञिकानामेवोपकारिका न सामान्यतो गृहस्थाश्रमिणामिति मत्वा केषांचित्सज्जनानां सूचनेन परमसंतुष्टेन मया तदनुसारेणास्मत्स्नेहिवर्यैः "शास्त्री तुलजाशङ्कर धीरजराम पंड्या" इत्येतैः कृतेन गुर्जरभाषान्तरेण समेतया रुद्राष्टाध्याय्या सहितो गृहस्थाश्रमिणामुपकारकः प्रातःसन्ध्यादिः शयनान्तो नित्यकर्मप्रयोगोऽपि सार्थः सूक्ष्मतया परिशिष्टप्रकरणरूपेण दत्तः। मन्ये यतोऽयं ग्रन्थो केवलं याज्ञिकानां न किंतु सर्वसामान्यद्विजातीनामुपयोगितानन्दं वहेत्। एवं कृतेऽपि यथाशक्ति प्रयत्ने "गच्छतः स्खलनं क्वापि भवत्येव" इति न्यायेन अस्मां प्रमादा विदुषां दृष्टिपथमायाग्रुश्चेत् ते क्षाम्यन्तु तत्रभवन्त इति संप्रार्थ्य पुनरपि वच्मि यन्ममोपरि सहजस्नेहेन बद्धहृदयानाम् अमृतलालशास्त्रिणां ततोऽप्यधिकतया तुलजाशंकरशास्त्रिणाश्चाजन्म ऋणानुबद्धोऽहं न पारये प्रत्युपकारं कर्तुम् इत्युक्त्वा जगदम्बिकां गायत्रीदेवीं च संप्रार्थ्य विरमे॥ विदुषामनुचरः

(जीवणराम जीवुमहाराज ) भाणजी शर्मा.

# ॥ श्रीगायत्रीपुरश्चरणपद्धतिविषयानुक्रमणिका ॥


| विषयाः | पत्राङ्काः |
|---|---|
| १ प्रास्ताविकम् .... .... | १ |
| २ किंचिन्निवेदनम् .... .... | ५ |
| ३ श्रीगायत्रीपुरश्चरणपद्धति- .... विषयानुक्रमणिका.... .... | ७ |
| १ मङ्गलाचरणम् .... .... | १ |
| २ भूम्यादिदेवानामावाहनं पूजनश्च | ,, |
| ३ कुण्डमण्डपादीतिकर्तव्यता.... | ३ |
| १ वेदीमानकुण्डमानादिकं संक्षेपतः ... | ,, |
| २ मण्डपसहितो नवपंचैककुण्डीपट्टः | ६ |
| ३ कुण्डरचनाप्रकारः . ... ... | ७ |
| ४ प्राच्योदीच्याङ्गसहितः प्रायश्चित्तप्र० | ८ |
| १ प्रायश्चित्तकथनम्-२ पुस्तकपूजनम् | ९ |
| ३ प्रायश्चित्तम्-४ दशविधस्नानम् ... | १० |
| ५ प्रायश्चित्ताङ्गविष्णुपूजनप्रयोगः ... | १२ |
| ६ गोदानादिपूर्वोत्तराङ्गसहितः प्रायश्चित्तहोमः ... ... ... | १७ |
| ७ उत्तराङ्गप्रायश्चित्तम् ... ... | २२ |
| ८ नूतनयज्ञोपवीतधारणविधिः ... | २४ |
| ५ गायत्रीपुरश्चरणमुहूर्तादिकम् | २६ |
| १ धृतानां ब्राह्मणानां धर्मा लक्षणानि च | ,, |
| २ पुरश्चरणलक्षणं युगधर्मेन न्यूनाधिकजपसंख्याप्रकारश्च ... ... | २७ |
| ३ गायत्रीपुरश्चरणभेदा होमद्रव्याणि च | ,, |
| ६ कर्मारंभप्रतिबन्धकनिर्णयसंग्रहः | २८ |
| १ कर्मारम्भप्रतिबन्धकनिमित्तनिर्णयः | ३० |
| ७ श्रीगायत्रीपुरश्चरणप्रयोगारम्भः | ३५ |
| १ शिखाबन्धनादिकम् ... ... | ३६ |
| २ मन्त्रसूक्तम् ... ... ... | ,, |
| ३ देवतानमस्कारः ... ... | ३७ |
| ४ प्रधानमङ्गलः ... ... | ,, |
| ५ दिग्रक्षणम् ... ... ... | ३९ |
| ६ भैरवनमस्कारादि ... ... | ,, |
| ८ गणपतिपूजनम् .... .... | ४१ |
| ९ पुण्याहवाचनप्रयोगः .... | ४५ |
| १० गौर्यादिचतुर्दशमातॄणां पूजनप्र० | ५६ |
| १ गौर्यादिचतुर्दशमातॄणां कोष्टकम् | ,, |
| ११ श्र्यादिसप्तवसोर्द्धारादेवतापूजनप्रयोगः .... .... | ६१ |
| १ श्र्यादिसप्तवसोर्द्धारादेवतानां कोष्टकम् | ,, |
| १२ वैश्वदेवसङ्कल्पः .... .... | ६३ |
| १३ आयुष्यमन्त्रजपः .... .... | ,, |
| १४ साङ्कल्पिकनान्दीश्राद्धप्रयोगः | ६४ |
| १५ आचार्याद्यृत्विग्वरणप्रयोगः | ६९ |
| १६ वरणश्राद्धम् .... .... | ७३ |
| १७ आचार्यादीनां मधुपर्कार्चनप्रयो० | ७४ |
| १ आचार्यादिपूजनपूर्वकप्रार्थनाप्रयोगः | ७८ |
| १८ मण्डपप्रवेशपूर्वकदिग्रक्षणम् | ७९ |
| १९ पञ्चगव्यकरणम् .... .... | ८१ |
| २० वास्तुमण्डलदेवतापूजनप्रयोगः | ८२ |
| १ वास्तुपीठस्य चतु:षष्टिकोष्टात्मकं मंडलम् | ८४ |
| २ वास्तुमण्डलदेवतास्थापनम् ... | ,, |
| ३ ब्रह्मादीनां पायसबलिदानम् ... | ९६ |
| (२०-शिख्यादिवास्तुमण्डलदेवतापूजनप्रयोगः ... ... | ९८ |
| १ चतुःषष्टिपदवास्तुमंडलम्) ... | ,, |
| २१ योगिनीदेवतापूजनप्रयोगः | १०० |
| १ चतुःषष्टियोगिनीमंडलम् ... ... | १०१ |
| २ महाकाल्यादीनां स्थापनम् ... | ,, |
| ३ योगिनीनां स्थापनम् ... ... | १०२ |
| २२ क्षेत्रपालदेवतापूजनप्रयोगः | ११४ |
| १ क्षेत्रपालमण्डलम् ... ... | ,, |
| २३ जलपात्रप्रयोगः .... .... | १२४ |
| १ मण्डले भूमिपूजनम् ... ... | १२५ |
| २ रुद्रकल्पद्रुमोक्तः षोडशकलशस्थापनपूजनप्रयोगः ... | १२७ |
| ३ जलजीवस्थलमातृकादीनां कोष्टकानि | ,, |

| विषयाः | पत्राङ्काः |
|---|---|
| ४ सप्तजलादिमातृकाणां सागराणां च पूजनप्रयोगः ... ... ... | १३० |
| ५ इन्द्रादीनां पूजनपूर्वकबलिदानप्रयोगः | १३२ |
| ६ जलाशयस्थितजले वरुणावाहनं पूजनञ्च | १३५ |
| २४ सर्वतोभद्रमण्डलदेवतानां स्थापनपूजनप्रयोगः .... | १४० |
| १ सर्वतोभद्रमण्डलम् ... ... | ,, |
| २५ ( पात्रासादनपूर्वक ) श्रीगायत्रीदेवीपूजनप्रयोगः .... | १५१ |
| १ भूशुद्ध्यादिमहान्यासान्तं कर्म | ,, |
| २ भूशुद्धिः ... ... ... | १५४ |
| ३ भूतशुद्धिः ... ... ... | १५७ |
| ४ प्राणप्रतिष्ठाप्रयोगः ... ... | १६० |
| ५ अजपाजपसङ्कल्पः ... ... | १६२ |
| ६ अन्तर्मातृकान्यासः ... ... | १६४ |
| ७ बहिर्मातृकान्यासः ... ... | १६५ |
| ८ गायत्रीमहान्यासाः ... ... | १६७ |
| ९ गायत्रीदेव्या बहिःपूजा ... | १७५ |
| १० पात्रासादनम् ... ... | ,, |
| ११ पूजारम्भः ... ... ... | १८७ |
| १२ श्रीगायत्रीयन्त्रम् ... ... | १८८ |
| १३ श्रीगायत्रीकवचम् ... ... | २०१ |
| १४ तान्त्रिकस्तोत्रम्– १५ श्रीसूक्तम् ... | २०२ |
| १६ आवरणादिपूजा ... ... | २०५ |
| १७ श्रीगायत्रीदेवीनीराजनम् ... | २१८ |
| १८ श्रीगायत्रीमन्त्रनित्यजपविधिः | २२४ |
| २६ कुण्डस्थदेवतापूजनप्रयोगः .... | २२७ |
| २७ अग्निप्रतिष्ठापनप्रयोगः .... | २२९ |
| २८ वैकल्पिकपदार्थावधारणादिकम् | २३१ |
| २९ नवग्रहादिस्थापनपूजनप्रयोगः | २३३ |
| १ नवग्रहस्थापनम् ... ... | ,, |
| २ अधिदेवतास्थापनम् ... ... | २३५ |
| ३ प्रत्यधिदेवतास्थापनम् ... ... | २३६ |
| ४ पञ्चलोकपालस्थापनम् ५ क्षेत्राधिपतेर्वास्तोष्पतेर्दशदिक्पालानाञ्च स्थापनम् | २३७ |
| ३० कुशकण्डिकाप्रयोगः .... | २४२ |
| ३१ नवग्रहादीनां होमः .... | २४६ |
| ३२ प्रधानहोमः ... .... | ,, |
| ३३ तर्पणप्रयोगो मार्जनप्रयोगश्च | २४७ |
| ३४ स्थापितदेवतानां होमः .... | २४८ |
| १ वास्तुमंडलदेवतानां होमः ... | २४९ |
| २ चतुःषष्टियोगिनीनां होमः ... | २५० |
| ३ क्षेत्रपालदेवतानां होमः ... ... | २५१ |
| ४ सर्वतोभद्रमण्डलदेवतानां होमः ... | २५२ |
| ५ गायत्र्याः पीठयन्त्रदेवतानां होमः | २५३ |
| १ पीठदेवतानां होमः– २ यन्त्रदेवतानां होमः | ,, |
| ३५ उत्तरतन्त्रारम्भः-फलादीनां होमः | २५५ |
| ३६ स्थापितदेवतानाम् उत्तरपूजनम् | २५६ |
| ३७ सर्वप्रायश्चित्तनवाहुतयः .... | २५८ |
| ३८ दिक्पालादिस्थापितदेवतानां बलिदानम् .... .... .... | २५९ |
| १ दशदिक्पालबलिः ... ... | ,, |
| २ स्थापितदेवतादीनां बलिदानम् ... | २६१ |
| ३९ वसोर्द्धारासमन्वितपूर्णाहुतिहोमादिकम्.... .... .... | २६५ |
| १ पूर्णाहुतिहोमः ... ... | ,, |
| २ वसोर्द्धाराहोमः ( ३ चमकाध्यायः | २६६ |
| ४ अग्निसूक्तम् ५ विष्णुसूक्तम् ... | २६७ |
| ६ शतरुद्राध्यायः ... ... | ,, |
| ७ इन्द्रसूक्तम् ) ... ... ... | २६८ |
| ४० श्रेयःसंपादनादिकम् .... | २६९ |
| ४१ यज्ञान्तो महाभिषेकः .... | २७१ |
| ४२ अवभृथस्नानविधिः .... | २७४ |
| ४३ घृतपात्रदानादिकम् .... | २७६ |
| ४४ देवताविसर्जनं पीठादिदानञ्च | ,, |
| ४५ त्रैपात्मकपुण्याहवाचनम् .... | २७७ |
| ४६ श्रीगायत्रीस्तवराजः .... | २७८ |
| ४७ ग्रन्थकर्तुः संभावना .... | २८० |
| ४८ परिशिष्टम् .... .... .... | १ |
| १ प्रात सन्ध्यादिनित्यकर्मप्रयोगः ... | १ |
| २ श्रीमहिम्न-स्तोत्रम् ... ... ... | २१ |
| ३ जयशंकरस्तोत्रम् ... ... ... | २४ |
| ४ रुद्राष्टाध्यायी (गुर्जरभाषानुवादसहिता) | १ |

॥ श्रीजगद्धात्र्यै श्रीगायत्रीदेव्यै नमः ॥



मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गदां
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

## ॥ अथ गायत्रीपुरश्चरणपद्धतिप्रारंभः ॥



॥ श्रीगणेशाय नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीसरस्वत्यै नमः ॥
श्रीभद्रकाल्यै नमः ॥ श्रीकुलदेव्यै नमः ॥

॥ अथ गायत्रीपुरश्चरणपद्धतिर्लिख्यते ॥ तत्रादौ मंगलाचरणम् ॥

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयांकुशकशाशुभ्रं कपालं गुणं शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ प्रणम्य पार्वतीनाथं विष्णुं सूर्यं तथाऽम्बिकाम् । गणेशं विघ्नहर्तारं गुरूणां चरणाम्बुजम् ॥ १ ॥ ओझावटंकविख्यातः कच्छमांडविसंभवः ॥ भाणजीतनुजो विद्वत्पुष्कर्णाज्ञात्यलंकृतः ॥ २ ॥ विद्वत्संगमसंप्राप्तकिञ्चिज्ज्ञानामृताप्लुतः ॥ नाम्ना जीवणरामोऽहमात्मनस्तुष्टिहेतवे ॥ ३ ॥ ग्रन्थान्तरेभ्य उद्धृत्य कुसुमेभ्यो यथा मधु ॥ रम्यां ग्रथ्नामि गायत्रीपुरश्चरणपद्धतिम् ॥ ४ ॥ अङ्गीकुर्वन्तु तां सन्तो विद्वांसो हंसवन्मुदा ॥ नीरक्षीरविवेकेन वेति संप्रार्थये सदा ॥ ५ ॥

---

॥ अथ भूम्यादिदेवानामावाहनं पूजनञ्च ॥

तत्र प्रथमं कुंडमंडपार्थे भूम्यादीनामावाहनं पूजनञ्च ॥ तत्र शुभेऽह्नि यजमानश्चंद्रसूर्यतारादिबलान्विते सुमुहूर्ते मंडपं कर्तुं यथोचितं मार्जनदहनखननसंप्लावनादिभिः स्मृत्युक्तैः शोधनोपायैर्भूमिं संशोध्य तत्र निर्विघ्नतासिद्ध्यर्थं वरुणपूजनादिगणपतिपूजनान्तं कर्म कृत्वा पञ्चवाक्यैः संपूर्णं वा पुण्याहवाचनञ्च विधाय भूम्यादीनां पूजनं कुर्यात् । तण्डुलैस्त्रीन्पुञ्जान् कृत्वा तदुपरि पूगीफलानि निधाय तत्र वसुधां कूर्मं शेषं चावाह्य पूजयेत् । तद्यथा—आचम्य प्राणानायम्य देशकालौ स्मृत्वा अद्य गायत्रीपुरश्चरणोपयोगिकरिष्यमाणमंडपादीनां निर्विघ्नतासिद्ध्ये पृथिव्यादीनां पूजनमहं करिष्ये ॥ इति संकल्प्य अक्षतैरावाहयेत् ॥

तत्र प्रथमपुंजे भूम्यावाहनं कुर्यात् ॥ ॐ भूरसिभूमिरस्यदितिरसि विश्वधायाविश्वस्यभुवनस्यधर्त्रीं । पृथिवीय्यँच्छपृथिवीन्दृँहपृथिवीम्माहिँसीः । १३।१८ ॥ ॐ भू० भूम्यै नमः भूमिम् आवाहयामि स्थापयामि । अंजलिं बद्ध्वा

---

१ कलशस्थापनोक्तमंत्रैः कलशस्थापनं विधाय चतुरो ब्राह्मणान् एकं वा वृत्वा यजमानो वदेत्—भो ब्राह्मणाः । मम० इत्यादिकं पूर्ववदुक्त्वा करिष्यमाणगायत्रीपुरश्चरणार्थं भूम्यादीनां पूजनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । अस्तु पुण्याहम् ॥ एवमेव कल्याणम्, ऋद्धिम्, स्वस्ति, श्रीरस्तु, इति पञ्चवाक्यानि वदेत् ॥

प्रार्थयेत् ॥ शेषमूर्ध्नि स्थितां रम्यां नानासुखविधायिनीम् ॥ विश्वधात्रीं महाभागां विश्वस्य जननीं पराम् ॥ १ ॥ यज्ञभागं प्रतीक्षस्व सुखार्थं प्रणमाम्यहम् ॥ तवोपरि करिष्यामि मंडपं सुमनोहरम् ॥ २ ॥ क्षंतव्यं च त्वया देवि सानुकूला मखे भव ॥ निर्विघ्नं मम कर्मेदं यथा स्यात्त्वं तथा कुरु ॥ ३ ॥ ततो द्वितीयपुञ्जे कूर्मावाहनम् ॥ ॐ यस्यकूर्मो गृहेहुविस्तमंग्ने वर्धया त्वम् ॥ तस्मैं देवाऽअधिब्रुवन्नयञ्च ब्रह्मणस्पतिः ॥ ३३ ॥ ॐभू० कूर्माय नमः कूर्मम् आवाहयामि स्थापयामि । ततस्तृतीयपुञ्जे शेषावाहनम् ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्मसप्रथाः ॥ ३६ ॥ ॐभू० अनंताय नमः अनन्तम् आवाहयामि स्थापयामि ॥ इत्यावाह्य । ॐ भूर्भुवः स्वः भूमिकूर्मानन्तदेवेभ्यो नमः गन्धाक्षतपुष्पाणि समर्पयामि इति संपूजयेत् । सत्यवकाशे षोडशोपचारैः पूजनं कार्यम् ॥ अथ विश्वकर्मपूजनम् ॥ ॐ विश्वकर्म्मन्हुविषावर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम् ॥ तस्मैविशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथा सत् ॥ उपयामगृहीतोसीन्द्रायत्वा विश्वकर्म्मणऽएषतेयोनिरिन्द्रायत्वा विश्वकर्म्मणे ॥ ८६ ॥ ॐभू० विश्व० आ० स्था० । इत्यावाह्य । ॐभू० विश्वकर्मणे नमः इति गंधाक्षतपुष्पैः संपूज्य नमस्कारं कुर्यात् ॥ ततः सूत्रकारपूजनम् ॥ तं गंधाक्षतपुष्पैः संपूज्य नमस्कारः ॥ ततो गजपूजनम् ॥ तद्यथा–हस्ते अक्षतान् गृहीत्वा तत्र देवानावाहयेत् ॥ ॐ भू० महादेवाय नमः महादेवमावाहयामि स्थापयामि ॥ १ ॥ ॐ भू० वायवे नमः वायुमा० ॥ २ ॥ ॐभू० विश्वेभ्यो देवेभ्यो नमः विश्वान् देवाना० ॥ ३ ॥ ॐ भू० अग्नये नमः अग्निमा० ॥ ४ ॥ ॐभू० ब्रह्मणे नमः ब्रह्माणमा० ॥ ५ ॥ ॐभू० सूर्याय नमः सूर्यमा० ॥ ६ ॥ ॐ भू० रुद्राय नमः रुद्रमा० ॥ ७ ॥ ॐ भू० यमाय नमः यममा० ॥ ८ ॥ ॐ भू० विश्वकर्मणे नमः विश्वकर्माणमा० ॥ ९ ॥ ॐ भू० वसुभ्यो नमः वसूना० ॥ १० ॥ ॐ भू० गणेशाय नमः गणेशमा० ॥ ११ ॥ ॐ भू० वरुणाय नमः वरुणमा० ॥ १२ ॥ ॐ भू० स्वामिकार्तिकाय नमः स्वामिकार्तिकमा० ॥ १३ ॥ ॐ भू० इच्छायै नमः इच्छामा० ॥ १४ ॥ ॐ भू० क्रियायै नमः क्रियामा० ॥ १५ ॥ ॐ भू० ज्ञानाय नमः ज्ञानमा० ॥ १६ ॥ ॐभू० कुबेराय नमः कुबेरमा० ॥ १७ ॥ ॐभू० चंद्राय नमः चंद्रमा० ॥ १८ ॥ ॐ भू० जयायै नमः जयामा० ॥ १९ ॥ ॐ भू० वरुणाय नमः वरुणमा० ॥ २० ॥ ॐ भू० वासुदेवाय नमः वासुदेवमा० ॥ २१ ॥ ॐ भू० बलभद्राय नमः बलभद्रमा० ॥ २२ ॥ ॐ भू० कामाय नमः काममा० ॥ २३ ॥ ॐ भू० विष्णवे

नमः विष्णुमा० ॥ २४ ॥ इत्यावाह्य । गजस्थावाहितदेवेभ्यो नमः इति तान् गन्धाक्षतपुष्पादिभिर्यथाविभवं षोडशोपचारैः पञ्चोपचारैर्वा संपूज्य नमस्कारः ॥ ततः खनित्रपूजनम् ॥ त्वष्ट्रा विनिर्मितः पूर्वं लोकानां हितकाम्यया ॥ पूजयामि खनित्र त्वां सिद्धिदो भव मे सदा ॥ इत्यक्षतैरावाह्य । खनित्राय नमः इति तं गंधाक्षतपुष्पैः संपूज्य नमस्कारः ॥ ततो वास्तुपुरुषाय नमः इति वास्तुपुरुषं संपूज्य दशदिक्षु इन्द्रादिदिक्पतीन् संपूज्य भूम्याद्यावाहितेभ्यो दिक्पतिपर्यन्तेभ्यः सर्वेभ्यो देवेभ्य एकस्मिन् पात्रे पृथक् पृथग्वा पायसादिकं बलिं निधाय हस्ते जलं गृहीत्वा भूम्याद्यावाहितदेवेभ्यः अमुं बलिं समर्पयामि इति जलमुत्सृजेत् ॥

॥ इति भूम्यादिदेवानां पूजनम् ॥

## ॥ अथ संक्षेपतः सार्वत्रिकी कुण्डमण्डपादीतिकर्तव्यता ॥

ततो मंडपाद्यर्थं संभारानेकीकृत्य सांगं शास्त्रोक्तमंडपादिकं छायामंडपादिकं वा यथाशक्ति कुर्यात् ॥

अथ मंडपमानेन सह गणपत्यादिदेवतासहितमुख्यदेवतानां वेदीमानं कुण्डमानञ्च संक्षेपतः कथ्यते ॥ सामान्यतो यत्र छायामण्डपः क्रियते तत्र न स्तंभानां मानं नात्र स्तंभार्थं यथोक्तयज्ञियवृक्षादिशाखानाञ्चानयनम् ॥ तत्र तु यन्त्रादिद्वारैव पूर्वदिङ्निश्चयं कृत्वा मंडपार्थं यज्ञकर्तुः पञ्चमांशेन कृतचतुर्विंशत्यङ्गुलहस्तमानेन दशद्वादशचतुर्दशषोडशाष्टादशविंशतिप्रभृतिविहितहस्तमानान्यतरमानं स्वीकृत्य चतुर्विंशत्यङ्गुलोच्चमर्धहस्तोच्चं वा, चतुर्दिक्षु चतुरष्टान्यतराङ्गुलाधिकहस्तद्वयमितचतुर्द्वारोपेतं

१ कुण्डसिद्ध्याम्—ज्ञात्वा पूर्वं धरित्रीं दहनखननसम्प्लावनैः सविशोध्य पश्चात्कृत्वा समाना मुकुरजठरवद्वाचयित्वा द्विजेन्द्रैः । पुण्याहं कूर्मशेषौ क्षितिमपि कुसुमाद्यैः समाराध्य शुद्धे वारे तिथ्यादि कुर्यात्सुरपतिककुभः साधनं मण्डपार्थे ॥५॥ मण्डपकरणात्पूर्वमेव दहनखननसम्प्लावनै-भूमिं संशोध्य सर्वतः आदर्शमध्यसदृशीं धरित्रीं कृत्वा शुद्धे वारे तिथ्यादि पुण्याहं वाचयित्वा कूर्मं शेषं क्षितिञ्च सपूज्य मण्डपार्थे पूर्वदिक्साधनं विधाय मण्डपं विदध्यात् ॥

२ कुण्डसिद्ध्याम्—कृतोर्ध्वबाहो: समभूगतस्य कर्तुः शरांशः प्रपदोच्छ्रितस्य ॥ यो वा स हस्तोऽस्य जिनांशकोऽपि स्यादङ्गुलं तत्तदिभाशका ये ॥ ३ ॥ अनया रीत्या प्रपदोच्छ्रितं समभूमध्यगतं वा कर्तारमूर्ध्वबाहुं कृत्वा तच्चरणादारभ्योर्ध्वबाहोर्मध्यमाङ्गुल्यग्रपर्यन्तं सूत्रेण मानं निष्कास्य तत्सूत्रस्य पञ्चमो भागो हस्तः । तद्धस्तस्य चतुर्विंशतितमो भागोऽङ्गुलम् । तद्धस्तस्यैव कुण्डमण्डपादिषु गणपत्यादिस्थापनेषु च मानं गृह्यते ॥

३ कुण्डसिद्ध्याम्—दश १० सूर्य १२ करो न्मितोऽधमः स्यादिन १२ शक्र १४ प्रमितैः करैस्तु मध्यः ॥ धृति १८ भूप १६ करोन्मितो वरीयानख २० हस्तोऽप्यथ मण्डपस्तुलायाम् ॥ १६ ॥ असिमुक्तानामुत्तममध्यमाधमानां मण्डपहस्तमानानां मध्ये उत्तममध्यमयोर्मध्ये विचार्य मध्यमं मण्डपं कुर्यान्नत्वधमम् ॥

४ कुण्डसिद्ध्याम्—उच्चा भूमि मण्डपस्य प्रकुर्यात् हस्तोन्मानामर्धहस्तोन्मितां वा ॥ मध्ये भूमिं मण्डपेनोन्मिताञ्च रचयित्वा कुर्यान्मण्डपे द्वितीयं ॥ १५ ॥ यत्र प्रतिष्ठादौ मण्डपद्वयं तत्र कृतमण्डपस्य समां भूमिं मध्ये रचयित्वा द्वितीयं मण्डपं कुर्यात् ॥

५ दिगन्तराले द्विकरं भवेद्वा चतुष्टयं वेदगजाङ्गुलैर्वा । विवर्धितं मध्यवरिष्ठयोः स्याद्वेदी त्रिभागेन समा

- मध्यममुत्तमं वा शिखरसहितं ध्वजापताकादियुक्तं मण्डपं विधाय तं वस्त्रादिना पुष्पपल्लवैश्च सुशोभितञ्च कृत्वा तत्रैशान्यां चतुर्विंशत्यङ्गुलोच्चं समचतुरस्रं त्रिवप्रान्वितञ्च गृहस्थापनार्थं गृहपीठम्, आग्नेय्यां चतुर्विंशत्यङ्गुलसमचतुरस्रं द्वादशाङ्गुलोच्चं समातृकं गणपतिपीठं, तदुत्तरे तत्सदृशमेव योगिनीपीठं, नैर्ऋत्यां चतुर्विंशत्यङ्गुलसमचतुरस्रं द्वादशाङ्गुलोच्चं चतुरंगुलोच्चं वा वास्तुपीठं, वायव्यकोणे चतुर्विंशत्यङ्गुलसमचतुरस्रं द्वादशाङ्गुलोच्चं क्षेत्रपालपीठं, तद्दक्षिणे चतुस्त्रिंशदङ्गुलसमचतुरस्रं द्वादशाङ्गुलोच्चं स्नानपीठं (वारुणपीठं), मध्ये मुख्यदेवस्य वेदी चेदुत्तरस्यां दिशि होमसंख्यामानसदृशम् एकद्वित्रिचतुःप्रभृतिहस्तात्मकं वर्णक्रमेण चतुरस्रवृत्तार्धचन्द्रत्र्यस्र-

करोच्चा ॥ १७ ॥ मण्डपस्य पूर्वादिचतुर्दिक्षु चत्वारि द्वाराणि कुर्यात् ॥ मध्यममण्डपे चतुरङ्गुलाधिकचतुस्त्रिंशदङ्गुलप्रमाणानि, उत्तममण्डपे अष्टाङ्गुलाधिकचतुस्त्रिंशदङ्गुलप्रमाणानि चत्वारि द्वाराणि कर्तव्यानि । अधममण्डपे तु चतुस्त्रिंशदङ्गुलप्रमाणानि ज्ञेयानि । मध्ये त्रिभागेन समा हस्तोच्चा वेद्यपि कार्या ॥

१ कुण्डसिद्धयाम् ॥ मध्यभागशिखरं रचयित्वा छादयेदपि कटैर्ऋजुवंशैः । द्वारवर्जमिह मण्डपमेन स्तम्भकानपि सुवस्त्रसमूहैः ॥ २२ ॥

२ कुण्डसिद्धयाम्—ध्वजान् द्विहस्तायतविस्तरांश्च पञ्चहस्तान्सुपीतारुणकृष्णनीलान् ॥ श्वेतासितश्वेतसितान्दिगीशवाहान्वदेद्दिक्करवंशशीर्षे ॥ २८ ॥ पूर्वादिक्रमेणाष्टदिक्षु दशहस्तप्रमाणेषु वंशकाष्ठेषु पूर्वे इन्द्राय पीतवर्णं हस्तिचिह्न ध्वजम्, आग्नेय्याम् अग्नये रक्तवर्णं मेषचिह्न ध्वज, दक्षिणस्यां यमाय कृष्णवर्णं महिषीचिह्नं ध्वज, नैर्ऋत्यां निर्ऋतये श्वेतासितवर्णं (आकाशवर्णं) सिंहचिह्न ध्वज, पश्चिमायां वरुणाय श्वेतवर्णं मत्स्यचिह्न ध्वज, वायव्यां वायवे नीलवर्णं मृगचिह्न ध्वजम्, उत्तरस्यां कुबेराय शुक्लवर्णम् अश्वचिह्न ध्वजम्, ईशान्यामीश्वराय शुक्लवर्णं वृषभचिह्न ध्वजम् । एवं ध्वजान्संस्थाप्य तत्समीपे पूर्वादिक्रमेण दशदिक्षु तत्तद्वर्णयुक्ता दशहस्तायता एकहस्तविस्तृता पताका अपि वज्रशक्तिदण्डखड्गपाशाङ्कुशगदात्रिशूलचिह्नान्विता विधाय पूर्वेशानयोर्मध्ये निर्ऋतिवरुणयोर्मध्ये च श्वेतवर्णयुक्ते पताके क्रमेण ब्रह्मणः पद्मचिह्नान्विताम् अनन्तस्य चक्रान्विताञ्च दद्यात् ॥ मण्डपस्य शिखरेऽपि मुख्यदेवस्य मुख्यायुधचिह्न विधाय प्रान्तगकिङ्किणीसहित चित्रवर्णं दशहस्तवंशयुक्त सप्तहस्तायत मुख्यध्वज दद्यात् ।

३ कुण्डसिद्धयाम्—ईशानभागे गृहवेदिका तु हस्तोन्मितोच्छ्रायवती त्रिवप्रा ॥ १८ ॥

४ कुण्डसिद्धयाम्—शतार्धे रत्निः स्याच्छतपरिमितेऽरत्निविततं सहस्रे हस्तः स्यादयुतहवने हस्तयुगलम् ॥ चतुर्हस्तं लक्षे प्रयुतहवने षट्करमितं ककुब्भिर्वा कोटौ नृपकरमपि प्राहुरपरे ॥ ३५ ॥ अस्य श्लोकस्य भावार्थः । शतार्धाहुतौ एकविंशत्यङ्गुल समचतुरस्र कुण्ड रत्निप्रमाणम् ॥ शताहुतौ सार्धद्वाविंशत्यङ्गुल कुण्डम् अरत्निप्रमाणम् ॥ सहस्राहुतौ चतुर्विंशत्यङ्गुल कुण्ड हस्तप्रमाणम् ॥ अयुतहवने दशसहस्राहुतौ त्रियवाधिकचतुस्त्रिंशदङ्गुल कुण्ड हस्तद्वयप्रमाणम् ॥ लक्षाहुतौ अष्टचत्वारिंशदङ्गुल कुण्ड चतुर्हस्तप्रमाणम् ॥ दशलक्षाहुतौ पञ्चयवाधिकत्रिपञ्चाशदङ्गुल कुण्ड षड्हस्तप्रमाणम् ॥ षड्यवाधिकाष्टपञ्चाशदङ्गुल षड्हस्तप्रमाणम् ॥ चतुर्यवाधिकत्रिषष्ट्यङ्गुल ...हस्तप्रमाणम् ॥ कोट्याहुतौ सप्तयवाधिकसप्तषष्ट्यङ्गुल कुण्डम् अष्टहस्तप्रमाणम् (मूले १७ तमे श्लोके षड्हस्तकुण्डे मतं तद्विचारणीयम्) ॥ द्विसप्तत्यङ्गुल नवहस्तप्रमाणम् ॥ सप्तयवाधिकपञ्चसप्तत्यङ्गुल दशहस्तप्रमाणम् ॥ परन्तु यत्र कोट्याहुतिप्रकारे विहाय कोटिहस्तं कुण्ड कथयन्ति तत्र पूर्वस्यैव एव ज्ञेयम् ।

५ कुण्डसिद्धयाम्—वेदाग्नि २४ गुणाभ्र ३० शशिगुणा ४१ न्यष्टाभय ४८ बीरवोट ५१ शाशा ५८ वह्निरसा ६३ रसाष्टमिता ६८ नेत्रर्षयो ७२ ऽध्वरा ७५ ॥ अङ्गुल्योऽथ यवा च ० भ ३० मित ५ वे० ४ च ५ षट् ६ शराः ४ शराः ७ ख ० मुनय ७ स्वमी निर्गदिता वेदास्त्रं वादयः ॥ ३७ ॥

६ कुण्डसिद्धयाम्—त्रिज्यादशांशलक्षमं ... कुण्डं ... मा ... भिस्त्रि ॥ सर्वेष्वाहुतिसंख्यानि चार्ये कोटिदावायन्दानन्तां तु स्याः ॥ ११ ॥ सर्वत्र हस्तवदस्य रत्नपृत्यसमावयमूलादिवहस्तप्रमाणानि कुण्डानि

>

योन्यादिकं कुण्डं कुर्यात्॥ अथ यत्र विशेषतया दिग्विधानं कुण्डकरणार्थं मुख्यदेवतास्थापनार्थञ्च निर्दिष्टं तत्र तथैव मुख्यदेवतास्थापनं कुण्डञ्चापि विदध्यात्॥ यथा विष्णुयागे मध्यवेदी कथिता तत्रोत्तरस्यामेव कुण्डम्॥ तथैव श्रीमहारुद्रस्येशान्यामेव वेदी विहिता तत्र नियततयेशान्यां गृहवेद्या उक्तत्वेऽपि सा श्रीमहारुद्रवेद्या दक्षिणे कार्या न त्वीशान्याम्॥ यत्र देव्युद्देशेन होमः क्रियते तत्र देव्या मध्यवेदी चेत् कुण्डविधानमुत्तमपक्षे पश्चिमस्यां दिशि गौणपक्षे उत्तरस्यां दिशि ज्ञेयम्॥ परञ्च यत्र देव्यादावपि मण्डपस्य मध्य एव कुण्डकरणेच्छा चेत् तत्र देव्याः पीठं कुण्डमानसदृशं समचतुरस्रं वप्रान्वितं पूर्वस्यामीशान्यां वा कर्तव्यम्॥ तथैव श्रीमहारुद्रे[1]ऽपि कृते न दोषः॥ देवतोद्देशेन विशेषतया मुख्यदेवस्य दिशि विधीयमानायामपि गणपत्यादीनां पीठानि पूर्ववदेव तत्र तत्र कर्तव्यानीति नात्र कुत्रापि व्यत्ययः॥ गायत्रीपु[2]रश्चरणेऽपि यदा गायत्र्याः स्थापनं मण्डपस्य मध्य एव वेदीं विधाय कृतञ्चेत्तत्रापि मुख्यपक्षे पश्चिमदिशि गौणपक्षे उत्तरस्यां दिशि कुण्डमुचितम्। पञ्चकुण्डीपक्षे नवकुण्डीपक्षे तु मध्य एव मुख्यदेवतानां स्थापनार्थं वेदी भवति। अस्माकमभिप्रायस्तु गायत्रीपुरश्चरणेऽपि गायत्र्यर्थवाचके भगवतः श्रीसूर्यनारायणस्यैवोपासनायाः सत्त्वात्तत्रापि गायत्र्याः स्थापनमीशान्यां पूर्वस्यां दिशि वा कुण्डविधानं मध्य एवोचितम्॥ एवं गणपत्यादीनां पीठानि कृत्वा मुख्यदेवस्यापि यथो[3]क्तस्थले वेदीं कुर्यात्॥ एवमस्माभिर्दिङ्मात्रं प्रदर्शितम्। एवं सत्यपि विद्वद्भिर्विद्वद्भ्यो यद्रोचते तद्विचार्य कार्यं वयं तु सर्वे गतानुगतिका बहुधेति दिक्॥

---

कर्तव्यानि। तत्र तु स्वबुद्ध्यैव व्यवस्था॥ द्विजातीनामपि कुण्डरत्नावलीकुण्डार्ककुण्डप्रदीपाद्यनेककुण्डमण्डपप्रतिपादकग्रन्थेषु कामनाभेदेन तत्तद्देवताभेदेन च कुण्डानां भिन्नभिन्नरचनाप्रकार उक्तः॥ तत्र तत्र तथा विधेयमिति दिक्॥ सर्वेषां वृत्तमपि श्रेष्ठम्॥ स्त्रीस्त्रैके तु सर्वथा योनिकुण्डमेव कुर्यात् शास्त्रस्य विशेषवचनप्रामाण्यात्॥

१ अथ पक्षस्तु महारुद्रे क्वचिदेव भवति तस्या वेद्यास्तु सर्वथैवेशान्यां विहितत्वात्॥

२ एककुण्डे तु पश्चिमे उत्तरे ईशाने वा कुण्डं कुर्यात्॥

३ अथ मुख्यदेवतावेदीप्रमाणम्॥ क्रियासारे। त्रिभागं मण्डपं कृत्वा मध्यभागस्तु वेदिका॥ यथा पूर्वपश्चिमोदग्दक्षिणत्रिनिसूत्रैः त्रिभागं मण्डपं कृत्वा मध्ये यो मण्डपनवमांशो भागस्तत्प्रमाणा हस्तोच्छ्रा मध्यवेदी कार्या॥ तत्र प्रमाणम्॥ हस्तमात्रं तदुत्सेधं चतुरस्रं समं ततम्॥ परञ्च यदेशान्यां पूर्वस्यां वा वेदीकरणं स्यात् तदा कुण्डमानहस्तोच्छ्रा तत्समचतुरस्रा मुख्यदेवस्य वेदी कार्या। यथैकहस्ते चतुर्विंशत्यङ्गुलविस्तृतोच्चा तथैव द्वित्रिचतुःप्रभृतिहस्तेषु तत्तद्धस्तप्रमाणं ज्ञेयम्॥

॥ श्रीदः शरणम् ॥

# मंडपसहितो नवपंचैककुण्डीपट्टः ।*

## ( कुण्डार्कसमनुसारी. )




*अत्रेयं संप्रदायप्रतिपत्तिः—अनेनैव नवकुण्डीपट्टे विदिक्स्थकुण्डानि वर्जयित्वा ईशान्यामष्टास्रस्थाने चतुरस्रे कृते पंचकुण्डीपट्टः। तथा चतुरस्रं पद्मं वृत्तं वा नवकुण्डानामन्यतमं वा किंचनैकमेव कुण्डं मध्ये प्रधानवेदिस्थाने कर्तव्यं वा एवं चैककुण्डीपट्टो भवति ॥ इति ॥ (गायत्रीपुरश्चरणपद्धतिः)

## ॥ अथ कुण्डरचनाप्रकारः ॥

विदन्तु विद्वांसो यत् प्रायो वर्णक्रमेण ब्राह्मणानां चतुरस्रं कुण्डं प्रशस्तम् ॥ तस्मात्पूर्वमाहुतिमानसदृशं सर्वत्र यज्ञकर्मणि एकद्वित्रिचतुर्हस्ताद्यन्यतरहस्तमानं स्वीकृत्य मण्डपे यथोक्तस्थले चतुरस्रं कुण्डं विधेयम् ॥ पूर्वोक्तरीत्या कर्तुः पञ्चमांशं निष्कास्य तत्प्रमाणायां काष्ठपट्टिकायां समाँश्चतुर्विंशतिभागान्विरच्य हस्तः कार्यः ॥ स एव चतुर्विंशत्यङ्गुलाख्यो हस्तशब्देन व्यवह्रियते ॥ तस्य चतुर्विंशतितमो भागोऽङ्गुलम् ॥ यथा लक्षाहुतावष्टचत्वारिंशदङ्गुले चतुर्हस्ते कर्तुः पञ्चमांशेन कृतहस्तस्य चतुर्विंशतितमभागाङ्गुलप्रमाणानि यस्यां पट्टिकायाम् अष्टचत्वारिंशदङ्गुलानि स्युस्तत्प्रमाणायां काष्ठपट्टिकायां सौकर्यार्थं समप्रमाणानि चतुर्विंशत्यङ्गुलानि कृत्वा हस्तः कार्यः । तद्धस्तेनैव सर्वत्र तद्धस्तप्रमाणं समचतुरस्रं सक्षेत्रसमखातं क्रमेणोपरितश्चतुस्त्रिद्व्यङ्गुलप्रमाणत्रिमेखलान्वितं सकण्ठं सनाभि सयोनि कुण्डं कुर्यात् ॥

---

१ सर्वत्र कुण्डे कुंडप्रमाणहस्तस्य चतुर्विंशतितमो भागोऽश. । उक्तं च कामिके—कुण्डाना यश्चतुर्विंशो भागः सोऽङ्गुलसञ्ज्ञक. ॥ विभज्यानेन कर्तव्या मेखलाकुण्डनाभयः । तथैव सिद्धान्तशेखरेऽपि—चतुर्विंशतितमो भागोऽगुलं स्मृतम् ॥ तथैव वास्तुशास्त्रेऽपि ॥ यावन्मात्रकृतं कुण्डं तावद्धस्तं प्रकल्पयेत् ॥ कारयेत्तत्करेणैव चतुर्विंशाङ्गुलेन तु ॥

२ कुंडसिद्ध्याम्–खातं क्षेत्रसमं प्राहुरन्ये तु मेखला विना ॥ कण्ठो जिनांशमानस्यादर्कांश इति चापरे ॥ ४८ ॥ अस्यायं भावार्थः ॥ कुण्डकरणार्थं हस्तमानसदृशं समचतुरस्रं सक्षेत्रसमखातं ( गर्तं ) कृत्वा एकाङ्गुलप्रमाणं द्व्यङ्गुलप्रमाणं वा कुण्डे कण्ठं विदध्यात् ॥ परञ्चान्ये विद्वांसो मेखलार्थं नवाङ्गुलानि त्यक्त्वा हस्तस्यावशिष्टपञ्चदशाङ्गुलप्रमाणं गर्तं कर्तव्यमिति वदन्ति ॥ तत्सर्वं होमद्रव्यस्य स्थूलसूक्ष्मप्रमाणेन बोध्यम् ॥ अर्थात् पूर्वोक्तरीत्या कृतहस्तस्य पञ्चदशाङ्गुलप्रमाणं चतुर्विंशत्यङ्गुलप्रमाणं वा कुण्डे सर्वत्र खातं कर्तव्यम् ॥

३ कुण्डसिद्ध्याम्–अधमा मेखलैका स्यान्मध्यमं मेखलाद्वयम् । श्रेष्ठास्तिस्रोऽथवा द्वित्रिपञ्चस्वधमतादिकम् ॥ ४९ ॥ अयं भावार्थः । एकमेखलाविशिष्टं कुण्डम् अधमम् । द्विमेखलाविशिष्टं कुण्डं मध्यमम् ॥ त्रिमेखलाविशिष्टं कुण्डम् उत्तमम् ॥ तथैव मेखलाद्वयविशिष्टम् अधमम् । मेखलात्रयविशिष्टं मध्यमम् ॥ पञ्चमेखलाविशिष्टं कुण्डम् उत्तमम् ॥ परञ्च प्रायः सर्वत्र कुण्डे तिस्र एव मेखलाः क्रियन्ते ॥ प्रथमा मेखला चतुरङ्गुलोच्चविस्तृता । द्वितीया त्र्यङ्गुलोच्चविस्तृता । तृतीया द्व्यङ्गुलोच्चविस्तृता कार्या । एवं कुण्डकण्ठतः नवाङ्गुलोच्चा नवाङ्गुलविस्तृता मेखला चतुरस्रादिसमग्रकुण्डे कुण्डाकारा विधेयेत्यर्थ. ॥ सर्वत्र नाभिरपि कुण्डस्य मध्ये कुण्डाकारा पद्माकारा वा निवेश्या । परञ्च पद्मकुण्डे नाभिः योनिकुण्डे योनिश्च न विधेया ॥ तत्र प्रमाणम् ॥ शारदातिलके–कुण्डाना कल्पयेदन्तर्नाभिमम्बुजसन्निभाम् । तत्कुण्डाद्यनुरूपा वा मानमस्य निगद्यते ॥ मुष्टिकरत्नहस्तानां नाभिरुत्सेधतो मता ॥ नेत्रवेदाङ्गुला चापि पद्मे नाभिं च वर्जयेत् ॥ सा नाभिः चतुरङ्गुलविस्तृता द्व्यङ्गुलोच्चा कुंडानुरूपैव कर्तव्येत्यर्थ. ॥

४ योनिरपि कुण्डस्य मेखलायामुपरिभागे निवेश्या । तस्याः प्रकारोऽपि कुण्डसिद्ध्याम्–योनिर्व्यासार्धदैर्घ्या विततिगुणलवादायताग्रिद्विभागा तुंगा तावत्समंतात्परिधिरुपरिगा तावदग्रेण रम्यम् ॥ निम्ने कुण्डं विशंती वलयदलयुगेनान्विताऽधोविशाला मूलात्सच्छिद्रनालान्तरवटरुचिराऽश्वत्थपत्राकृतिर्वा ॥ ५४ ॥ अयं निष्कर्ष. ॥ संख्यार्थम् अष्टचत्वारिंशदङ्गुलचतुर्हस्तस्य कण्ठनाभिमेखलार्थं कृतचतुर्विंशाङ्गुलहस्तव्यासस्यार्धां द्वादशाङ्गुल-

अथ गायत्र्याः पीठम् ॥ प्रायो लोके जपप्रधानकं कर्म, होमप्रधानकं कर्म, उभयात्मकञ्च कर्म दृश्यते । तथा श्रीमहारुद्रादौ अभिषेकात्मकमपि कर्म दृश्यते॥ इति कृत्वा कुण्डदर्पणकारेण—"होमप्रधानके कुण्डे चतुःस्तंभान्तरे खनेत् ॥ अन्यत्र मध्ये वेदी स्याच्चतुःस्तंभान्तरायता" इति वचनानुरोधादेव श्रीमहारुद्रादौ होमप्रधानके मध्ये कुण्डं क्रियते। परञ्च गायत्रीपुरश्चरणस्य तु सर्वथा जपप्रधानकत्वात् गायत्र्या वेदीमध्ये एव कार्येति संबुध्यते ॥ तथैव यत्रैककुण्डं क्रियते तत्र तत् ईशान्याम् उत्तरस्यां पश्चिमायां वेति कुण्डसिद्धावेव प्रतिपादितम् ॥ यथा—चैकं यदा पश्चिमसोमशैवे ॥ इति दिक् ॥

॥ इति संक्षेपतः सार्वत्रिकी कुण्डमण्डपादीतिकर्तव्यता ॥

## ॥ अथ प्राच्योदीच्याङ्गसहितः प्रायश्चित्तप्रयोगः ॥

अथ गायत्रीपुरश्चरणं चिकीर्षुर्यजमानो तदधिकारार्थं गायत्रीपुरश्चरणप्रारम्भदिनात्पूर्वं कस्यांचिद्रिक्तायां तिथौ पूर्वदिने तद्दिने वा स्वपापक्षयपूर्वकमात्मशुद्ध्यर्थं प्रायश्चित्तं कुर्यात् ॥ तद्यथा—संभृतप्रायश्चित्तद्रव्यसंभारो यजमानो नद्यादौ कृतस्नानो सश्रद्धो वेदधर्मशास्त्रविदां वेदविदां वा चतुरस्त्रीन् वाऽध्यात्मविदो विप्रान् एकं वा पर्षत्त्वेनोपवेश्य स्वयं प्रायश्चित्ती आचमनं प्राणायामञ्च विधाय देशकालौ संकीर्त्य करिष्यमाणप्रायश्चित्तांगतया सचैलं स्नानं करिष्ये। इति संकल्प्य। सपत्नीकः स्नानं विधाय क्लिन्नवासाः पर्षदः समीपं गत्वा तां प्रदक्षिणीकृत्य हृदयेन दूयमानः पर्षदं साष्टाङ्गं प्रणमेत् ॥ ततस्तैः 'किं ते कार्यं? मिथ्या मावादीः सत्यमेव वद' इत्यादौ पृष्टे पर्षदग्रे प्रत्येकं गोवृषयोः प्रत्याम्नायत्वेन यथाशक्ति सुवर्णरौप्ययोर्निष्कं तदर्धं

दैर्घ्यां व्यासस्य तृतीयभागाम् अष्टाङ्गुलविस्तृताम् एकाङ्गुलोच्चा सच्छिद्रा नितम्बभागे एकाङ्गुलोच्चाञ्च ( अश्वत्थपत्राकृतिं ) योनिं विधाय कुण्डस्याद्यमेखलायां कुण्ड विशन्तीं मूलतोऽपि सच्छिद्रामेकाङ्गुलनालां कृत्वा निदध्यात् ॥ योन्याः—योनिमध्यगतं स्निग्धं तुङ्गं पृथुकराङ्गुलम् ॥ मृत्पिण्डं द्वितयं तस्याः पार्श्वे वा कुम्भिकुंभकम् ॥ एवं तां कोष्ठार्धमध्यगां कृत्वा तत्र द्वौ मृत्पिण्डावपि निवेश्यौ ॥ एवं सर्वत्र एकद्वित्र्यादि प्रभृतिहस्तैश्चतुरस्रादि कुण्डं कुण्डमध्ये एकाङ्गुलं कण्ठं परितो विसृज्य नवाङ्गुलविस्तृतोच्चमुपरितश्चतुस्त्रिद्विमेखलान्वितं मध्ये पूर्वोक्तप्रमाणनाभियोनिप्रभृतिना कार्यमिति निष्कर्षः ॥

१ चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ॥ सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तमः ॥ या. स्मृ. आ. ॥ ९ ॥ कात्यायनोऽपि । स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ॥ धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥ एवंविधा भवेत् सभ्या कर्तव्या ॥ बृहस्पतिस्तु । लोकार्थवेदधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ॥ यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥

२ किं ते कार्यं वदाम्यङ्ग किं वा मृगयसे द्विज ॥ सत्यवतो ब्रूहि सदसि सत्यं हि गतिरात्मनः ॥ १ ॥ अन्यच्चैव गर्हितं सत्यमेव परं व्रतम् ॥ यदि चेद्भाषसे सत्यं नियतं प्राप्स्यसे शुभम् ॥ २ ॥ यथागतोऽसत्येन न त्वां द्रक्ष्यति कर्हिचित् ॥ एतद्वै समनुज्ञाय गर्वं मृषावदेरत ॥ ३ ॥

वा द्रव्यं निधाय 'अमुकशर्मणो मम जन्मप्रभृत्यद्ययावज्ज्ञाताज्ञातकामाकामसकृद-सकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपात-कातिपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णक-पातकानां महापातकव्यतिरिक्तानां निरासार्थमनुग्रहं कृत्वा प्रायश्चित्तमुपदिशन्तु भवन्तः' इति कथयित्वा तान् प्रार्थयेत् ॥ आब्रह्मस्तम्बपर्यन्तं भवद्वशमिदं जगत् ॥ यक्षरक्षःपिशाचादि सदेवासुरमानुषम् ॥ १ ॥ सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः ॥ मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥ २ ॥ मया कृतं महाघोरं ज्ञातमज्ञातकिल्बिषम् ॥ प्रसादः क्रियतां मह्यं शुभानुज्ञां प्रयच्छथ ॥ पूज्यैः कृतपवित्रोऽहं भवेयं द्विजसत्तमैः ॥ ३ ॥ एवं तान् संप्रार्थ्य तदनंतरं 'मामनुगृह्णन्तु भवन्तः' इति वदन् प्रणमेत् ॥ ततस्ते पर्षदि स्थिता विप्राः तस्य शरीरद्रव्यादिशक्तिं विचार्य पुस्तकवाचनपूर्वकं प्रायश्चित्तम् अनुवादकस्याग्रे कथयेयुः प्रत्याम्नायांश्च शक्त्या कल्पयेयुः ॥

तत्रादौ पुस्तकपूजनं कुर्यात् ॥ ॐ पावकानः सरस्वतीवाजेभिर्वाजिनीवती । यज्ञं वष्टुधियावसुः ॥ श्रीसरस्वत्यै नमः आवा० सम० इत्यादिकं यथावकाशं विशेषार्घ्यपर्यन्तं पूजनं विधाय पर्षदुपदिष्टस्यानुवादकस्यापि यथाविभवं पूजनं कुर्यात् । यथा–ॐ इदं विष्णु० ॥ ॥ अनुवादकाय नमः इति गन्धाद्युपचारान् दक्षिणाञ्च समर्पयामि इति दत्वा तदग्रे स्वशक्त्यनुसारेण स्वपापानुसारेण च पर्षदुपदिष्टं द्रव्यं भृतिरूपं निधाय स्वयं स्वासने करसंपुटौ कृत्वा अनुवादकद्वारा पर्षदुपदिष्टं प्रायश्चित्तं शृणुयात् । तद्यथा । अनुवादको ब्रूयात्–भो यजमान ! तव करिष्यमाणगायत्रीपुरश्चरणकर्मण्यधिकारार्थं पूर्वोक्तानां महापातकव्यतिरिक्तानां तव पापानाम् अनेन अमुकप्रत्याम्नायद्वारा पर्षदुपदिष्टेन अमुकसर्वप्रायश्चित्तेन प्राच्योदीच्यांग-

१ तद्द्रव्यं पर्षदि स्थिता विप्रा विभज्य विभज्य गृह्णीयुः ॥ मुख्यतया प्रत्यक्षं गोवृषयोर्दानं प्रतीयते परन्तु—बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः । इति अंगिरसोक्तत्वात् प्रायश्चित्तिना 'गोवृषयोर्मूल्यमेव पर्षदग्रे निधेयम् ॥

२ प्रायश्चित्ती चन्दनपुष्पादिभिः पुस्तकपूजां सभ्यानुवादकपूजां च विधाय निबन्धपूजात्वेन किञ्चिद्यथाशक्ति द्रव्यं निधाय कृताञ्जलिपुटो नम्रस्तिष्ठेत् ॥ अनुवादकाय च पापानुसारेण भृतिरूपां दक्षिणां दद्यात् ॥ ततः अनुवादकः पूर्वोक्तानां महापातकव्यतिरिक्तानां पातकानां क्षयस्थानेन पर्षदुपदिष्टेन सर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वारा प्राच्योदीच्याङ्गसहितेनाऽऽचीर्णेन तव शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसीति निरुपदिशेत् । तच्च प्रायश्चित्तं शक्त्यनुसारेण षडब्दं १८० त्र्यब्दं ९० सार्धाब्दं ४५ अब्दं ३० वा पर्षदनुमतं विधेयम् ॥ प्रत्याम्नायाश्च गायत्र्ययुतजपे, तिलहोमे सहस्रे, द्वादशब्राह्मणभोजने, तीर्थयोजनयात्रायामेकगोदाने, सुवर्णरौप्यनिष्कतदर्धतदर्धानां गोमूल्यानां शक्त्या दाने, शुष्कक्रोशस्य द्वादशस्नानेषु, द्विगुणद्वादशमासधनादौ चैकः प्राजापत्य इति ॥ ततः शक्त्याऽऽमाश्नं द्विगुणं द्रव्यं चतुर्गुणमित्यादि योज्यम् ॥ अब्दे ३० प्राजापत्यानि ॥

सहितेनाचीर्णेन शुद्धिर्भविष्यति तेन त्वं कृतार्थो भविष्यसि ॥ एवं पुनर्द्विवारं श्रावयेत् । एवमनुवादकेन निवेदितं प्रायश्चित्तं प्रायश्चित्ती 'भवदनुग्रहः' इत्यङ्गीकृत्य सन्मानपूर्वकं प्रणम्य पर्षदं विसृजेत् ॥ अस्मिन्नहनि शक्तेनोपवासः कार्य इतरेण हविष्याशनम् ॥

ततः प्रायश्चित्तं कुर्यात् । तद्यथा—आचम्य प्राणानायम्य देशकालौ संकीर्त्यामुकशर्मणो मम जन्मप्रभृत्यद्यदिनं यावज्ज्ञाताज्ञातकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणप्रकीर्णकपातकानां महापातकव्यतिरिक्तानां निरासेन श्रीपरमेश्वरप्रीत्यर्थममुकप्रायश्चित्तममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गसहितं यथाशक्ति करिष्ये इति संकल्पं कुर्यात् ॥ ततः पुनर्जलमादाय। तत्रादौ प्रायश्चित्तस्य प्राच्यांगतया विहितानि वपनदंतधावनादीनि करिष्ये इति संकल्प्य ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ केशानाश्रित्य तिष्ठंति तस्मात्केशान्वपाम्यहम् ॥ इति मन्त्रेण शिखाकक्षोपस्थवर्जं नखरोमाणि वापयित्वा शीतोदकेन स्नानं कृत्वा प्राङ्मुखो द्वादशाङ्गुलदीर्घौदुम्बरदन्तकाष्ठेन दन्तधावनं कुर्यात् । तत्र—आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥ १ ॥ इति मन्त्रेण दन्तकाष्ठं संप्रार्थ्य तेन च दन्तान्संशोध्य गण्डूषान् कृत्वा तूष्णीं स्नानाचमनं विधाय शरीरशुद्ध्यर्थं प्रायश्चित्ताङ्गीभूतं दशविधस्नानं कुर्यात् ॥

---

॥ अथ स्नानविधिप्रयोगः ॥

॥ तत्र दशविधस्नानम् ॥

प्रायश्चित्ती नदीतडागादिकं गत्वा सुप्रक्षालिततत्तीरे भस्मादीनि स्नानोपकरणानि स्थापयेत् ॥ ततः पाणिपादं प्रक्षाल्य नाभिमात्रं जलं गत्वा कुशपवित्रहस्तो बद्धशिखो ॐ केशवाय नमः स्वाहा ॥ ॐ नारायणाय नमः स्वाहा ॥ ॐ माधवाय नमः स्वाहा ॥ इत्याचम्य । ॐ गोविन्दाय नमः इति हस्तं प्रक्षाल्य प्राणायामत्रयं कुर्यात् ॥ ततो देशकालौ संकीर्त्य मम ज्ञाताज्ञातादिसमस्तपापक्षयार्थं करिष्यमाणगायत्रीपुरश्चरणाधिकारार्थं शरीरशुद्ध्यर्थममुकप्रायश्चित्तांगभूतमादौ भस्मादिभिर्दशविधस्नानं करिष्ये इति संकल्पयेत् । तत आदौ (१) भस्मस्ना-

१ कल्पद्रुमधरा.-याज्ञ. तरुणस्य बहुधुर्यनिमित्ताय वपनाभाव. ॥ तदा तेभ्यो द्विगुणं प्रायश्चित्तं द्विगुणा दक्षिणा च विहिता ॥ अभ्युदयार्थे प्रायश्चित्ते तु वपनाभावः ॥ पित्रादीनाम् और्ध्वदैहिककर्माणि स्वपदयमेव वपनं कार्यदित्यम् ॥ २ दशस्नानमकाराश्च हेमाद्रिकल्पमञ्जर्यन्त तस्मात्तत्कृतं तु वैदिकम् ।

नम् ॥ वामहस्ते दक्षिणहस्तेन यज्ञीयभस्म गृहीत्वा पश्चादुदकमिश्रणानंतरं दक्षिणहस्तेन तत् संमर्द्याभिमंत्रयेत् ॥ तत्र मंत्राः ॥ ॐ अग्निरिति भस्म ॥ ॐ वायुरिति भस्म ॥ ॐ जलमिति भस्म ॥ ॐ स्थलमिति भस्म ॥ ॐ व्योमेति भस्म ॥ ॐ सर्वꣳ ह वा इदं भस्म ॥ ॐ मन एतानि चक्षूंपि भस्मानि । इत्यभिमंत्र्य । अधोलिखितैर्मंत्रैस्तत्तत्स्थानेषु भस्मधारणं कुर्यात् ॥ ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवोमेऽअस्तु सदाशिवोम् ॥ ॐ ईशानाय नमः इति शिरसि मर्दयेत् ॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ॐ तत्पुरुषाय नमः इति मुखे ॥ ॐ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्तेऽअस्तु रुद्ररूपेभ्यः ॥ ॐ अघोराय नमः इति हृदये ॥ ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमः ॥ ॐ वामदेवाय नमः इति गुह्ये ॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥ ॐ सद्योजाताय नमः इति पादयोः ॥ ॐ प्रसद्य भस्मना योनिमपश्चपृथिवीमग्ने ॥ सꣳसृज्य मातृभिष्ट्वञ्ज्योतिष्मान्पुनरासदः ॥ $\frac{३}{६}$ ॥ इति मंत्रेण प्रणवेन वा सर्वाङ्गेष्वपि भस्म विलिंपेत् ॥ ततो (२) गोमयस्नानम् ॥ तद्यथा । प्रणवेन शुद्धगोमयमादाय वामहस्तेन दक्षिणहस्तस्थितं गोमयमधोलिखितैर्मंत्रैरभिमंत्रयेत् ॥ अग्रमग्रं चरंतीनामौषधीनां वने वने ॥ तासां वृषभपत्नीनां पवित्रं कायशोधनम् ॥ यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ॥ १ ॥ ॐ मानस्तोके तनये मानऽआयुषि मानो गोषुमानोऽअश्वेषु रीरिषः ॥ मानो वीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ $\frac{१}{६}$ ॥ इत्यभिमंत्र्य सूर्याय दर्शयित्वा ॥ ॐ गंधद्वारांदुराधर्षां नित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ १ ॥ इति मंत्रेण दक्षिणहस्तगृहीतेन गोमयेन शिरसो नाभ्यंतं वामहस्तगृहीतेन मंत्रावृत्त्या नाभितः पादपर्यंतं सर्वाङ्गमालिप्य स्नात्वा द्विराचामेत् ॥ ततो (३) मृत्तिकास्नानम् ॥ मृत्तिकामादाय । अश्वक्रांते रथक्रांते विष्णुक्रांते वसुंधरे ॥ मृत्तिके हर मे पापं यन्मया कायसंचितम् ॥ १ ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ शिरसा धारयिष्यामि रक्ष त्वं मां पदे पदे ॥ २ ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ त्वया हतेन पापेन सर्वपापैः प्रमुच्यते ॥ ३ ॥ इत्यभिमंत्र्य । ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ $\frac{५}{१}$ ॥ इति मंत्रेण शिरः-

प्रभृतिसर्वाण्यंगानि विलिंपेत् ॥ ततो द्विराचम्य शुद्धोदकस्नानं कुर्यात् ॥ ॐ आपो हि ष्ठा मयोभुवस्तानऽऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ ॐ यो वः शिवतमो रसस्तस्य भाजयतेह नः ॥ उशतीरिव मातरः ॥ ॐ तस्माऽअरंगमाम वो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ १४-१६/३६ ॥ इति स्नात्वा आचामेत् ॥ ततः (४) पंचगव्यस्नानम् ॥ तत्रादौ कांस्यपात्रे मृन्मये द्रोणपात्रे वा पञ्चगव्यं कुर्यात् ॥ तद्यथा । गायत्र्या गोमूत्रम् । ॐ तत्सवितुर्व० ॥ ३५/३ ॥ १ ॥ गंधद्वारेति गोमयम् । ॐ गंधद्वारां० ॥ २ ॥ आप्यायस्वेति पयः । ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ॥ भवा वाजस्य सङ्गथे ॥ ११२/१२ ॥ ३ ॥ दधिक्राव्ण इति दधि । ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ॥ सुरभि नो मुखा करत्प्रण ऽआयूंषि तारिषत् ॥ ३२/२३ ॥ ४ ॥ तेजोसीत्याज्यम् । ॐ तेजोसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ३१/१ ॥ ५ ॥ देवस्यत्वेति कुशोदकम् । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ २१/१ ॥ प्रणवेन यज्ञकाष्ठेनालोड्य तेन स्नानं कुर्यात् ॥ ततो (५) गोरजःस्नानम् ॥ ॐ आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥ ६/३ ॥ गवां खुरेण निर्धूतं यद्रेणु गगने गतम् ॥ शिरसा तेन संलेपो महापातकनाशनम् ॥ इति स्नायात् ॥ ततो (६) धान्यस्नानम् ॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥ दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि ॥ २०/१ ॥ धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम् ॥ तेन स्नानेन देवेश मम पापं व्यपोहतु ॥ इति धान्यस्नानम् ॥ ततः (७) फलस्नानम् । ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ८९/१२ ॥ वनस्पतिरसो दिव्यः फलपुष्पवृतः सदा ॥ तेन स्नानेन मे देव फलं लभ्यमनन्तकम् ॥ इति फलस्नानम् ॥ ततः (८) सर्वौषधिस्नानम् । ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ९६/१२ ॥ ओषध्यः सर्ववृक्षाणां तृणगुल्मलतास्तु याः ॥ दूर्वासर्षपसंयुक्ताः सर्वौषध्यः पुनन्तु माम् ॥ इति स्नायात् ॥ ततः (९) कुशोदकस्नानम् । ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥ १०/१ ॥ ॐ आपो हि ष्ठा० । ॐ यो वः शिव० । ॐ तस्मा ऽअ० ॥ १४-१६/३६ ॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ॥ कुशाग्रे शंकरो देवस्तेन नश्यतु पातकम् ॥ इति कुशोदकस्नानम् ॥ ततो (१०)

१ अथवा पृथक् पृथक् पञ्चगव्यपदार्थैर्गोमूत्रादिभि स्तैरेव मंत्रैः स्नानं कुर्यात् ॥

हिरण्यस्नानम् । ॐ आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यं च ॥ हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन् ॥ ३३/३४ ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥ इति स्नायात् ॥ इति दशविधस्नानम् ॥

ततः शुद्धोदकेन स्नात्वा जलेष्वघमर्षणं कुर्यात् ॥ द्रुपदादिवेति जलं त्रिवारमावर्तयेत् ॥ ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥ पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ॥ २०/२० ॥ ततः स्नानाङ्गतर्पणं कुर्यात् ॥

प्राङ्मुखो भूत्वा सव्येन देवतीर्थेन एकैकमञ्जलिं जले क्षिपेत् ॥ ॐ ब्रह्मादयो देवास्तृप्यन्ताम् ॥ १ ॥ ॐ गौतमादय ऋषयस्तृप्यन्ताम् ॥ १ ॥ उदङ्मुखो यज्ञोपवीतं कंठे धृत्वा प्रजापतितीर्थेनाञ्जलिद्वयं दद्यात् ॥ ॐ सनकादयो मनुष्यास्तृप्यन्ताम् ॥ २ ॥ ततोऽपसव्येन दक्षिणाभिमुखः कृष्णतिलोदकैस्त्रींस्त्रीनञ्जलीन्दद्यात् ॥ ॐ कव्यवाडनलादयः पितरस्तृप्यन्ताम् ॥ ३ ॥ ॐ आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यताम् ॥ ३ ॥ एवं तर्पणं कृत्वा पुनर्यक्ष्मतर्पणं कुर्यात् ॥ यन्मया दूषितं तोयं मलैः शारीरसंभवैः ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम् ॥ इति यक्ष्मणे जलं दत्वा तीरमागत्य । ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ १ ॥ इति जलाञ्जलिं तीरे निःक्षिपेत् ॥ एवं स्नानाङ्गतर्पणं कृत्वा सव्येनाचम्य सूर्यायार्घ्यं दद्यात् । ॐ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ ३३/३४ । ततो जलाद्बहिर्निष्क्रम्याहतं श्वेतं सदशं धौतं वस्त्रं परिधाय उपवस्त्रं च गृहीत्वा द्विराचम्य स्वभाले भस्मादिकं धारयेत् ॥ ततः प्रायश्चित्ताङ्गीभूतं विष्णोः पूजनं कुर्यात् ॥

॥ इति स्नानविधिप्रयोगः ॥

॥ अथ प्रायश्चित्तांगविष्णुपूजनप्रयोगः ॥

अथ पूजासंभृतसंभारो यजमानः स्वासने उपविश्याचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोत्पन्नस्यामुकशर्म्मणो मम पूर्वकृतसंकल्पसिद्ध्यर्थं सर्वपापक्षयार्थं शरीरशुद्ध्यर्थं च करिष्यमाणगायत्रीपुरश्चरणाधिकारार्थं पुरुषसूक्तेन ध्यानावाहनादिषोडशोपचारैः श्रीमहाविष्णुपूजनमहं करिष्ये । इति संकल्प्य । स्वपुरतः चतुरस्रे हस्तमात्रे स्थंडिले काष्ठपीठे वा श्वेतवस्त्रं प्रसार्य तत्र तंडुलैरष्ट-

१ अत्र केचन शिष्टा नित्यस्नानविधिनाऽपि स्नान हेमाद्रिसकरपमपि च कुर्वन्ति परम तत्कृते वैशिष्ट्यमप्यकृते दोष इति न भ्रमितव्यम् ॥

दलं कृत्वा तन्मध्ये ताम्रकलशं स्थापयेत् ॥ तद्यथा। ॐ भूरसि० ॥ १८/१३ ॥ इति मंत्रेण भूमिं स्पृष्ट्वा ॥ १ ॥ तत्र ॐ धान्यमसि० ॥ २०/१ ॥ इति धान्यं क्षिप्त्वा ॥ २ ॥ तस्योपरि ॐ आजिघ्र० ॥ ४२/८ ॥ इति कलशं स्थापयेत् ॥ ३ ॥ ततो वरुणस्योत्तम्भनमसि० ॥ ३६/४ ॥ इति जलमापूर्य ॥ ४ ॥ तत्र ॐ त्वां गन्धर्वा० ॥ ९८/१२ ॥ इति गंधम् ॥५॥ ॐ या ओषधीः० ॥ ७५/१२ ॥ इति सर्वौषधीः ॥ ६ ॥ ॐ काण्डात्काण्डात्० ॥ २०/१३ ॥ इति दूर्वाः ॥७॥ ॐ अश्वत्थेवो० ॥ ७९/१२ ॥ इति पंचपल्लवान् ॥८॥ ॐ स्योनापृथिवि० ॥ ३३/३६ ॥ इति सप्तमृदः ॥ ९ ॥ ॐ याः फलिनीः० ॥ ८९/१२ ॥ इति पूगीफलम् ॥ १० ॥ ॐ परिवाजपतिः० ॥ २८/११ ॥ इति पंचरत्नानि ॥ ११ ॥ ॐ हिरण्यगर्भः ॥ ४/१३ ॥ इति हिरण्यं क्षिप्त्वा ॥१२॥ ॐ सुजातोज्ज्योतिषा० इति वस्त्रं वा रक्तसूत्रं कलशस्य कंठे वेष्टयेत् ॥१३॥ ततः ॐ पूर्णादर्वि० ॥ ४९/३ ॥ इति पूर्णपात्रं निधाय॥१४॥ तत्र ॐ तत्त्वायामि० ॥ ४९/१८ ॥ इति वरुण इहागच्छ इह तिष्ठ इति वरुणमावाह्य। ॐ मनोजूतिर्जुषता० ॥ १३/२ ॥ इति प्रतिष्ठां कृत्वा । ॐ अपांपतये वरुणाय नमः इति तं पञ्चोपचारैः संपूज्य। कलशस्य मुखे विष्णुः० इत्यादिनाभिमंत्र्य। देवदानवसंवादे० इति कलशं प्रार्थ्य। ततः कलशोपरि पट्टवस्त्रं प्रसार्य तत्र गंधेन अष्टदलं चतुर्द्वारोपेतं विष्णुयंत्रं विलिख्य तन्मध्ये तुलसीदलोपरि शालिग्रामप्रतिमामथवा स्वर्णमयीं कृताग्न्युत्तारणप्राणप्रतिष्ठां विष्णुमूर्तिं कुशनिर्मितां वा स्थापयेत् ॥ मूर्तौ सत्यां प्राणप्रतिष्ठां वक्ष्यमाणप्रकारेण कुर्यात् ॥ यथा । मूर्तिं पात्रे निधाय घृतेनाभ्युज्य तदुपरि जलधारां दद्यात् ॥

तत्र मंत्राः ॥ समुद्रस्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यᳬं शिवोभव ॥ ४/१७ ॥ १ ॥ हिमस्यत्वा जरायुणाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यᳬं शिवोभव ॥ ५/१७ ॥ २ ॥ उपज्मन्नुपवेतसेवतरनदीष्वा ॥ अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नो यज्ञंपावकवर्णᳬं शिवङ्कृधि ॥ ६/१७ ॥ ३ ॥ अपामिदन्न्ययनᳬं समुद्रस्यनिवेशनम् ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यᳬं शिवोभव ॥ ७/१७ ॥ ४ ॥ अग्नेपावकरोचिषामन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच॥ ८/१७ ॥ ५ ॥ सनः पावकदीदिवोग्ने देवाँ२ऽइहावह । उपयज्ञᳬं हविश्च नः ॥ ९/१७ ॥ ६ ॥ पावकया यश्चितयन्त्या कृपा क्षामन् रुरुचऽउषसो न भानुना । तूर्वन्नयामन्नेतशस्य नूरणऽआयोघृणे न ततृषाणोऽअजरः ॥ १०/१७ ॥७॥ नमस्तेहरसे शोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्यांस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यᳬं शिवोभव ॥ ११/१७ ॥ ८ ॥ नृषदेवेडप्सुषदेवेड्वर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२/१७ ॥ ९ ॥ ये देवादेवानांयज्ञियायज्ञियानाᳬंसंवत्सरीणमुप-

भागमासते। अहुतादो हविषो यज्ञेऽअस्मिन्स्वयंपिबन्तु मधुनो घृतस्य ॥ ॥१०॥ ये देवादेवेष्वधिदेवत्त्वमायन्येब्रह्मणः पुरऽएतारोऽअस्य । येभ्योनऽऋते पवते धामकिञ्चन न ते दिवो न पृथिव्याऽअधिस्नुषु ॥ ॥ ११ ॥ प्राणदाऽअपानदा व्यानदा वर्चोदा वरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यं-शिवोभव ॥ ॥ १२ ॥

इत्यग्न्युत्तारणं कृत्वा प्राणप्रतिष्ठां कुर्यात् । यथा । मूर्तिं स्पृष्ट्वा । ॐ आँ ह्रीं क्रौंयंरंलंवंशंषंसंहंसः सोहम् । अस्या विष्णुमूर्तेः प्राणा इह प्राणाः । पुनः ॐ आँ ह्रीं क्रौंयंरंलंवंशंषंसंहंसः सोहम् । अस्या विष्णुमूर्तेः जीव इह स्थितः । पुनः ॐ आँ ह्रीं क्रौंयंरंलंवंशंषंसंहंसः सोहम् । अस्या विष्णुमूर्तेः सर्वेन्द्रियाणि वाङ्मनस्त्वचक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा॥ इति प्राणप्रतिष्ठां कृत्वा। ॐ मनोजूतिर्जु० इति प्रतिष्ठाप्य। ॐ वृत्रस्यासिकनीनकश्चक्षुर्दाऽअसिचक्षुर्मेदेहि॥ इति नेत्रोन्मीलनं कृत्वा गंधादिपञ्चोपचारैः संपूज्य गर्भाधानादिपञ्चदशसंस्कारार्थं पञ्चदशप्रणवावृत्तिं जपेत् । अनेन पञ्चदशसंस्काराः संपद्यन्ताम्॥ इति॥ एवं प्राणप्रतिष्ठां विधाय शरीरशुद्ध्यर्थं देहन्यासान् कृत्वा श्रीमहाविष्णोः पूजनं कुर्यात्॥ तद्यथा। जलं गृहीत्वा करिष्यमाणश्रीमहाविष्णुपूजनकर्मण्यधिकारार्थं शरीरशुद्ध्यर्थमङ्गन्यासान् करिष्ये॥

अथाङ्गन्यासः॥ ॐ सहस्रशीर्षा० ॥ ॥ इति वामकरे ॥ १ ॥ ॐ पुरुषएवेदꣳ० ॥ इति दक्षिणकरे ॥ २ ॥ ॐ एतावानस्य० ॥ इति वामपादे ॥ ३ ॥ ॐ त्रिपादूर्ध्व० ॥ इति दक्षिणपादे ॥ ४ ॥ ॐ ततो विराड० ॥ इति वामजानुनि ॥ ५ ॥ ॐ तस्माद्यज्ञात्सर्वहुतꣳ० ॥ इति दक्षिणजानुनि ॥ ६ ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचꣳ० ॥ इति वामकटौ ॥ ७ ॥ ॐ तस्मादश्वा० ॥ इति दक्षिणकटौ ॥ ८ ॥ ॐ तंयज्ञं० ॥ इति नाभौ ॥ ९ ॥ ॐ यत्पुरु० ॥ इति हृदये ॥ १० ॥ ॐ ब्राह्मणोस्य० ॥ इति कंठे ॥ ११ ॥ ॐ चन्द्रमामनसो० ॥ इति वामबाहौ ॥ १२ ॥ ॐ नाभ्याऽआसी० ॥ इति दक्षिणबाहौ ॥ १३ ॥ ॐ यत्पुरुषेण० ॥ इति मुखे ॥ १४ ॥ ॐ सप्तास्यासन्० ॥ इति नेत्रयोः ॥ १५ ॥ ॐ यज्ञेन यज्ञमय० ॥ ॥ इति मूर्ध्नि ॥ १६ ॥

अथोत्तरनारायणस्यर्ग्भिः षडङ्गन्यासाः ॥ ॐअद्भ्यः सम्भृतꣳ०॥ ॥ इति हृदये ॥१॥ ॐ वेदाहमेतम्पु० ॥ इति शिरसि ॥ २ ॥ ॐप्रजापतिश्च० ॥ इति शिखायै वषट् ॥ ३ ॥ ॐ योदेवेभ्यऽआतपति० ॥ इति कवचाय हुम् ॥ ४ ॥ ॐ रुच-

१ देवो भूत्वा देवं यजेदिति शास्त्रस्यानुशासनात् ।

म्न्राह्मर्ज्ञ० ॥ ३१/३१ ॥ इति नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ श्रीश्चतेलक्ष्मी० ॥ ३१/२२ ॥ इत्यस्त्राय फट् ॥ ६ ॥ एवं न्यासान् कृत्वा कलशं शंखं घण्टां च संपूज्य पूर्ववद्देवन्यासान् कृत्वा देवं ध्यायन् पूजां कुर्यात् ॥

तत्र प्रयोगः ॥ ॐ सहस्रशीर्षा० ॥ ३१/१ ॥ श्रीमहाविष्णवे नमः आवाहनं समर्पयामि ॥ [ शालिग्रामपूजायामावाहनाभावात्पत्रं पुष्पं निवेदयेत् ॥] ॐ पुरुषऽएवे० ॥ श्रीमहाविष्णवे नमः आसनं स० ॥ ॐ एतावानस्य० ॥ श्रीमहाविष्णवे नमः पाद्यं स० ॥ ॐ त्रिपादूर्ध्व० ॥ श्रीमहाविष्णवे नमः अर्घ्यं सम० ॥ ॐ ततो विराड० ॥ श्रीमहाविष्णवे नमः आचमनीयं सम० ॥ ॐ तस्माद्यज्ञात्सर्वहुतः० ॥ श्रीमहाविष्णवे नमः स्नानं सम० ॥ ततः ॐ पयः पृथिव्यां ॥ ३६/२८ ॥ ॐ दधिक्राव्णो० ॥ २३/३२ ॥ ॐ घृतं घृतपावानः० ॥ ६/१९ ॥ ॐ मधुवाता० ॥ ॐ मधुनक्त० ॥ ॐ मधुमान्नो० ॥ १३/२७-२९ ॥ ॐ अपाᳬरस० ॥ ९/३ ॥ इतिपञ्चमंत्रैः पृथक् पृथक् पंचामृतस्नानं वा ॐ पञ्चनद्यः सर० ॥ ३४/११ ॥ इति मंत्रेणैकेन मिश्रितेन पञ्चामृतेन स्नानं कारयित्वा गंधादिभिर्देवं संपूज्य पुरुषसूक्तेनाभिषेकं कृत्वा शुद्धोदकेन स्नापयित्वा स्वर्णमयमूर्तिं शालिग्रामं वा कलशे संस्थाप्य वस्त्राद्युपचारान्दद्यात् ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० ॥ श्रीमहाविष्णवे नमः वस्त्रं स० ॥ ॐ तस्मादश्वा० ॥ श्रीमहाविष्णवे नमः उपवीतं स० ॥ ॐ तंयज्ञम्बर्हि० ॥ श्रीमहाविष्णवे नमः चंदनं स० ॥ ॐ यत्पुरुषं ॥ श्रीमहाविष्णवे नमः पुष्पाणि तुलसीपत्राणि च स० ॥ ॐ ब्राह्मणोस्य० ॥ श्रीमहाविष्णवे नमः धूपम् आघ्रापयामि ॥ ॐ चन्द्रमा० ॥ श्रीमहाविष्णवे नमः दीपं दर्शयामि ॥ ॐ नाभ्याऽआसीद० ॥ श्रीमहाविष्णवे नमः नैवेद्यं सम० ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य ॐप्राणाय स्वाहा इत्यादि पञ्चग्रासान्दद्यात् ॥ ततः हस्तप्रक्षालनादिकार्थं जलं दद्यात् ॥ ततः ॐ यत्पुरुषेण० ॥ श्रीमहाविष्णवे नमः मुखवासतांबूलं स० ॥ ॐ हिरण्यगर्भः समवर्तता० ॥ १३/४ ॥ श्रीमहाविष्णवे नमः दक्षिणां स० ॥ ततो नीराजनम् ॥ ॐ इदᳬह० ॥ ४/२६ ॥ इति कर्पूरार्तिकं स० ॥ ॐसप्तास्यासन्० ॥ श्रीमहाविष्णवे नमः प्रदक्षिणां स० ॥ ॐयज्ञेनयज्ञमय० ॥ ३१/१६ ॥ श्रीमहाविष्णवे नमः मंत्रपुष्पांजलिं स० ॥ ततः ॐअद्भ्यः इति आरभ्य ॐश्रीश्चते इत्यंतं पठेत् ॥ १७-२२/३१ ॥ ॐमहाविष्णवे नमः स्तुतिपाठं स० ॥ इति साष्टांगं प्रणमेत् ॥ ततो हस्ते जलमादाय अनेन षोडशोपचारपूजनेन पापहा श्रीमहाविष्णुः प्रीयताम् ॥

॥ इति विष्णुपूजनप्रयोगः ॥

एवं विष्णुपूजां कृत्वा पुरुषसूक्तेन प्रत्यृचं भगवान् पापहा महाविष्णुस्तृप्यताम् ॥ इति विष्णुतर्पणम् ॥ अथ विष्णुश्राद्धम् ॥ आचम्य देशकालौ संकीर्त्य प्रारब्धस्य प्रायश्चित्तस्य पूर्वाङ्गतया विष्णुश्राद्धसंपत्तये श्रीविष्णूद्देशेन त्र्यधिकयुग्मब्राह्मणभोजनपर्याप्तमामान्नं वा तन्निष्क्रयद्रव्यम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे॥ इदमेव प्रायश्चित्ताङ्गविष्णुश्राद्धमिति नारायणभट्टाः । इति विष्णुश्राद्धम् ॥

---

॥ अथ गोदानादिपूर्वोत्तराङ्गसहितः प्रायश्चित्तहोमः ॥

ततः शक्तिमता यजमानेन प्रत्यक्षगोदानं[1] कर्तुमशक्तेन तन्निष्क्रयद्रव्यं वा देयम् ॥ तद्यथा । देशकालौ संकीर्त्य करिष्यमाणगायत्रीपुरश्चरणाधिकारार्थं प्रायश्चित्तपूर्वांगतया विहितं यथाशक्ति गोनिष्क्रयीभूतद्रव्यदानमहं करिष्ये ॥ इति संकल्प्य ब्राह्मणं संपूज्य देयद्रव्यं गृहीत्वा देशकालौ संकीर्त्य प्रायश्चित्तस्य पूर्वाङ्गतया विहितमिदं गोनिष्क्रयीभूतं यथाशक्ति रजतद्रव्यम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दद्यात् ॥ नात्र दक्षिणा[2] ॥ इति प्रायश्चित्तधेनुमूल्यदानम् ॥

अथ प्रायश्चित्तहोमः॥तत्रादौ शुद्धमृदा चतुरस्रं स्थंडिलं कृत्वा देशकालौ संकीर्त्य अद्य प्रायश्चित्तस्य पूर्वाङ्गतया विहितमाज्येन पंचगव्येन च प्रायश्चित्तहवनं करिष्ये॥ पुनर्जलं गृहीत्वा । तदङ्गतया पञ्चभूसंस्कारपूर्वकं ब्राह्मणद्वारा अग्निस्थापनं करिष्ये । इति संकल्प्य पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठापयेत् ॥ तद्यथा । दर्भैः परिसमूह्य ॥३॥ गोमयोदकेन उपलिप्य ॥ ३ ॥ स्रुवमूलेन उल्लिख्य ॥ ३ ॥ अनामिकांगुष्ठेन उद्धृत्य ॥ ३ ॥ उदकेनाभ्युक्ष्य ॥ ३ ॥ अग्निमुपसमाधाय । आनीतमग्निमाग्नेय्यां

---

१ तत्र प्रत्यक्षगोदानपक्षे-प्राङ्मुखो भूत्वा देशकालौ संकीर्त्य करिष्यमाणगायत्रीपुरश्चरणाधिकारार्थं प्रायश्चित्तस्य पूर्वांगतया विहितं गोदानं करिष्ये ॥ इति संकल्प्य । उदङ्मुखं ब्राह्मणं कृत्वा यथाशक्ति विष्णुपूजनं ब्राह्मणपूजनं धेनुपूजनं च कृत्वा गोपुच्छे सव्येन ॐ देवांस्तर्पयामि ॥ कण्ठं कृत्वा ॐ सनकादींस्तर्पयामि ॥ अपसव्येन ॐ पितॄंस्तर्पयामि ॥ इति देवर्षिपितृतर्पणं कृत्वा गोप्रार्थनां कुर्यात् ।

यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा ॥ १ ॥ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश । यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥ २ ॥ गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ ३ ॥ इति संप्रार्थ्य ॥ ततः कांस्यपात्रे सकुशमक्षिप्तयुक्तं गोपुच्छं निधाय दक्षिणहस्तेन गृहीत्वा देशकालौ संकीर्त्य मम समस्तपापक्षयार्थं श्रीमहाविष्णुप्रीत्यर्थमिमां गां सवत्सां सोपस्करां यथाशक्त्यलंकृतां रुद्रदैवत्यां तुभ्यमहं संप्रददे इत्युक्त्वा संकल्पजलयुतं गोपुच्छं विप्रहस्ते दद्यात् ॥ गोदानसांगतासिद्ध्यर्थं यथाशक्ति दक्षिणां तुभ्यमहं संप्रददे न मम ॥ पुनरेवं दक्षिणा । अनेन गोदानकर्मणा पापहा श्रीमहाविष्णुः प्रीयताम् ॥

२ यत्र दक्षिणेति ऋत्विग्दक्षिणापरा ॥ अपि च ॥ दक्षिणारहितं दानं सर्वं दानं वृथा भवेत् ॥ भोजनाभावे दक्षिणा निष्क्रयदानेषु सर्वदानेषु दक्षिणादानमवश्यं कर्तव्यम् तथापि नात्र दक्षिणा देया ।

दिशि निधाय। हुं फट् इति क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य । अग्निं त्रिर्भ्रामयित्वा आत्माभिमुखं स्थापयेत् ॥ ततः अन्यानीतपात्रे साक्षतोदकं क्षिप्त्वा अग्निमुखं कृत्वा ध्यायेत् ॥ ॐ चत्वारि शृंगा त्रयो० ॥ १६ ॥ ततो हस्ते गन्धाक्षतपुष्पाण्यादाय प्रायश्चित्ते विट्नामाग्नये नमः गन्धाक्षतपुष्पाणि समर्पयामि । इति संपूज्य । वैकल्पिकपदार्थावधारणं कुर्यात् ॥ हस्ते जलं गृहीत्वा । देशकालौ संकीर्त्य करिष्यमाणप्रायश्चित्तपूर्वांगहोमकर्मणि वैकल्पिकपदार्थावधारणं करिष्ये । इति संकल्प्य वैकल्पिकपदार्थावधारणं कुर्यात् । तद्यथा । पूर्वेण ब्रह्मणो गमनम् ॥ उत्तरे प्रणीताप्रणयनम् ॥ अग्नेः पश्चिमतः पात्रासादनम् ॥ त्रीणि पवित्राणि ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ ताम्रमयी आज्यस्थाली ॥ पालाद्यः समिधः ॥ पाञ्चावाघारौ॥समिद्धतमे आज्यभागौ॥सदक्षिणं पूर्णपात्रम्। एतान् वैकल्पिकपदार्थानस्मिन्कर्मण्यहं करिष्ये ॥ ततः समिद्वयं गृहीत्वा देवताभिध्यानं कुर्यात् ॥ प्रजापतिम् इन्द्रम् अग्निं सोमम् एकैकयाऽऽज्याहुत्या, प्रायश्चित्तार्थम् अत्र प्रधानम् अग्निं वायुं सूर्यं प्रजापतिं प्रत्येकं व्यस्तसमस्तव्याहृत्या अष्टाविंशतिसंख्यया, पुनरत्र प्रधानं पृथ्वीं विष्णुं रुद्रं ब्रह्माणमग्निं सोमं सवितारं प्रजापतिं परमात्मानम् अग्निं स्विष्टकृतम् एता ब्रह्मकूर्चदेवता ब्रह्मकूर्चेन मिलितपंचगव्यैः एकैकयाऽऽहुत्या अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणम् आदित्यम् अदितिं प्रजापतिम् एता अङ्गप्रधानार्था देवता एकैकयाऽऽज्याहुत्या अस्मिन्कर्मण्यहं यक्ष्ये इति समिद्वयं अग्नावादध्यात्॥अथ कुशकण्डिका॥अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्य वायव्यकोणे प्राङ्मुखं ब्रह्माणमुपवेश्योदङ्मुखो यजमानोऽस्मिन्कर्मणि त्वं ब्रह्मा भवेति ब्रह्माणं वृणुयात् ॥ ततो भवामीति ब्रह्मा वदेत् ॥ पश्चात्पूर्वेण दक्षिणदिशि ब्रह्मणः स्वासने गमनम् ॥ तत्र स्वासनात्किञ्चित्तृणं दक्षिणस्यां दिशि निरस्य तत्र स्वासने ब्रह्मोपविशेत् ॥ ततः प्रणीताप्रणयनार्थमग्नेरुत्तरदिशि

---

१ यत्र पात्रासादनादीनां कर्मणां स्थानादौ वैकल्पिकत्वं तत्र पक्षद्वयेन कर्म कर्तुमशक्यत्वात् अस्मिन्कर्मणि अनया रीत्या कर्म कर्तव्यम् एतदर्थप्रतिपादनाय वैकल्पिकपदार्थावधारणस्य प्रयोजनं प्रतिकर्म पदार्थावधारणकृ्णामाशयः स्यादित्यस्माभिरनुमीयतेऽतस्तथैवास्माभिराचरितम् ॥

२ यत्र पूर्वाङ्गप्रायश्चित्तेन सहैवाग्न उत्तराङ्गप्रायश्चित्तस्यापि होमो विधीयते तत्र पूर्वोक्तदेवताभिध्यानेन सह उत्तराङ्गप्रायश्चित्तदेवताभिध्यानमप्येकतंत्रेण कर्तुं युक्ततरम् ॥ तद्यथा ॥ अस्मिन्नेवाग्नावुत्तराङ्गप्रायश्चित्तस्यापि प्रधानमिन्द्रारभ्य पञ्चगव्यदेवतान्वाधानं विना ॐ अग्निं स्विष्टकृतमित्यन्तं देवताभिध्यानं पूर्ववत् इत्युक्त्वा समिद्वयमग्नौ प्रक्षेप ॥[illegible] तस्मिन् देया ॥ प्रायश्चित्ती स्थण्डिलद्वयं विधायैकस्मिन्स्थण्डिले पूर्वाङ्गप्रायश्चित्तं समाप्य होमावशिष्टस्य पञ्चगव्यस्य निशामुखे प्राशनं कृत्वा गृहे आगत्य रात्रौ विष्णुं स्मरन् मौनी भूत्वा निद्रामतिवाह्य प्रातःकाले तस्मिन्नेव स्थण्डिले उत्तराङ्गप्रायश्चित्तं कुर्यात् ॥ तद्वदकल्पद्रुमकाराणामपि मतमिति प्रतिभाति ॥ परन्तु शिष्टास्तु धारणापारणाभ्यन्तरे द्वितीये स्थण्डिले उत्तराङ्गहोमं कुर्वन्ति ॥

वायव्यकोणे चेत्यासनद्वयं निधाय ब्रह्मानुज्ञात उत्तरे प्रणीताप्रणयनं कुर्यात् ॥ ब्रह्माणमवलोकयन् भो ब्रह्मन् अपः प्रणेष्यामि । ॐ प्रणय । इति ब्रह्मणाऽनुज्ञातः प्रणीतापात्रं वामहस्ते धृत्वा तत्र दक्षिणहस्तेन जलं प्रपूर्य तत्पात्रं वायव्यकोणे स्थापिते पूर्वासने निधाय दक्षिणकरस्यानामिकयाऽऽलभ्याग्नेरुत्तरभागे स्थापिते द्वितीयासने निदध्यात् ॥ ततः स्थंडिलस्य प्राक् उदगग्रं दक्षिणदिशि प्रागग्रं पश्चिमदिशि उदगग्रम् उत्तरदिशि प्रागग्रम् इति प्रत्येकं त्रिभिस्त्रिभिर्दर्भैः परिस्तरणं कृत्वा पात्रासादनं कुर्यात् ॥ यथा । पवित्रच्छेदनार्थं त्रयो दर्भाः ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ सम्मार्गकुशाः पञ्च ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यम् ॥ पूर्णपात्रं दक्षिणा वरो वा ॥ पलाशपत्रम् ॥ यज्ञकाष्ठम् ॥ ब्रह्मकूर्चार्थं हरितानि सप्त कुशपत्राणि ॥ आज्यम् इत्यादीनि हवनीयद्रव्याणि तथाच पञ्चगव्यार्थं पृथक् पृथक् गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकमपि एतानि स्थापयित्वा ततः पञ्चगव्यं कुर्यात् ॥ तद्यथा । एकस्मिन्पलाशपत्रपुटके ॐ तत्सवि० ॥ ३५/३ ॥ इति गायत्रीमंत्रेण ताम्राया गोर्गोमूत्रमष्टमापम् ॥ ॐ गन्धद्वारां० इति मंत्रेण श्वेतगोर्गोमयं षोडशमापम् ॥ ॐ आप्यायस्व० ॥ ११२/१२ ॥ इति मंत्रेण पीतगोः क्षीरं द्वादशमापम् ॥ ॐ दधिक्राव्णो० ॥ ३२/२३ ॥ इति मंत्रेण नीलाया गोर्दधि षड्मापम् ॥ ॐतेजोसि शुक्र० ॥ १/२२ ॥ इति मंत्रेण कृष्णाया गोर्घृतमष्टमापम् ॥ ततो देवस्यत्वा० ॥ २२/५ ॥ इति मंत्रेण चतुर्मापमुदकञ्च प्रक्षिप्य प्रणवेन यज्ञकाष्ठेनालोड्य पुनः प्रणवेनाभिमंत्रयेत् ॥ एवं पञ्चगव्यं कृत्वा पवित्रे कुर्यात् ॥ तद्यथा । वामकरस्थितयोः प्रागग्रयोर्द्वयोः पवित्रयोरुपरि दक्षिणकरेणोदगग्राणि त्रीणि पवित्राणि निधायोपरि प्रादेशमात्रं पवित्रद्वयमवशेषयित्वा दक्षिणकरेण द्वयोः पवित्रयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य वामकरेण सर्वाणि पवित्राणि युगपद् धृत्वा दक्षिणकराङ्गुष्ठाङ्गुलिपर्वाभ्यामुपरि प्रादेशमात्रं छित्वाऽन्यानि सर्वाणि पवित्राण्युत्तरतः क्षिपेत् ॥ प्रादेशमात्रे द्वे पवित्रे ग्राह्ये ॥ ततः प्रोक्षणीपात्रं प्रणीतोत्तरं निधाय तस्मिन् पात्रान्तरेण दक्षिणहस्तेन या प्रणीतोदकं चतुर्वारं गृहीत्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणकरेणादाय सव्ये पाणौ धृत्वा दक्षिणहस्तमुत्तानं कृत्वा सपवित्राभ्यां दक्षिणकरस्य मध्यमानामिकांगुल्योर्मध्यपर्वाभ्यां प्रोक्षणीस्थानामपामूर्ध्वमुदिङ्गनम् ॥ ततस्ताभिः प्रोक्षणीपात्रस्थिताभिरद्भिस्तासां प्रोक्षणीपात्रस्थिताना-

१ तत्तद्वर्णोक्तगोमूत्राद्यलाभे तु कपिलायाः सर्वं गोमूत्रादि ग्राह्यम् । तस्या अप्यलाभे यथालाभम् ॥

२ अत्र केचन शिष्टाः प्रोक्षणीस्थितानामपामसंस्कृतत्वात्ताभिरद्भिः तासां प्रोक्षणेन तासामपां संस्कृतत्वानुपपत्तेः स्थानामसंस्कृतत्वात् ॥ असंस्कृतद्रव्येण स्वासंस्कृतौ मानाभाव इत्यस्यापि शास्त्रसंमतत्वाच ॥ अत प्रणीतास्थाभिरद्भिरेव प्रोक्षणीस्थानामपां संस्कारसंपादनाय प्रोक्षणं कर्तव्यमिति कथयन्त्याचरन्ति च ॥

दिशि निधाय। हुं फट् इति क्रव्यादांशं नैर्ऋत्यां दिशि परित्यज्य। अग्निं त्रिर्भ्रामयित्वा आत्माभिमुखं स्थापयेत्॥ ततः अग्न्यानीतपात्रे साक्षतोदकं क्षिप्त्वा अग्निमुखं कृत्वा ध्यायेत्॥ ॐ चत्वारि शृंगा त्रयो० ॥ १६ ॥ ततो हस्ते गन्धाक्षतपुष्पाण्यादाय प्रायश्चित्ते विट्नामाग्नये नमः गन्धाक्षतपुष्पाणि समर्पयामि। इति संपूज्य। वैकल्पिकपदार्थावधारणं कुर्यात्॥ हस्ते जलं गृहीत्वा। देशकालौ संकीर्त्य करिष्यमाणप्रायश्चित्तपूर्वांगहोमकर्मणि वैकल्पिकपदार्थावधारणं करिष्ये। इति संकल्प्य वैकल्पिकपदार्थावधारणं कुर्यात्। तद्यथा। पूर्वेण ब्रह्मणो गमनम्॥ उत्तरे प्रणीताप्रणयनम्॥ अग्नेः पश्चिमतः पात्रासादनम्॥ त्रीणि पवित्राणि॥ पवित्रे द्वे॥ प्रोक्षणीपात्रम्॥ ताम्रमयी आज्यस्थाली॥ पालाश्यः समिधः॥ पात्राघारौ॥ समिद्धतमे आज्यभागौ॥ सदक्षिणं पूर्णपात्रम्। एतान् वैकल्पिकपदार्थानस्मिन्कर्मण्यहं करिष्ये॥ ततः समिद्द्वयं गृहीत्वा देवताभिध्यानं कुर्यात्॥ प्रजापतिम् इन्द्रम् अग्निं सोमम् एकैकयाऽऽज्याहुत्या, प्रायश्चित्तार्थम् अत्र प्रधानम् अग्निं वायुं सूर्यं प्रजापतिं प्रत्येकं व्यस्तसमस्तव्याहृत्या अष्टाविंशतिसंख्यया, पुनरत्र प्रधानं पृथ्वीं विष्णुं रुद्रं ब्रह्माणमग्निं सोमं सवितारं प्रजापतिं परमात्मानम् अग्निं स्विष्टकृतम् एता ब्रह्मकूर्चदेवता ब्रह्मकूर्चेन मिलितपंचगव्यैः एकैकयाऽऽहुत्या अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणम् आदित्यम् अदितिं प्रजापतिम् एता अङ्गप्रधानार्था देवता एकैकयाऽऽज्याहुत्या अस्मिन्कर्मण्यहं यक्ष्ये इति समिद्द्वयं अग्नावादध्यात्॥ अथ कुशकण्डिका॥ अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्य वायव्यकोणे प्राङ्मुखं ब्रह्माणमुपवेश्योदङ्मुखो यजमानोऽस्मिन्कर्मणि त्वं ब्रह्मा भवेति ब्रह्माणं वृणुयात्॥ ततो भवामीति ब्रह्मा वदेत्॥ पश्चात्पूर्वेण दक्षिणदिशि ब्रह्मणः स्वासने गमनम्॥ तत्र स्वासनात्किञ्चित्तृणं दक्षिणस्यां दिशि निरस्य तत्र स्वासने ब्रह्मोपविशेत्॥ ततः प्रणीताप्रणयनार्थमग्नेरुत्तरदिशि

१ यत्र पात्रासादनादीना कर्मणा स्थानादौ वैकल्पिकत्व तत्र पक्षद्वयेन कर्म कर्तुमशक्यत्वात् अस्मिन्कर्मणि अनया रीत्या धर्म कर्तव्यम् एतदर्थप्रतिपादनाय वैकल्पिकपदार्थावधारणस्य प्रयोजन प्रतिकर्म पदार्थावधारणवत्कृणमाश्रय' स्यादित्यस्माभिरनुमीयतेऽतस्तथैवास्माभिराचरितम्॥

२ यत्र पूर्वाङ्गप्रायश्चित्तेन सहैकाप्रावुत्तराङ्गप्रायश्चित्तस्यापि होमो विधीयते तत्र पूर्वोक्तदेवताभिध्यानेन स उत्तराङ्गप्रायश्चित्तदेवताभिध्यानमप्येकतंत्रेण कर्तुं युक्ततरम्॥ तद्यथा॥ अस्मिन्नेवाग्नावुत्तराङ्गप्रायश्चित्तस्यापि अ प्रधानमित्यारभ्य पञ्चगव्यदेवतान्वाधानं विना ॐ अग्निं स्विष्टकृतमित्यन्तं देवताभिध्यानं पूर्ववत इत्युक्त्वा समिद्द्वयमग्नौ प्रक्षेप॥ तदन्ताहुतय तत्तद्द्रव्यैस्तत्सख्याभिश्च तस्मिन् देया॥ प्रायश्चित्ती स्थण्डिलद्वयं विधायैकस्मिन्स्थण्डिले पूर्वाङ्गप्रायश्चित्तं समाप्य होमावशिष्टस्य पञ्चगव्यस्य निशामुखे प्राशन कृत्वा गृहे आगत्य रात्रौ विष्णुं स्मरन् मौनी भूत्वा निशामतिवाह्य प्रातःकाले तस्मिन्नेव स्थण्डिले उत्तराङ्गप्रायश्चित्तं कुर्यात्॥ तदुद्दकल्पद्रुमकाराणामपि गुरुसंमतमिति प्रतिभाति॥ परन्तु शिष्टास्तस्य धारणादेरभ्यन्तरे द्वितीये स्थण्डिले उत्तराङ्गहोमं कुर्वन्ति॥

वायव्यकोणे चेत्यासनद्वयं निधाय ब्रह्मानुज्ञात उत्तरे प्रणीताप्रणयनं कुर्यात् ॥ ब्रह्माणमवलोकयन् भो ब्रह्मन् अपः प्रणेष्यामि । ॐ प्रणय । इति ब्रह्मणाऽनुज्ञातः प्रणीतापात्रं वामहस्ते धृत्वा तत्र दक्षिणहस्तेन जलं प्रपूर्य तत्पात्रं वायव्यकोणे स्थापिते पूर्वासने निधाय दक्षिणकरस्यानामिकयाऽऽलभ्याग्नेरुत्तरभागे स्थापिते द्वितीयासने निदध्यात् ॥ ततः स्थंडिलस्य प्राक् उदगग्रं दक्षिणदिशि प्रागग्रं पश्चिमदिशि उदगग्रम् उत्तरदिशि प्रागग्रम् इति प्रत्येकं त्रिभिस्त्रिभिर्दर्भैः परिस्तरणं कृत्वा पात्रासादनं कुर्यात् ॥ यथा । पवित्रच्छेदनार्थं त्रयो दर्भाः ॥ पवित्रे द्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली ॥ सम्मार्गकुशाः पञ्च ॥ उपयमनकुशाः सप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यम् ॥ पूर्णपात्रं दक्षिणा वरो वा ॥ पलाशपत्रम् ॥ यज्ञकाष्ठम् ॥ ब्रह्मकूर्चार्थं हरितानि सप्त कुशपत्राणि ॥ आज्यम् इत्यादीनि हवनीयद्रव्याणि तथाच पञ्चगव्यार्थं पृथक् पृथक् गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकमपि एतानि स्थापयित्वा ततः पञ्चगव्यं कुर्यात् ॥ तद्यथा । एकस्मिन्पलाशपत्रपुटके ॐ तत्सवि० ॥ ३६/३ ॥ इति गायत्रीमंत्रेण ताम्राया गोर्गोमूत्रमष्टमाषम् ॥ ॐ गन्धद्वारां० इति मंत्रेण श्वेतगोर्गोमयं षोडशमाषम् ॥ ॐ आप्यायस्व० ॥ १२/११२ ॥ इति मंत्रेण पीतगोः क्षीरं द्वादशमाषम् ॥ ॐ दधिक्राव्णो० ॥ २३/३२ ॥ इति मंत्रेण नीलाया गोर्दधि षड्माषम् ॥ ॐ तेजोसि शुक्र० ॥ २२/१ ॥ इति मंत्रेण कृष्णाया गोर्घृतमष्टमाषम् ॥ ततो देवस्यत्वा० ॥ २२/२ ॥ इति मंत्रेण चतुर्माषमुदकञ्च प्रक्षिप्य प्रणवेन यज्ञकाष्ठेनालोड्य पुनः प्रणवेनाभिमंत्रयेत् ॥ एवं पञ्चगव्यं कृत्वा पवित्रे कुर्यात् ॥ तद्यथा । वामकरस्थितयोः प्रागग्रयोर्द्वयोः पवित्रयोरुपरि दक्षिणकरेणोदगग्राणि त्रीणि पवित्राणि निधायोपरि प्रादेशमात्रं पवित्रद्वयमवशेषयित्वा दक्षिणकरेण द्वयोः पवित्रयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य वामकरेण सर्वाणि पवित्राणि युगपद् धृत्वा दक्षिणकराङ्गुष्ठाङ्गुलिपर्वाभ्यामुपरि प्रादेशमात्रं छित्त्वाऽन्यानि सर्वाणि पवित्राण्युत्तरतः क्षिपेत् ॥ प्रादेशमात्रे द्वे पवित्रे ग्राह्ये ॥ ततः प्रोक्षणीपात्रं प्रणीतोत्तरं निधाय तस्मिन् पात्रान्तरेण दक्षिणहस्तेन वा प्रणीतोदकं चतुर्वारं गृहीत्वा पवित्रे प्रोक्षण्यां निधाय तत्पात्रं दक्षिणकरेणादाय सव्ये पाणौ धृत्वा दक्षिणहस्तमुत्तानं कृत्वा सपवित्राभ्यां दक्षिणकरस्य मध्यमानामिकांगुल्योर्मध्यपर्वाभ्यां प्रोक्षणीस्थानामपामूर्ध्वमुदिङ्गनम् ॥ ततस्ताभिः[2] प्रोक्षणीपात्रस्थिताभिरद्भिस्तासां प्रोक्षणीपात्रस्थिताना-

---

१ तत्तद्वर्णोक्तगोमूत्राद्यलाभे तु कपिलायाः सर्वं गोमूत्रादि ग्राह्यम् । तस्या अप्यलाभे गव्यमात्रम् ॥

२ अत्र केचन शिष्टाः प्रोक्षणीस्थितानामपामसंस्कृतत्वात्ताभिरद्भिः तासां प्रोक्षणेन तासामपां संस्कृतत्वानुपपत्तेः स्वानामसंस्कृतत्वात् ॥ असंस्कृतद्रव्येण स्वपरसंस्कृतौ मानाभाव इत्यस्यापि शास्त्रसम्मतत्वाच्च ॥ अतः प्रणीतास्थाभिरद्भिरेव प्रोक्षणीस्थानामपां संस्कृतत्वसंपादनाय प्रोक्षणं कर्तव्यमिति कथयन्त्याचरन्ति च ॥

मपां प्रोक्षणम् ॥ आज्यस्थाल्याः प्रोक्षणम् । सम्मार्गकुशानां प्रोक्षणम् । उपयमनकुशानां प्रोक्षणम् ॥ समिधां प्रोक्षणम् ॥ स्रुवस्य प्रोक्षणम् ॥ आज्यस्य प्रोक्षणम् ॥ आसादितानामन्येषां पलाशपत्रयज्ञियकाष्ठहरितसप्ततृणपञ्चगव्यादीनां प्रोक्षणम् ॥ ततोऽसंचरे प्रणीताग्न्योर्मध्ये प्रोक्षणीपात्रस्य निधानम् ॥ तत आज्यस्थाल्यामाज्यं गृहीत्वा ब्रह्मणा स्थंडिले दक्षिणप्रदेशे आज्याधिश्रयणं विधायोल्मुकेनाज्यस्य पञ्चगव्यस्य च पर्यग्निकरणम् । हस्तस्येतरथावृत्तिः ॥ ततः स्रुवस्य प्रतपनं कुर्यात् ॥ दक्षिणहस्तेन स्रुवमादायाधोमुखं कृत्वाऽग्नौ प्राञ्चं तापयित्वा ततो वामकरे धृत्वा दक्षिणहस्तस्थितैः संमार्गकुशाग्रैः स्रुवस्य मूलादारभ्य उपरितः स्रुवस्याग्रपर्यन्तं सम्मृज्य संमार्गकुशमूलैः स्रुवस्याग्रतः आरभ्याधस्तात् स्रुवस्य मूलपर्यन्तं संमृज्य प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनर्दक्षिणकरे धृत्वा पुनः प्रतप्य दक्षिणदिशि निदध्यात् । सम्मार्गकुशानामग्नौ उत्तरदिशि वा त्यागं कृत्वाऽऽज्योद्वासनं कुर्यात् ॥ दक्षिणहस्तेनाग्नेः सकाशादाज्यं गृहीत्वाऽग्नेरुत्तरतः प्रोक्षण्याः समीपे क्षणं निधायाग्नेः पश्चिमदिशि स्थापयेत् ॥ तत आज्योत्पवनं कुर्यात् । तद्यथा । वामहस्तधृताग्राभ्यां दक्षिणहस्तधृतमूलाभ्यां पवित्राभ्याम् आज्योत्पवनम् । आज्यावेक्षणमपद्रव्यनिरसनञ्च कृत्वा आज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् ॥ पवित्रे प्रोक्षण्यां निधाय । दक्षिणहस्तेन उपयमनकुशानादाय सव्ये पाणौ धृत्वा घृताक्तास्तिस्रः समिधो गृहीत्वा तिष्ठन् 'समिधोऽभ्याधाय' इति अग्नौ प्रक्षिपेत् । ततः सपवित्रदक्षिणहस्तेन प्रोक्षण्युदकं गृहीत्वा ईशानकोणादारभ्येशानकोणपर्यन्तमग्निं प्रदक्षिणं पर्युक्ष्य (हस्तस्येतरथावृत्तिः) पवित्रे प्रणीतायां निदध्यात् ॥ ततो दक्षिणं जान्वाच्य स्रुवेण ब्रह्मणाऽन्वारब्धो जुहुयात् ॥ ॐ मनसा (प्रजापतये) स्वाहा इदं प्रजापतये न मम ॥ ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम ॥ ॐ अग्नये स्वाहा इदमग्नये न मम ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ हस्ते जलं गृहीत्वा मया संपादितानि हवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न मम ॥ यथादैवतमस्तु ॥ हस्ते गन्धाक्षतपुष्पाण्यादायाग्निपूजनम् । प्रायश्चित्तकर्मणि विट्नामाग्नये नमः गन्धाक्षतपुष्पाणि सम० ॥

अथ आज्येन प्रधानहोमः ॥ ॐ भूः स्वाहा इदमग्नये न मम ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम ॥ एवं सप्तवारान्कृत्वा अष्टाविंशत्याहुतयो भवंति ॥ एवं सप्तविंशतिवारान् कृत्वा अष्टोत्तरशताहुतयो भवंति ॥ ततो ब्रह्मकूर्चेन पंचगव्यस्य प्रतिमंत्र-

मेकैकाहुतिः ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ ३६/१३ ॥ स्वाहा इदं पृथिव्यै न मम ॥१॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा ॥ ५/१५ ॥ इदं विष्णवे न मम ॥२॥ ॐ मानस्तोके तनये मानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६/१६ ॥ स्वाहा इदं रुद्राय न मम ॥३॥ उदकोपस्पर्शनम् ॥ ॐ ब्रह्म जज्ञानं प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः ॥ सवुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ॥ १३/३ ॥ स्वाहा इदं ब्रह्मणे न मम ॥४॥ ॐ अग्निं दूतं पुरोदधेहव्यवाहमुपब्रुवे । देवाँ२ऽआसादयादिह ॥ २२/१७ ॥ स्वाहा इदमग्नये न मम ॥ ५ ॥ ॐ वयᳪसोमव्रते तव मनस्तनूषुविभ्रतः । प्रजावन्तः सचेमहि ॥ ३/५६ ॥ ॐ सोमाय स्वाहा इदं सोमाय न मम ॥ ६ ॥ ॐ तत्सवितु० ॥ ३/३५ ॥ स्वाहा इदं सवित्रे न मम ॥ ७ ॥ ॐ भूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम ॥ ८ ॥ ॐ स्वाहा इदं परमात्मने न मम ॥ ९ ॥ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥१०॥ इति पञ्चगव्यहोमः ॥ वामकरे उपयमनकुशानादाय ब्रह्मणाऽन्वारब्धो दक्षिणं जान्वाच्य जुहुयात् ॥ ॐ भूः स्वाहा इदमग्नये न मम ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ॐ त्वन्नोऽअग्ने वरुणस्य० ॥ २१/३ ॥ स्वाहा इदमग्नीवरुणाभ्यां न मम ॥ ४ ॥ ॐ सत्वन्नोऽअग्नेवमो० ॥ २१/४ ॥ स्वाहा इदमग्नीवरुणाभ्या न मम ॥ ५ ॥ ॐ अयाश्चाग्ने० ॥ स्वाहा इदमग्नये अयसे न मम ॥ ६ ॥ ॐ ये ते शतं वरुण० ॥ स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥७॥ ॐ उदुत्तमं० ॥१२/१२॥ स्वाहा इदं वरुणायादित्यायादितये च न मम ॥८॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ९ ॥ संस्रवप्राशनं कुशपवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ प्रणीतोदकं गृहीत्वा । मया कृतस्य पूर्वाङ्गप्रायश्चित्तकर्मणः सागतासिद्ध्यर्थम् इदं पूर्णपात्रं ब्रह्मणे तुभ्यमहं संप्रददे न मम ॥ इति ब्रह्मणे पूर्णपात्रं दक्षिणा वा दत्वा अग्नेः पश्चात्प्रणीताविमोकः ॥ तेनोदकेन यजमानस्य शिरसि आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमित्यभिषेकं कुर्यात् ॥ ततोऽग्निं विसृज्य प्रायश्चित्ती प्रामाद्बहिस्तारकोदये व्रतग्रहणं करिष्ये इति आचार्यादिसमस्तर्त्विजः पृच्छेत् ॥

१ अत्र व्रतग्रहणं निशामुखे। अत्र बहिस्तारकोदये होमावशिष्टपञ्चगव्यप्राशनरूपं व्रतं मान्यमिति भट्टपादाः॥ माधवस्तु व्रतशब्देन प्रायश्चित्तसङ्कल्पमेव कथयति ॥ पूर्वेद्युर्निशामुखे प्रायश्चित्तसङ्कल्पोऽपरेद्युः प्रातर्हा-

ते च कुरुष्वेति ब्रूयुः ॥ एवं तैरनुज्ञातः अवशिष्टस्य सर्वस्य पञ्चगव्यस्य प्राशनं कुर्यात् ॥ ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ॥ प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥ इति सर्वं प्राश्याचमनं कुर्यात् ॥ ततः प्रायश्चित्ती पर्षदुपदिष्टानुसारेण प्रायश्चित्तप्रत्याम्नायभूतं द्रव्यं गृहीत्वा सङ्कल्पं कुर्यात् ॥ देशकालौ सङ्कीर्त्य प्रायश्चित्तप्रत्याम्नायभूतमिदं रजतद्रव्यं नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे॥ ततो तद्द्रव्यं ब्राह्मणेभ्यो विभज्य विभज्य दत्वोत्तराङ्गप्रायश्चित्तं कुर्यात्॥

॥ अथोत्तराङ्गप्रायश्चित्तम् ॥

ततः प्रायश्चित्ती आचमनं प्राणायामञ्च कृत्वा उत्तराङ्गप्रायश्चित्तं कुर्यात्॥ हस्ते जलं गृहीत्वा देशकालौ संकीर्त्य मम करिष्यमाणगायत्रीपुरश्चरणकर्मण्यधिकारार्थं प्रारब्धस्यामुकप्रायश्चित्तस्य उत्तराङ्गानि करिष्ये ॥ इति संकल्पं विधाय पूर्ववत् यथाशक्ति विष्णुपूजनं तर्पणं विष्णुश्राद्धं च कृत्वा हस्ते जलं गृहीत्वा प्रायश्चित्तस्य उत्तराङ्गतया विहितं गोदानं करिष्ये इति संकल्पं कृत्वा गोनिष्क्रयद्रव्यं गृहीत्वा। देशकालौ संकीर्त्य इदं गोदानप्रत्याम्नायभूतं रजतद्रव्यम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे - इत्युक्त्वा ब्राह्मणाय दद्यात् ॥ ततो द्वितीये स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य ब्रह्मवरणाद्याज्यभागान्तं कृत्वा व्यस्तसमस्तव्याहृत्या आज्येन जुहुयात्॥ ॐभूः स्वाहा इदमग्नये न मम॥ ॐभुवः स्वाहा इदं वायवे न मम॥ ॐस्वः स्वाहा इदं सूर्याय न मम॥ ॐभूर्भुवः स्वः स्वाहा इदं प्रजापतये न मम ॥ इति व्यस्तसमस्तव्याहृत्याऽष्टाविंशतिवारम् आज्यं हुत्वा॥ ततो भूराद्या नवाहुतीर्जुहुयात्॥

---

मायश्चसहितं प्रायश्चित्तमारभेत इति ॥ तेन होमावशिष्टपञ्चगव्यस्य प्राशनं होमान्ते सायंकाले कर्तव्यम् ॥ परन्तु प्राशनमेकस्मिन्नेव दिवसे पूर्वोत्तराङ्गप्रायश्चित्तकरणस्य शिष्टाचारात् बहुधा तत्काले एव प्राशनं विधीयते ॥ वस्तुतस्तु दिनद्वयेनैव पूर्वाङ्गोत्तराङ्गप्रायश्चित्तं विधेयमित्युचितं प्रतिभाति। तथैवास्माभिः प्रयोगे योजितमित्यलम्।

१ सर्वस्य पञ्चगव्यस्य पेयत्वाद्गोमूत्रादि सर्वं स्वल्पं स्वल्पं ग्राह्यम्। उर्वरितस्य त्यागायोगात्।

२ प्रत्याम्नायभूतद्रव्याणि अतिकृच्छ्रे सांतपने च गोद्वयम् ॥ २ ॥ पराके तप्तकृच्छ्रे च गोत्रयम् ॥ ३ ॥ कृच्छ्रातिकृच्छ्रे गवां चतुष्टयं वा ॥४॥ चान्द्रायणेऽष्टौ ८ षट् ६ चतस्रः ४ तिस्रो ३ वा गावः ॥ मासं पयोव्रते यावकव्रते मासोपवासे च पंच गावः ॥ मासं गोमूत्रयावकव्रते षट् गावो देयाः। गोदानाशक्तौ निष्कनिष्कार्धपादान्यतमप्रमाणं हैमं रौप्यं वा धेनुमूल्यं देयम्॥ तदशक्तेन निष्कपादार्धरजतं तत्समं धान्यादि वा देयम् ॥ अशीतिगुंजात्मकः कर्षः, चत्वारः कर्षाः निष्कमिति ॥ अथ प्राजापत्यप्रत्याम्नायाः ॥ प्राजापत्याचरणाशक्तौ धेनुमेकाम् ॥१॥ अथवा दशसहस्रगायत्रीजपः ॥ २ ॥ गायत्र्या सहस्रतिलहोमः ॥ ३ ॥ (क्वचित्सहस्रं व्याहृत्या तिलहोम उक्तः ॥) शतद्वयं प्राणायामस्य वा ॥ ४ ॥ द्वादश ब्राह्मणभोजनं वा ॥ ५ ॥ वेदसंहितापारायणम् ॥ ६ ॥ योजनतीर्थयात्रा ॥ ७ ॥ द्वादशसहस्रं नमस्काराः ॥ ८ ॥ इति प्राजापत्यप्रत्याम्नायाः ॥ अहोरात्रोपवासाचरणे एकविप्रभोजनम् ॥ १ ॥ वा सहस्रं गायत्रीजपः ॥ २ ॥ द्वादश प्राणायामा वा ॥ ३ ॥

सव्यकरे उपयमनकुशानादाय ब्रह्मणाऽन्वारब्धो दक्षिणं जान्वाच्य जुहुयात् ॥ ॐभूः स्वाहा इदमग्नये न मम ॥ ॐभुवः स्वाहा इदं वायवे न मम ॥ ॐस्वः स्वाहा इदं सूर्याय न मम ॥ ॐ त्वन्नोऽअग्ने वरुणस्य० ॥ ॥ स्वाहा इदमग्नीवरुणाभ्यां न मम ॥ ४ ॥ ॐ सत्वन्नोऽअग्नेवमो० ॥ ॥ स्वाहा इदमग्नीवरुणाभ्यां न मम ॥ ५ ॥ ॐ अयाश्चाग्ने० ॥ स्वाहा इदमग्नये अयसे न मम ॥ ६ ॥ ॐ ये ते शतं वरुण० ॥ स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ७ ॥ ॐ उदुत्तमं० ॥ ॥ स्वाहा इदं वरुणायादित्यायादितये च न मम ॥ ८ ॥ ॐप्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ९ ॥ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ संस्रवप्राशनम् ॥ कुशपवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ हस्ते प्रणीतोदकं गृहीत्वा ॥ मया कृतस्योत्तराङ्गप्रायश्चित्तकर्मणः सांगतासिद्ध्यर्थम् इदं पूर्णपात्रं ब्रह्मणे तुभ्यमहं संप्रददे न मम ॥ इति ब्रह्मणे पूर्णपात्रं दक्षिणां वा दत्वा अग्ने पश्चात् प्रणीताविमोकः तेनोदकेन यजमानस्य शिरसि आपः शिवः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमित्यभिषेकं कुर्यात् ॥ ततो भोजनसङ्कल्पः हस्ते जलं गृहीत्वा मयाचरितस्य पूर्वोत्तराङ्गप्रायश्चित्तकर्मणः साङ्गतासिद्ध्यर्थं यथासङ्ख्याकान्ब्राह्मणान्भोजयिष्ये तेन कर्माधीशः प्रीयतां न मम ॥ रुद्रकल्पद्रुमकारैस्तूत्तराङ्गप्रायश्चित्ते पञ्चगव्यस्य होमो नोक्तः ॥ ततो गोभूतिलहिरण्याज्यं वासो धान्यं गुडानि च ॥ रौप्यं लवणमित्याहुर्दश दानानि पण्डिताः ॥ इति प्रायश्चित्तिना यथाशक्ति अत्रावसरे दश दानानि देयानि ॥ पृथक् पृथक्

---

१ प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यचेदाज्याद्धविः ॥

२ उत्तराङ्गप्रायश्चित्ते पूर्वाङ्गप्रायश्चित्तवदेव विष्णुपूजनं विष्णुश्राद्धं व्यस्तसमस्तव्याहृत्याज्यहोमो विधेयो न तु पञ्चगव्यस्य होमः ॥ तत्रेदम् ॥ अत्रान्ते न ब्रह्मकूर्चहोमः तत्संस्कृतस्य पञ्चगव्यस्याग्रे प्राशनाभावात् ॥ अत्रास्मदीयाभिप्रायस्तु अन्यत्र समस्तव्याहृतीनां प्रायश्चित्तार्थं भवतु कदाचिद्विशेषोपादानम् ॥ परञ्च शरीरशुद्ध्यर्थं क्रियमाणे पूर्वोत्तराङ्गप्रायश्चित्तहोमे पूर्वाङ्गप्रायश्चित्तहोमवदुत्तराङ्गप्रायश्चित्तेऽपि समस्तव्याहृत्यादिपञ्चगव्यान्तहोमवाचकमन्त्रसमुदायाङ्गिनः प्रायश्चित्तस्य एकाङ्गरूपपञ्चगव्यहोमस्यानुपादानं सर्वथैवायुक्तम् । अङ्गिनोऽङ्गानां विभागकर्तुमयोग्यत्वादशास्त्रीयत्वाच्च । उत्तराङ्गे पञ्चगव्यस्य होमे का क्षतिरित्यपि अनवगमाच्च । तथैव कात्यायनहरिहरप्रभृतिभिः शिष्टैरप्यस्मिन्विषये स्वाभिप्रायस्याप्यनुक्तत्वाच्च ॥ एवमालोच्यास्माभिस्तूत्तराङ्गप्रायश्चित्ते स्वीक्रियते पञ्चगव्यस्य होम. ॥ विद्वांसोऽपि विचारयन्तु स्वबुद्ध्या किं भवद्भ्योऽपि रोचतेऽङ्गिनोऽङ्गानां विच्छेद· ॥ भवतु नाम पूर्वाङ्गे एव पञ्चगव्यस्य प्राशनं तारकोदये निशामुखे ॥ यदि प्रायश्चित्ताहुतौ पञ्चगव्यहोमस्य प्राशनमेव मुख्यफलश्चेत् तत्तु पूर्वाङ्गे निर्वृत्ते नास्माकमुत्तराङ्गप्रायश्चित्ते पञ्चगव्यस्य प्राशनेऽत्याग्रहः ॥ परञ्च नास्माकं सम्मतोऽङ्गिनोऽङ्गाना विच्छेदः । अतोऽनुक्तोऽपि पञ्चगव्यस्य होमो ह्युत्तराङ्गेऽवश्यमेव विधेय इत्येवास्माकं मतम् ॥ पूर्वाङ्गोत्तराङ्गे मयूखकारेणापि स्वीकृतः पञ्चगव्यस्य होमः ॥

दानाशक्तौ यथाशक्ति तत्तन्मूल्यं गृहीत्वा देशकालौ संकीर्त्य दश दानप्रतिष्ठासिद्ध्यर्थम् इदं यथाशक्ति तन्मूल्यं ब्राह्मणाय विष्णुरूपाय तुभ्यमहं संप्रददे॥ इति दद्यात् ॥ ततः करसंपुटौ कृत्वा ब्राह्मणप्रार्थनां कुर्यात् ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं च यत्कृतम् ॥ भवत्प्रसादात्तत्सर्वमच्छिद्रं पूर्णमस्तु मे ॥ एवं प्रार्थनां विधाय ब्राह्मणान्वदेत् ॥ भो विप्राः! करिष्यमाणगायत्रीपुरश्चरणकर्मण्यधिकारार्थं पूर्वोत्तराङ्गसहितं मया यत् प्रायश्चित्तं कृतं तत् अच्छिद्रमस्तु॥ अच्छिद्रमस्त्विति विप्राः प्रतिवचनं दद्युः ॥ तद्यथा । व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ सर्वं भवतु तेऽच्छिद्रं यस्य चेच्छन्ति वै द्विजाः ॥ पुनः प्रायश्चित्ती करसंपुटौ कृत्वा विष्णुं प्रार्थयेत् ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥ इति विष्णुं नत्वा अग्नेर्विसर्जनं मूर्तौ सत्यां विष्णोश्च विसर्जनं विधाय वृतानां ब्राह्मणानां यथाशक्ति पूजनं कृत्वा तेभ्यो दक्षिणां दद्यात् ॥ स्त्रीशूद्राणां तु पञ्चगव्यप्राशने विकल्पः॥

## ॥ अथ नूतनयज्ञोपवीतधारणविधिः ॥

अत्र केचन शिष्टाः प्रायश्चित्तिनो नूतनयज्ञोपवीतधारणमपि कारयन्ति॥ तद्यथा। प्रायश्चित्ती आचम्य प्राणायामं कृत्वा देशकालौ स्मृत्वा करिष्यमाणगायत्रीपुरश्चरणकर्मण्यधिकारार्थं नूतनयज्ञोपवीतधारणं करिष्ये इति संकल्प्य ततो यज्ञोपवीतम् आपोहिष्ठेति त्रिभिर्मंत्रैः संप्रोक्ष्य पात्रे धृत्वा ॐइदं विष्णु० ॥ ॥ इतिमंत्रेण यज्ञोपवीतसूत्रस्य त्रिगुणीकरणं कुर्यात्॥ ततो दश गायत्र्याऽभिमन्त्र्य तन्तुषु देवतानामावाहनं कुर्यात् ॥ प्रथमतन्तौ—ॐ कारम् आवाहयामि ॥ १ ॥ द्वितीयतन्तौ—ॐअग्निंदूतं० ॥ ॥ अग्निमावाहयामि ॥२॥ तृतीयतन्तौ—ॐनमोस्तु सर्पेभ्यो० ॥ ॥ सर्पानावाहयामि ॥३॥ चतुर्थतन्तौ—ॐवयद्धं सोम० ॥ ॥ सोममावाहयामि ॥ ४ ॥ पंचमतन्तौ—उदीरतामवर० ॥ ॥ पितॄनावा० ॥ ५ ॥

---

१ स्त्रीशूद्राणां पञ्चगव्यप्राशने विकल्पः। स्मृत्यर्थसारकारास्तु ब्राह्मणद्वारा पञ्चगव्यं कारयित्वा तूष्णीं पेयमिति वदन्ति। [illegible] शूद्रैः [illegible] पञ्चगव्यं न पेयं परन्तु प्रायश्चित्तकर्मणि तु नित्यमेव पेयमित्यपि वदन्ति। [illegible] होमोऽपि तथैव ब्राह्मणद्वारा भवत्येव अतस्तयोभयोर्न दोषः इत्यप्यवगम्यते। एतेषां [illegible] ज्ञेया ॥

[illegible] पूर्वोत्तराङ्गप्रायश्चित्तहोमे कर्तव्ये पूर्वं प्रायश्चित्तं पञ्चगव्यप्राशनान्तं [illegible] [illegible] [illegible] [illegible] निर्णय [illegible] [illegible] कृत्वा [illegible] [illegible] [illegible] पुनराग्रे समापनीयम् ॥

॥ षष्ठतन्तौ—ॐ प्रजापतेनत्व० ॥ ६५/२३ ॥ प्रजापतिमावाहयामि ॥ ६ ॥ सप्तमतन्तौ—ॐ आनोनियुद्भिः० ॥ २८/२७ ॥ अनिलमावाहयामि ॥७॥ अष्टमतन्तौ—ॐ यमाय त्वां० ॥ ९/३८ ॥ यममावाहयामि ॥ ८ ॥ नवमतन्तौ—ॐविश्वेदेवा स० ॥ ३४/७ ॥ विश्वान् देवानावाहयामि ॥९॥ ततो यज्ञोपवीतग्रन्थिषु ब्रह्मादिदेवतानामावाहनम्॥ ग्रन्थिमध्ये ॥ ॐब्रह्मजज्ञानं० ॥ ३/१३ ॥ ॐब्रह्मणे नमः ब्रह्माणमावाहयामि ॥१॥ ग्रन्थिमध्ये—ॐइदं विष्णुर्वि० ॥ १५/५ ॥ ॐविष्णवे नमः विष्णुमावाहयामि ॥ २ ॥ ग्रन्थिमध्ये—ॐनमस्ते रुद्र० ॥ १/१६ ॥ ॐ रुद्राय नमः रुद्रमावाहयामि ॥३॥ ॐ मनोजूतिर्जुषता० ॥ १३/२ ॥ इति प्रणवादितन्तुग्रन्थिदेवता यथास्थानं सुप्रतिष्ठिता वरदा भवत॥ ॐप्रणवादितन्तुदेवतासहितग्रन्थिदेवताभ्यो नमः गन्धाक्षतपुष्पाणि समर्पयामि ॥ इति गन्धाक्षतपुष्पैर्मनसा वा संपूज्य यज्ञोपवीतं ध्यायेत् ॥ ॐ प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् ॥ ब्रह्मत्वसिद्ध्यै च यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रह्मसूत्रम् । एवं ध्यात्वोपवीतं हस्तयोर्धृत्वा सूर्याय प्रदर्शयेत् ॥ ॐतच्चक्षुर्देवहितं० ॥ २४/३६ ॥ हस्ते जलं गृहीत्वा ॥ ॐयज्ञोपवीतमितिमंत्रस्य परमेष्ठी प्रजापतिर्ऋषिः त्रिष्टुपछन्दः लिंगोक्ता देवता नूतनयज्ञोपवीतधारणे विनियोगः ॥ ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि॥ इत्यनेन मंत्रेण स्वदक्षिणबाहुमूर्ध्वमुद्धृत्य यज्ञोपवीतं धृत्वा आचामेत् ॥ अन्यान्यपि एवं रीत्या पृथक् पृथक् धृत्वाऽऽचामेत् ॥ पश्चाज्जीर्णसूत्रत्यागः ॥ एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया ॥ जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥ इति शिरोमार्गेण जीर्णयज्ञोपवीतं निःसार्य शुद्धभूमौ जले वा त्यजेत् ॥ ततो यथाशक्ति गायत्रीमन्त्रजपं कृत्वा ॥ हस्ते जलं गृहीत्वा ॥ अनेन नूतनयज्ञोपवीतधारणाङ्गत्वेन कृतेन गायत्रीमन्त्रजपकर्मणा भगवान्सविता सूर्यनारायणः प्रीयताम् ॥ अनेन नूतनयज्ञोपवीतधारणाख्येन कर्मणा मम करिष्यमाणगायत्रीपुरश्चरणकर्मण्यधिकारसिद्धिद्वारा श्रीभगवान् परमेश्वरः प्रीयताम् ॥

॥ इति नूतनयज्ञोपवीतधारणविधिः ॥

---

एवं नूतनयज्ञोपवीतं धृत्वा प्रायश्चित्तिना तस्मिन्नहनि उपवासः कार्यः ॥ अशक्तौ हविष्याशी स्यात् ॥ स्वयमेव गायत्रीपुरश्चरणकर्ता चेत् प्रथमदिवसे कृतप्रायश्चित्तो द्वितीयदिवसे स्वकीयं संध्यादि प्रातःकृत्यं विधाय ॥ हस्ते जलं गृहीत्वा ॥ देशकालौ संकीर्त्य करिष्यमाणामुकसंख्याकगायत्रीपुरश्चरणकर्मणि मम

जपानुष्ठानयोग्यताप्राप्त्यर्थं मंत्रसिद्ध्यर्थञ्च सव्याहृतिगायत्रीमंत्रस्यायुतसंख्याकं जपमहं करिष्ये । एवं संकल्पं विधाय जपं स्वयं ब्राह्मणद्वारा वा कुर्यात् ॥ तदनन्तरं गायत्रीपुरश्चरणं स्वयं ब्राह्मणद्वारा वाऽऽरभेत ॥

॥ इति पूर्वोत्तराङ्गप्रायश्चित्तप्रयोगः समाप्तः ॥

## ॥ अथ गायत्रीपुरश्चरणमुहूर्तादिकम् ॥

॥ अथ गायत्रीपुरश्चरणार्थं मुहूर्तादिकं पुण्यस्थलं पुरश्चरणभेदाश्च कथ्यन्ते॥ अत्र मासादयो निषेधद्वारा उक्ता इति दृश्यन्ते ॥ यथा ॥ ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकम् ॥ गुरुभार्गवमौढ्यादि वर्जयेच्च प्रयत्नतः ॥ १ ॥ अङ्गारकशनिवारौ व्यतीपातञ्च वैधृतिम् ॥ अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीम् ॥ २ ॥ चतुर्दशीममावास्यां प्रदोषञ्च तथा निशाम् ॥ यमाग्निरुद्रसार्पेन्द्रवसुश्रवणजन्मभम् ॥ ३ ॥ मेषकर्कतुलाकुम्भमकरालिकलग्नकम् ॥ सर्वाण्येतानि वर्ज्यानि पुरश्चरणकर्मणि ॥ ४ ॥ पुनस्तत्र पुरश्चरणकालोऽपि प्रदर्शितः ॥ चन्द्रतारानुकूले च शुक्लपक्षे विशेषतः ॥ पुरश्चरणकं कुर्यान्मन्त्रसिद्धिः प्रजायते ॥५॥ पर्वताग्रे नदीतीरे बिल्वमूले जलाशये । गोष्ठे देवालयेऽश्वत्थ उद्याने तुलसीवने॥१॥ पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्रस्थलेऽपि च । पुरश्चरणकृन्मन्त्री सिध्यते च न संशयः ॥ २ ॥ काशीपुरी च केदारो महाकालोऽथ नाशिकम् । त्र्यंबकञ्च महाक्षेत्रं पञ्च द्वीपा इमे भुवि ॥ ३ ॥ एवं त्रिभिः श्लोकैः गायत्रीपुरश्चरणोपयोगि पुण्यस्थलं वसिष्ठसंहितायां निर्दिष्टम् ॥ तथापि "चित्तैकाग्रस्थलेऽपि" इति वसिष्ठसंहितायां वदता महर्षिणा दर्शितानां काश्यादिपवित्रस्थलाना सत्त्वेऽपि कर्तुः स्वस्य चित्तैकाग्रतायां गृहमपि पवित्रस्थलं स्पष्टतयाऽभिहितम् ॥ एवं कालस्य पुण्यक्षेत्रस्य च निर्णयं कृत्वा जपाधिकारार्थं पूर्वोत्तराङ्गं प्रायश्चित्तं विधाय स्वस्य चन्द्रतारानुकूले शुभे मासे शुक्लपक्षे जपारंभं स्वयं ब्राह्मणद्वारा वा कुर्यादित्यर्थः ॥

### ॥ वृतानां ब्राह्मणानामपि धर्मा लक्षणानि च ॥

जापकाश्च द्विजाः शुद्धाः कुलीना ऋजवस्तथा ॥ सन्ध्यास्नानरता नित्यं शौचाचारपरायणाः ॥ १ ॥ श्रोत्रियाः सत्यवाचश्च वेदशास्त्रार्थकोविदाः ॥

---

यद्विदाऽन्यस्यादानं तांत्रिकं वैदिकं तथा ॥ विना जप्त्वा तु गायत्रीं तत्सर्वं निष्फलं भवेत् ॥ इति देवीभागवतवचनानुरोधेन पूर्वं स्यादविश्रयमयुतं गायत्रीमयुतसंख्याकां जप्त्वैव पुरश्चरणं कुर्यादित्यर्थं ॥ तथैव गायत्रीपुरश्चरणकर्मणि वृतानां ब्राह्मणानामपि मन्त्रसिद्ध्यर्थमयुतसंख्याकं जपं कृत्वैव यजमानकर्तृकजपकर्मण्यधिकार इति निष्कर्षं ॥

अक्रोधनाः पुराणज्ञाः सततं ब्रह्मचारिणः ॥ २ ॥ देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥ इत्यादिगुणसंयुक्ता जापका मन्त्रसिद्धिदाः ॥ ३ ॥

॥ अथाधोलिखितलक्षणसंपन्ना ब्राह्मणा जपकर्मणि सर्वथा वर्जनीयाः ॥

नास्तिकान्भिन्नमर्यादान्कृतघ्नान्वेदनिन्दकान्॥स्नानसन्ध्याविहीनाँश्च दूरतः परिवर्जयेत् ॥ ४ ॥ पुरश्चरणदीपिकायान्तु व्यसनिनः अधिकाङ्गा हीनाङ्गा अतिकृष्णा गोलका गुरुद्विजातिनिन्दकाः परापवादरता इत्यादिदोषदुष्टा हेया इत्युक्तम् ॥ व्यसनिन इत्यादिगणना त्वस्माभिः संक्षेपतः कृता परञ्च स्वधर्मरहितास्त्याज्या एव ॥

॥ अथ पुरश्चरणलक्षणं युगभेदेन न्यूनाधिकजपसंख्याप्रकारश्च ॥

अथ पुरश्चरणलक्षणम् ॥ पूजा त्रैकालिकी नित्यं जपस्तर्पणमेव च । होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ यत्र पूर्वोक्तानि लक्षणानि तत्पुरश्चरणम् ॥ वैशंपायनसंहितायां जपसंख्या ॥ लभतेऽभिमतां सिद्धिं चतुर्विंशतिलक्षतः । जपो ह्ययुतसंख्याकैरथवा च सहस्रकैः ॥ १ ॥ अयुतं सहस्रं वा स्वयं ब्राह्मणद्वारा वा प्रत्यहं जपं कुर्यादित्यर्थः ॥ एके तु कलौ षण्णवतिलक्षजपात्मकमेव गायत्रीपुरश्चरणं कर्तव्यम् इति वदन्ति ॥ तथैव स्वस्य होमाशक्तावपि—होमाशक्तौ जपं कुर्युर्होमसंख्याचतुर्गुणम् ॥ षड्गुणं चाष्टगुणितं यथासंख्यं द्विजातयः ॥ १ ॥ उक्तजपसंख्यातो ब्राह्मणक्षत्रियवैश्यैर्यथाक्रमं होमसाङ्गतासिद्धये चतुःषडष्टगुणितोऽधिको जपः कार्यः । अस्मिन्कलियुगे द्विजातिभिः पुरश्चरणविधौ चिकीर्षितमंत्रस्य शास्त्रोक्तमंत्रजपसंख्यातः स्वेन ब्राह्मणद्वारा चतुर्गुणितस्त्ववश्यमेव जपः कर्तव्यः । तत्र प्रमाणम् ॥ कल्पोक्तैव कृते संख्या त्रेतायां द्विगुणा भवेत् ॥ द्वापरे त्रिगुणा प्रोक्ता कलौ संख्या चतुर्गुणा ॥ कल्पोक्ता इति पदेन तत्तच्छास्त्रोक्ता इति ज्ञेयम् ।

॥ अथ गायत्रीपुरश्चरणभेदा होमद्रव्याणि च ॥

त्र्यष्टचतुर्विंशतिलक्षात्मकत्वेन गायत्रीमंत्रस्य पुरश्चरणे त्रयो भेदा दृश्यन्ते ॥ यथा ॥ आत्मतत्त्वशोधनार्थाय लक्षत्रयं जपेद्बुधः ॥ अथवाऽप्यष्टलक्षं तु श्रुतिनोक्तेन पूर्वकम् ॥ १ ॥ तथैव पारिजातोदाहृते ऋग्विधाने लक्षत्रयात्मकं पुरश्चरणमभिहितम् ॥ अथ वेदादिगीतायाः प्रसादजनकं विधिम् ॥ गायत्र्याः संप्रवक्ष्यामि धर्मकामार्थमोक्षदम् ॥ मध्याह्ने मितभुङ् मौनी त्रिःस्नानार्थतत्परः ॥ जपेल्लक्षत्रयं धीमान्परं सायुज्यमाप्नुयात् ॥ १ ॥ तन्त्रान्तरे द्वात्रिंशल्लक्षात्मकं गायत्रीपुरश्चरणं कथितम् । प्रपञ्चसारे तु चतुर्विंशतिलक्षात्मकं गायत्रीपुरश्चरणमतीवोत्तमोत्तमभि-

त्यभिहितम् ॥ यथा ॥ भूयस्त्वक्षरलक्षं गायत्रीं संयतात्मको जप्त्वा ॥ जुहुयात्पायसतिलघृतदूर्वाभिर्दुग्धचरुसमिद्भिरपि॥१॥एकैकं त्रिसहस्रं मन्त्री समभीष्टसिद्धयै मुक्त्यै ॥ अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात् ॥ २ ॥ दुरितच्छेदनविषये दीर्घायुषे च विशदमतिः ॥ आयुष्कामो जुहुयात् पायसहविराज्यकेवलाज्यैश्च ॥ ३ ॥ दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्याकम् ॥ अथ त्रिमधुसहितैररुणैर्जुहुयात्सरोरुहैरयुतम् ॥ ४ ॥ नष्टश्रीरपि भूयो भवति मनोज्ञो मन्दिरं लक्ष्म्याः ॥ अन्नार्थं तैरपि पालाशैर्ब्रह्मवर्चसे जुहुयात् ॥ ५ ॥ सर्वैरेतैर्जुहुयात्सर्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥ एवं प्रपञ्चसारोक्तविधिना कामनाभेदेन तत्तद्द्रव्यैर्होमो विधेयः॥तथैव चतुर्विंशतिलक्षजपात्मके गायत्रीपुरश्चरणेऽपि प्रपञ्चसारानुरोधिन्यां शिवरामकृतप्रकाशिकायामपि गव्यदुग्ध १ ओदन २ तिल ३ दूर्वा ४ अश्वत्थ ५ उदुम्बर ६ प्लक्ष७वट ८ समिधाख्याष्टद्रव्येण प्रतिद्रव्यं त्रिसहस्रं होममुक्त्वा चतुर्विंशतिसहस्रसंख्यात्मक एव होम उक्तः न तु जपदशांशको होमस्तर्पणादिकमपि ॥ तेनाष्टद्रव्यातिरिक्तकेवलतिलादिद्रव्यसाध्यहोमेऽप्येवमेवेति न भ्रमितव्यम् ॥ अष्टद्रव्यसाध्ये होमे विशिष्टशास्त्रार्थत्वात् ॥ अतस्तिलादिद्रव्यैः क्रियमाणे होमे तत्तद्दशांशविधिनैव होमतर्पणमार्जनब्राह्मणभोजनादिकं विधेयमिति सुधीभिर्ज्ञेयम् ॥

॥ इति गायत्रीपुरश्चरणमुहूर्तादिकं समाप्तम् ॥

कर्मारंभप्रतिबन्धकनिमित्तकानामनेकत्वेऽप्यावश्यकप्रतिबन्धकप्रतिप्रसवोक्तिसहितो रुद्रकल्पद्रुमाद्यनुसारी निर्णयसंग्रहः ॥

न धार्मिककृत्येषु मुहूर्तादीनामीक्षणस्यावश्यकता ॥ नानध्यायकृतप्रतिबन्धः ॥ न कर्मारब्धे सत्याशौचसंपातज्ञातेऽपि मध्ये तस्य त्यागः ॥ इत्यादिविषये प्रमाणान्युपलभ्यन्ते ॥ स्वेष्टं समीक्षमाणेन केनापि विबुधेन "मनुष्यशरीरस्य अस्थि-

१ अक्षरलक्षमिति पदेन सामान्यतो यस्य कस्यापि मंत्रस्याक्षरसंख्यापरिमितं प्रतिवर्णं लक्षात्मकं जपं कुर्यादित्यर्थः ॥ इदं न सार्वत्रिकम् ॥

२ परशुरामकारिकायाम्—जपाद्दशांशतो होमस्तर्पणं तद्दशांशतः ॥ मार्जनं तद्दशांशेन दशांशाद्विप्रभोजनम् ॥ १ ॥ पुरश्चर्याचिन्तामणावपि—जपाद्दशांशतो होमस्तथा होमात्तु तर्पणम् ॥ नमोऽन्तमंत्रमुच्चार्य तदन्ते देवताभिधाम् ॥ २ ॥ द्वितीयां तामहं पश्चात्तर्पयामि नमोऽन्तकम् ॥ तर्पणस्य दशांशेन मार्जनं कथितं किल ॥३॥ तर्पणे देवतारूपं ध्यात्वाऽऽत्मानं प्रपूज्य च ॥ नमोऽन्तमंत्रमुच्चार्य तदन्ते देवताभिधाम् ॥४॥ द्वितीयां तामहं पश्चादभिषिञ्चाम्यनेन तु ॥ तोयैः कुशेन शुद्धैरभिषिञ्चेत्स्वमूर्धनि ॥ ५ ॥ अयं निष्कर्षः ॥ यथा ॥ तन्त्रा-इति गायत्रीमंत्रमुच्चार्य ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ सवित्रे नमः सवितारं तर्पयामि । गायत्रीमन्त्रमुच्चार्य आत्मानमभिषिञ्चामि ॥ मार्जनं तु स्वमूर्धनि कर्तव्यमुक्तश्लोकप्रामाण्यात् ॥ होमे तु प्रणवव्याहृतिरहितस्य चतुर्विंशत्यक्षरस्य गायत्रीमंत्रस्य प्रयोगादाननमिति निर्णयसिन्धौ ॥

रत्वात् किञ्चित्कालानन्तरं किं भविष्यतीत्यादिज्ञानस्याज्ञानाच्च श्वः श्वः करिष्यामि" इति उपासनायां धार्मिकेषु कृत्येषु च कालान्तरप्रतीक्षा न कदापि कर्तव्येति मनुष्यस्य मुख्यो धर्मः मनुष्याणां श्वःसंबन्धिज्ञानाभावात् 'न कोऽपि तद्वेत्तीति ज्ञानाच्च ॥ एवमायुषोऽस्थिरत्वं जीवनसंबन्धिज्ञानाभावश्चैवं विचार्य परशुरामेणाप्युक्तम् ॥ यदैव जायते वित्तं चित्तं श्रद्धासमन्वितम् ॥ तदैव पुण्यकालोऽयं यतोऽनियतजीवितम् ॥ अतः सर्वेषु जपहोमादिकेष्वन्यसर्वधर्मकृत्येषु च न मुहूर्तावलोकनापेक्षा न तत्कालावध्यवस्थानं शरीरस्येति स्वतो दर्शनात् ॥ परञ्च सति संभवे तु सर्वं कर्म मुहूर्तादिकं दृष्ट्वैव कर्तव्यम् ॥ यत्तु—अल्पं जपेदनध्याये पर्वण्यल्पतरं जपेत् ॥ वेदाँश्चैव तथा रुद्रान्स्वाध्याये केवलं जपेत् ॥ तथैव—इन्दोर्वृद्धिक्षये प्राप्ते ब्रह्मयज्ञं न कारयेत् ॥ न जपेद्वैदिकं जाप्यं गायत्र्यष्टोत्तरं शतम् ॥ इत्यादिपरशुरामप्रभृतिशिष्टवचनान्यनध्यायदिवसान् वर्जयित्वा स्वाध्याये एव विशिष्टजपपूजापराणि । तथैवानध्यायदिवसे तु अल्पाल्पतरं जपं वेदानध्ययनञ्चानुष्ठेयमिति चेन्न ॥ दशोत्तरोत्तरगुणः प्रकाशोपांशुमानसः ॥ जपो वेदोपनिषदां य उक्तः सर्वपापहा ॥ अनध्यायेऽप्ययं कार्य इत्याह भगवान् मनुः ॥ तथैव मनोर्द्वितीयं वचनम् ॥ वेदोपकरणे चैव जपे चैव तु नित्यके ॥ नानुरोधोऽस्त्यनध्याये होममंत्रेषु चैव हि ॥ (अत्र वेदोपकरणशब्देन प्रतिवार्षिकं क्रियमाणं ह्युपाकर्म ज्ञेयम् ॥) इति पूर्वोक्ताङ्गिरसवचनप्रामाण्यान्नित्यक्रियमाणस्य सहस्रप्रभृत्यष्टोत्तरशतगायत्रीमंत्रजपस्य सर्वथाऽनध्यायदिवसेऽपि अनुष्ठेयदर्शनात् ॥ अनध्यायेऽप्ययं कार्यः । जपे चैव तु नित्यके ॥ इत्यादिपूर्वोक्तेश्च ॥ परञ्चानध्यायवाचकानामष्टम्यादीनां नानध्यायवाचकत्वं किन्तु आत्मनो देशस्य च यत्र अशुचित्वं तदेव ह्यनध्यायौ सर्वज्ञेयौ ॥ अतः सर्वत्र स्मृत्युक्ताः परशुरामेणोदाहृताश्चान्येऽप्यनध्यायाः स्वाध्यायविषया एव बोध्याः ॥ परञ्च येन केनापि कादाचित्कमनियमतः श्रीमहारुद्रप्रभृतिजपहोमादिकं क्रियते चेत्तेन न कदाप्यनध्यायदिवसे तस्य प्रारम्भः स्वाध्यायो वा कार्य इत्येव निष्कर्षः ॥ अतस्तदर्थमेव मुहूर्तादिविधायकशास्त्रैरनध्यायदिवसे शुभे मुहूर्ते इत्यादिकं मुहूर्तप्रकरणे कथ्यते ॥ अपि च यैर्नियमेन जपहोमदेवार्चनादिधार्मिकं कर्म प्रत्यहं क्रियते तेषां तु आशौचप्रवृत्तेः प्राक् देवार्चनाद्युपक्रमे तदसमाप्तेर्मध्येऽपि आशौचेऽन्यद्वारा ज्ञाते सति तत्तज्जपहोमदेवार्चनादिकं समाप्यैव आशौचनिमित्तं स्नानादिकं कर्तव्यम् न त्वाशौचसंपातदर्शनादसमाप्यैव जपहोमदेवार्चनादीना मध्ये त्यागो विधेयः ॥ तैस्तु आशौचादिज्ञातेऽपि आशौचमध्ये सर्वमासमाप्ति नियमेनानुष्ठीयमानं जप-

होमदेवार्चनादिकं विधेयमेव ॥ नात्र तेषामपवित्रता शास्त्रोक्तिविरोधश्च ॥ लघुविष्णुस्तु नित्यनैमित्तिकेषु जपविवाहयज्ञयागादिसर्वकर्मसु नाशौचसंपात इति कथयति ॥ यथा । व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ॥ आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ॥ नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ यज्ञे ब्राह्मणादीनामामधुपर्कान्तं पूजनं वरणशब्देन ज्ञेयम् ॥ यथा—गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः इति ॥ तथैव—ऋत्विजां दीक्षितानाञ्च यज्ञियं कर्म कुर्वताम् ॥ इत्यादियाज्ञवल्क्योक्तेश्च ॥ अतस्तत्र तत्र प्रारब्धकर्मणः स्वीयाद्यपदार्थावधारणमेव प्रारंभशब्देन ग्रहणीयम् ॥ यथा विवाहे कन्यापितुः कन्याप्रदानसङ्कल्पः प्रारंभः ॥ वरस्य तदूर्ध्वं पाणिग्रहणहोमादिकं कर्म प्रारंभः ॥ श्राद्धकर्तुः श्राद्धार्थं पाकस्य निष्पत्तिक्रियारंभ एव प्रारंभः ॥ तथैव श्राद्धभोक्तुः भोजनार्थं लब्धनिमंत्रणं प्रारंभः ॥ इति पूर्वोक्ता सर्वव्यवस्था कालतत्त्वविवेचनकारादिभिरेव कृतेति ज्ञेया ॥ परञ्च स्वकृतधर्मप्रकाशे शंकरादयस्तु यदा आशौचज्ञानात्पूर्वं पाकनिष्पत्तिकृतसङ्कल्पतानिमंत्रणानां त्रयाणां समुच्चये जाते सत्येव श्राद्धे आशौचाभाव एवेति कथयन्ति ॥ एकेनापि न्यूने श्राद्धे सत्याशौचज्ञाते न कदापि श्राद्धं कर्तव्यम् ॥ तत्र आशौचाभावप्रतिषेधप्रतिपादकतत्तत्स्मृतिवचनेषु पाकनिष्पत्तिप्रभृतिनिमंत्रणान्तानां त्रयाणामेव समुच्चयेनोपादानात् ॥

॥ अथ कर्मारम्भप्रतिबन्धकनिमित्तनिर्णयः ॥

सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ॥ पञ्चाब्दात्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥ सहोपनीत्या कुर्याच्चेत्तदा दोषो न विद्यते ॥ पुत्रस्य मातरि गर्भिण्यां पञ्चाब्दात् प्राक् चूडाकर्म कारयेत्तदूर्ध्वं तु न कारयेदित्येवार्थः ॥ तथा च कैश्चिदुदाहृतस्य—सूनोर्मातरि गर्भिण्यां मौञ्जीचूडे न कारयेत् ॥ इति वचनस्य समूलत्वेऽपि सहितयोर्मौञ्जीचूडाकर्मणोर्न निषेधः किन्तु प्रत्येकं निषेधः ॥ प्रकारान्तरेण वशिष्ठोऽपि निषेधं वक्ति ॥ गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म च ॥ पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥ आपञ्चमासं कार्यमित्यर्थः । कात्यायनस्तु ॥ कुले ऋतुत्रयादर्वाङ् मण्डनान्न तु मुण्डनम् ॥ प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥ ऋतुत्रयशब्देन षण्मासा बोध्याः ॥ कुलशब्देन पुरुषत्रयपर्यन्तं स्वगोत्रिणः प्रति कुलं ज्ञेयम् ॥ अत्र प्रवेशनिर्गमशब्दयोरर्थं कात्यायनः स्वयमेव कथयति ॥ पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ॥ मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम् ॥ अयं निष्कर्षः ॥ एकस्य पुत्रस्य पूर्वं निर्वृत्तस्य मौञ्जीविवाहोभयान्यतर-

वाचकमण्डनकर्मणो द्वितीयस्य चूडाकर्मरूपं मुण्डनाख्यं (चौलं) कर्म षण्मासाभ्यन्तरे न विधेयम् । तथैव पुत्रोद्वाहनरूपं प्रवेशाख्यं कर्म कृत्वा पुत्र्युद्वाहरूपं निर्गमाख्यं कर्मापि षण्मासाभ्यन्तरे न विधेयम् ॥ तथैव विवाहमौञ्जीचूडाकर्मरूपमङ्गलत्रयमपि न कर्तव्यम् ॥ परञ्च ॥ मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम्। अभिन्नवत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ॥ अभेदे तु विनाशः स्यान्न कुर्यादेकमण्डपे ॥ वर्षभेदं विनापि दिवसभेदेनोभयतश्चौलात् प्रागूर्ध्वं मौञ्जीकर्मणो न दोषः॥ भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ॥ एकस्मिन्मण्डपे चैव न कुर्यान्मण्डनद्वयम् ॥ एतद्वचनमेकोदरप्रसूतविषयमित्यवगम्यते॥ अथ विवाहादिशुभकर्मारंभदिवसे तदूर्ध्वं वा कर्मकर्तुः स्त्रियो रजोदर्शने सन्निहितमुहूर्तान्तरालाभे श्रीशान्तिं विधाय चौलादि सर्वं विधेयम् ॥ तत्कारिकानिबन्ध स्पष्टीकृतम् ॥ यथा—सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् ॥ प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुद्ध्यति ॥ तथैव । अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते ।·श्रियं संपूज्य तत् कुर्यात् वृत्रहत्याभयंकरीम् ॥ हैमीं मापमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत्॥प्रत्यर्चं पायसं हुत्वाऽभिषिच्य शुभमाचरेत्॥ इत्यादिवचनैः सूतिकोदक्ययोरपि शुद्धिः कथिता॥उदक्याशब्देन रजस्वला बोध्या। परञ्च सन्निहितमुहूर्तान्तरालाभे एव पूर्वोक्ता व्यवस्थेति बोध्यम्॥ तथैव॥ केचन भाविप्रतिबन्धकानां निवृत्त्यर्थं नान्दीश्राद्धम् अपकृष्य कुर्वन्ति परञ्च तस्यापि प्रयोगरत्नेऽवधिः कथितः॥ एकविंशत्यहर्यज्ञे विवाहे दश वासराः। त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते॥ तथा च पारिजाते सन्निहितमुहूर्तान्तरालाभे विवाहार्थमुपयोगिसामग्र्यां कृतायाञ्च सूतकिनोऽपि विष्णुनाऽधिकारार्थमुक्तम्॥ अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद् घृतम् । गां दद्यात्पञ्चगव्याशी ततः शुद्ध्यति सूतकी ॥ १ ॥ संकटे समनुप्राप्ते सूतके समुपस्थिते । कूष्माण्डीभिर्घृतं हुत्वा गाश्च दद्यात्पयस्विनीः ॥ २ ॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥ यदैव सूतकप्राप्तिस्तदैवाभ्युदयक्रिया ॥ ३ ॥ एवं संकटप्राप्तौ शुद्धिं विधाय विवाहादौ सङ्कल्पितान्नभोजनेऽपि न दोषः॥ तथैव । विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । पूर्वसङ्कल्पितान्नेषु न दोषः परिकीर्तितः॥ तथैव। कन्याया विवाहात्प्राग् रजोदर्शने जाते तस्या विवाहयोग्यतासंपादनार्थमुपायमाहाश्वलायनः ॥ पिता ऋतून्स्वपुत्र्यास्तु गणयेदादितः सुधीः ॥ दानावधिं गृहे यत्नात् पालयेच रजोवतीम् ॥ दद्यात्तदृतुसंख्या गाः शक्तः कन्यापिता यदि । दातव्यैकाऽपि यत्नेन दाने तस्या यथाविधि ॥ दद्याद्वा

ब्राह्मणेष्वन्नमतिनिःस्वः सदक्षिणम् ॥ तस्यातीतर्तुसङ्ख्येषु वराय प्रतिपादयेत् ॥ उपोष्य त्रिदिनं कन्या रात्रौ पीत्वा गवां पयः ॥ अदृष्टरजसे दद्यात् कन्यायै रत्नभूषणम् ॥ तामुद्वहन्वरश्चापि कूष्माण्डैर्जुहुयाद् द्विजः ॥ इत्यादिवचनैः स्पष्टतया विवाहात्प्राग् दृष्टरजस्कायाः स्वकन्याया विवाहे शुद्ध्यर्थं तस्याः पिता शक्तश्चेदादित आविवाहं यावदृतुसंख्याः तावतीः पयस्विनीर्गाः दद्यात् । तावन्गोमूल्यं वा । अशक्तोऽपि यथाशक्त्येकां गां गोमूल्यं वा दद्यात् ॥ परञ्च तस्याः पिता अतिनिःस्वश्चेत् स्वकन्याया ऋतुसंख्येषु ब्राह्मणेषु सदक्षिणम् अन्नं दत्त्वा पश्चाद् विवाहं कुर्यात् ॥ तथैव दृष्टरजस्कायाः स्वकन्यायाः शुद्ध्यर्थं स्वां कन्यां विवाहात्प्राक् दिनत्रयम् उपवासं कारयित्वा उपवासान्ते च गव्यं पयः पाययित्वा अदृष्टरजस्कायै कन्यायै (कुमार्यै) यथाविभवं वस्त्राभूषणादिकञ्च कन्याहस्तेन दापयित्वा स्वकन्याया विवाहयोग्यता पितुर्भवति कन्यायाश्च ॥ तथैव वरेणापि स्वस्य वृषलीपतित्वादिदोषनिवृत्त्यर्थं कूष्माण्डीभिर्मन्त्रैराज्येन होमं विधाय तया सह विवाहः कार्यः ॥ यज्ञपार्श्वे तु यदा विवाहसंबन्धिहोमकर्मणि प्रवृत्ते तदैव कदाचित् तस्या रजोदर्शने जाते–विवाहवितते तन्त्रे होमकाल उपस्थिते । कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥ स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ॥ युंजानमाहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् ॥ प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ॥ नचैकजन्ययोः पुंसोर्ह्येकजन्ये च कन्यके ॥ नैवं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् ॥ नैकजन्ये तु कन्ये द्वे पुत्रयोरेकजन्ययोः ॥ न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥ प्रत्युद्वाहशब्देन यस्य पुत्राय स्वकन्या दत्ता तस्य कन्यया सह स्वपुत्रस्योद्वाहः प्रत्युद्वाहो ज्ञेयः ॥ तथैव पारिजाते स्मृत्यन्तरे च । एकोदरीकरतलग्रहणं यदि स्यादेकोदरस्थवरयोर्जलनाशनञ्च । एकाब्दके तु विधवा नितरां तु कन्या नद्यन्तरेऽपि शुभदं पृथुशैलरोधे ॥ तथैव पारिजाते गार्ग्यः ॥ विवाहस्त्वेकजन्यानामेकस्मिन्नुदये जले । नाशं करोत्येकवर्षे स्यादेका विधवा तयोः ॥ तथैव । एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ॥ न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ एतेन त्वेकस्मिन्दिवसे वत्सरे चैकस्मिन्गृहेऽपि भिन्नोदरमातृजयोः कर्त्रभेदेन नोद्वाहप्रतिषेधः ॥ परञ्च ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ॥ तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥ स्वपुत्र्याः विवाहानन्तरमृतुत्रयस्य मध्येऽन्याब्दस्य प्रवेशने तु स्वपुत्रस्य स्वपुत्र्या वा विवाहे न कश्चिच्छास्त्रोक्तिबाधः ॥ मदनरत्ने विशेषः ॥ मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मङ्गलम् ॥

१ मेषादिराशीनां मध्ये वसन्तादिमासेषु एकेष्विकमकर्मानन्तर्मेष्वप्येकजन्यानां विवाहस्य निषेधः ॥

ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमङ्गलम् ॥ इति नारदस्य वचनसामर्थ्याज्ज्येष्ठमङ्गलानन्तरं विवाहभिन्नं भिन्नैकमातृकयोरपि यज्ञोपवीतादि लघुमङ्गलम् ऋतुत्रयस्य मध्ये न कुर्यादिति विशेषोक्तिः ॥ परञ्च ऋतुत्रयस्य मध्ये चेदिति पूर्वोक्तवचनादेकोदरप्रसूतस्यापि ऋतुत्रयस्य मध्येऽब्दभेदे नोद्वाहस्य निषेध इत्यप्यवगम्यते । परञ्च तस्मिन्नेव श्लोके 'विवाहस्तु प्रशस्यते' इति चतुर्थपदस्य मध्ये तुशब्दोपादानाद्विवाहभिन्नमेकोदरप्रसूतस्य मङ्गलद्वयमब्दभेदेऽपि न भवतीति रुद्रकल्पद्रुमकाराः ॥ तत्रैव मिहिरस्तु—पुत्रोपयनादूर्ध्वं षण्मासाभ्यन्तरे तथा ॥ पुत्र्युद्वाहनं कुर्वीत विवाहाद्व्रतबन्धनम् ॥ अयं मिहिराचार्यस्य श्लोकोऽपि पूर्वोक्तस्य "कुले ऋतुत्रयादर्वागि"ति कात्यायनस्य श्लोकभावार्थेन सह सुसम्बद्ध एवेति दृश्यते ॥ मौञ्जीकर्मणस्तूभयतो न दोष इत्यपि ध्वन्यते॥ ननु "एकमातृकयोरेकवत्सरे" इत्यादिपूर्वोक्तवचनेनैकोदरप्रसूतानां समानक्रियाया एकवत्सरे षण्मासाभ्यन्तरे च निषेधस्य सत्त्वेऽपि तथैव ऋतुत्रयस्य मध्येऽन्याब्दस्य प्रवेशे प्रतिप्रसवेऽपि "उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं हि जातु ॥ यावच्चतुर्थीदिनमत्र सर्वं समाप्य चान्योद्वहनं विदध्यात्" ॥ इति कपर्दिकारिकावचनं तथैव "पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ॥ पुत्र्यन्तरस्य कुर्वीत नोद्वाह इति सूरयः" इति वराहमिहिरस्य वचनञ्चैकवत्सरे षण्मासाभ्यन्तरेऽन्याब्दस्याप्रवेशनेऽपि पुत्र्युद्वाहानन्तरं व्यतीतेषु चतुर्षु दिनेषु द्वितीयपुत्र्या उद्वाहे न दोष इत्येतदर्थमेवेति चेन्न । विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ॥ असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥ इति वराहमिहिरस्यैव 'षण्मासाभ्यन्तरे' इतिबलवत्तरनिषेधस्य जागरूकत्वात् तथैव पूर्वोक्तवचनानां वैयर्थ्यापत्तेश्च ॥ परञ्च समानोदरस्य षण्मासाभ्यन्तरे स्वस्यैव निषेधवचनस्य सत्त्वेऽपि "उद्वाह्य पुत्रीम्" इति कपर्दिकारिकाश्लोकस्य तथैव "पुत्रीपरिणयादूर्ध्वम्" इति वराहमिहिरश्लोकस्य पुनरुच्चारणं षण्मासाभ्यन्तरेऽन्याब्दस्याप्रवेशेऽप्यतिसङ्कटे चतुर्षु दिनेषु व्यतीतेषु पुत्र्युद्वाहनानन्तरं द्वितीयपुत्र्या उद्वाहप्रतिप्रसवार्थमेवेति ज्ञायते ॥ अन्यथोभयोर्वचनयोर्वैयर्थ्यापत्तेः ॥ अतिसङ्कटे समानोदरस्य कर्तृभेदेन मण्डपादिभेदेनाऽऽचार्यभेदेन च विवाहः प्रतिपादित एव ॥ यमलयोस्तु—एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा ॥ कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥ तथैव । द्विशोभनं त्वेकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ॥ आवश्यकं शोभनमुत्सुको वा द्वारेऽथ वाऽऽचार्यविभेदतो वा ॥ इति पूर्वोक्तानि नारदवशिष्ठादीनां वचनप्रमाणान्यालोच्य यथावकाशं देशकालाद्यनुसारं तत्र तत्र कार्यं न समग्रं शास्त्रसम्मतं

कर्तुं कोऽपि समर्थ इत्येवास्माकं प्रतिभाति ॥ वरस्य कन्यायाश्चोभयोः कुले कस्यचिन्मृतिश्चेत् तत्र किं विधेयमित्यत्र मेधातिथिराह । वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ॥ तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥ पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ॥ प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने ॥ प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ॥ आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥ तथैव स्मृतिरत्नावल्याम् । पितुरब्दमिहाशौचं तदर्द्धं मातुरेव च ॥ मासत्रयं तु भार्यायास्तदर्द्धं भ्रातृपुत्रयोः ॥ अन्येषां तु सपिण्डानामाशौचं माससम्मितम् ॥ तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते ॥ ज्योतिःशास्त्रे तु । प्रतिकूलेऽपि कर्तव्यो विवाहो मासमन्तरा ॥ शान्तिं विधाय गां दत्वा वाग्दानादि चरेद्बुधः ॥ स्मृत्यन्तरे । प्रतिकूले न कर्तव्यं लग्नं यावदृतुत्रयम् ॥ प्रतिकूलेऽपि कर्तव्यं केऽप्याहुर्बहुसंप्लवे ॥ प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ॥ विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥ तथैव । दुर्भिक्षे राष्ट्रभङ्गे च पित्रोर्वा प्राणसङ्कटे ॥ प्रौढायामपि कन्यायां नानुकूलं प्रतीक्ष्यते ॥ दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासीनस्थितस्यापि प्रातिकूल्यं न विद्यते ॥ सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना ॥ शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ अकृत्वा शान्तिकं यस्तु निषिद्धे सति दारुणे ॥ प्रकरोति शुभं कर्म विघ्नस्तस्य पदे पदे ॥ अपि च । प्रतिकूले तु संप्राप्ते विवाहं नैव कारयेत् ॥ अन्ते दोषविनाशाय कुर्याच्छान्तिमिमां शुभाम् ॥ स्मृतिचन्द्रिकायाम् । कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः ॥ तदा न मङ्गलं कार्यं नारीवैधव्यदं ध्रुवम् ॥ वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ॥ तदोद्वाहो नैव कार्यः स्ववंशक्षयदोषतः ॥ पूर्वोक्तविवाहादिशुभकर्मप्रतिकूलप्रदर्शकश्लोकानां समीचीना रुद्रकल्पद्रुमकारैर्व्याख्या कृता परञ्च तस्या अतिविस्तृतत्वान्नात्र सर्वोद्धर्तुं शक्यते ॥ परञ्च विवाहादिशुभकर्मणः प्रारम्भे वाङ्निश्चये च जाते यदोभयोः कुलयोर्मध्ये कस्यचिन्मृतिरूपं प्रातिकूल्यं भाग्यवशाज्जातश्चेदथवा दुर्भिक्षादिप्रातिकूल्ये प्राप्ते सर्वतः प्रतिकूलस्य समीक्षां कृत्वा प्रातिकूल्योत्पादककर्मणां यथाशक्ति तत्तत्कर्मणि शास्त्रोक्तं कर्म निर्वर्त्य शास्त्रसम्मतं देशकालसम्मतञ्चाचरेत् ॥ एवं प्रतिबन्धकनिर्णयविधायकशास्त्राणामालोचनेनास्माकं शास्त्रव्यवहारः सर्वथा लोकप्रकृतिप्रवृत्तिपर्यालोचनपुरःसरः सर्वतो बन्धनरूपोऽप्यनिर्बन्धः पुत्र पुत्र च सङ्कुचिततत्त्वसमृद्धोऽपि अबाधितराजमार्ग इव विस्तृतः प्रतिभाति ॥ तथैव च स्मृत्याद्यनेकधर्मनिर्णायकग्रन्थेषु सम्यङ्निर्णीतोऽपि दरीदृश्यते ॥

॥ इति कर्मारम्भप्रतिबन्धकनिर्णयसंग्रहः समाप्तः ॥

---

## ॥ अथ श्रीगायत्रीपुरश्चरणप्रयोगारंभः ॥

श्रीगणेशाय नमः॥ श्रीसरस्वत्यै नमः॥ श्रीगुरुभ्यो नमः॥ स्वेष्टदेवताभ्यश्च नमो नमः ॥ श्रीगायत्रीपुरश्चरणारम्भदिवसे कृतमङ्गलस्नानः शुचिरधिकारी पूजार्थसम्भृतपूजनहोमद्रव्यसंभारो यजमानो ज्योतिर्विद्भिर्निर्दिष्टे गुरुभार्गवमौढ्यबालवृद्धत्वादिदोषरहिते शुभे काले शुक्लपक्षे रिक्ताभौमव्यतिपातविष्ट्यादिदोषविरहितायां शुभपुण्यतिथौ शुभे वारे स्वचन्द्रताराद्यनुकूलकाले च निर्णेजनान्तपञ्चमहायज्ञान्तनिर्वर्तितसर्वनित्यक्रियः परिधृताहतशुक्लवासाः सोत्तरीयो यज्ञोपवीती दक्षिणपार्श्वे बद्धशिखः सुप्रक्षालितपाणिपादो गोमयादिमेध्यद्रव्यैः सुप्रोक्षित उपलिप्ते वा शुद्धदेशे श्रीपर्ण्यादिप्रशस्तयज्ञियवृक्षकाष्ठनिर्मिते पीठे कुशकम्बलाद्यास्तृते स्वासने प्राङ्मुख उदङ्मुखो वा उपविश्य स्वदक्षिणपार्श्वे पत्नीञ्चोपवेश्य शिखाबन्धनं दक्षवामकरयोः पवित्रधारणं च कृत्वाऽऽचामेत् ॥ शिखाबन्धनम् ॥

१ श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् । इति प्रयोगपारिजाते भृगुः ॥ माधवीये तु–अत्यन्तरोगयुक्तेऽङ्गे राजचोरभयादिषु ॥ गुर्वग्निदेवकृत्येषु नित्यहानौ न दोषभाक् ॥ केचन–इक्षुरापः पयो मूलं फलं तांबूलमौषधम् ॥ भक्षयित्वाऽपि कुर्वीत स्नानदानादिकाः क्रियाः ॥ इति चतुर्विंशतिमते स्मृत्यर्थसारे च इक्ष्वादिवस्तूना परिगणनं तदशक्तविषयं न तु शक्तानाम् ॥ २ अधिकारिविषयेऽपि हेमाद्रिः–स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि । पवित्राणां तथा जाप्ये दाने च विधिचोदिते ॥ अत्र पवित्रशब्देन मन्त्रो ज्ञेयः । मन्त्रः पवित्रमुच्यते इति निरुक्तवचनात् ॥ ३ कात्यायनोऽपि–प्रातःसन्ध्या ततः कृत्वा सङ्कल्पं बुध आचरेत् ॥ दानहेमाद्रौ च वाराहेऽपि–सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः ॥ कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥ जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ॥ ४ परिधृताहतवाससी इत्यत्र कात्यायनः–ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ तथैव कश्यपेनोक्तम्–अहतं यंत्रनिर्मुक्तं वासः प्रोक्तं स्वयंभुवा ॥ शस्तं तन्माङ्गलिक्येषु तावत्कालं न सर्वदा ॥ इत्यनेन यंत्रनिर्मुक्तवस्त्रस्य विवाहादावेव तावत्कालं शस्तत्वात् ॥ यज्ञादौ तु ईषद्धौतं पूर्वोक्तश्लोकोक्तमेव वस्त्रं शस्तम् ॥ नहि यज्ञादेरप्यदृष्टफलोत्पादकत्वाद्धर्मरूपत्वाच्च माङ्गलिक्यशब्दवाचकत्वम् । मदनपारिजाते माङ्गलिक्यं विवाहादि इति वचनात् ऐहिकसुखोत्पादकस्य एव कर्मणो माङ्गलिक्यशब्दवाचकत्वस्वीकाराच्च । हेमाद्रौ वृद्धमनुस्तु–स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता ॥ न तु नेजकधौतेन नोपभुक्तेन वा क्वचित् ॥ नेजको रजकः ॥ ५ सोत्तरीय–होमे देवार्चनाद्यासु क्रियास्वाचमने तथा ॥ नैकवस्त्रः प्रवर्तेत द्विजवाचनके जपे ॥ द्विजवाचनक इत्यनेन स्वस्तिवाचनं ज्ञेयम् ॥ ६ यज्ञोपवीती–सदोपवीतिना भाव्यं सदा बद्धशिखेन च ॥ विशिखो व्युपवीतिश्च यत्करोति न तत्कृतम् ॥ ब्रह्मसूत्रं विना भुङ्क्ते विण्मूत्रं कुरुते तथा ॥ गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ॥

७ शिखाबन्धनं दक्षिणे पार्श्वे कार्यम् ॥ मध्ये तु बह्वृचाश्चैव निबध्नीयुः शिखा ततः ॥ माध्यन्दिनाश्च ये विप्राः पार्श्वे दक्षिणतः क्रमात् ॥ १ ॥ वामपार्श्वे तु बध्नीयुर्ये विप्राः सामगायिनः ॥ इति चतुर्विंशतिमते ॥ मुक्तशिखिना स्नानादेर्निषेधः । वृद्धवसिष्ठ–मुक्तकेशैर्न कर्तव्यं प्रेतस्नानं विना क्वचित् ॥ स्नानं दानं जपं होमं मुक्तकेशं न कारयेत् ॥ अर्थात् शिरसि सर्वतो व्याप्य केशार्धेच्छिखाभिन्नकेशबद्धोऽपि स्यात् ॥ ८ स्वासने–विष्णुपुराणे–कुशोपरिनिविष्टेन तथा यज्ञोपवीतिना ॥ सर्वकर्म प्रकर्तव्यमन्यथा विफलं भवेत् ॥ तथैव श्राद्धकाशिकयाम् । शमीकाश्मर्यशल्लाश्च कदम्बो वारणस्तथा ॥ पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा ॥ दैवपित्र्ये कर्मणि प्रदर्शनार्थं श्राद्धे देवार्चने इति पदे ॥

९ पवित्रधारणं प्रयोगपारिजाते–मंत्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु ॥ मंत्रं विना धृतं यत्तु पवित्रं निष्फलं भवेत् ॥

ॐ मानस्तोके तनये मान ऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः ॥ मानो वीरा-न्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १६ ॥ इति मंत्रेण दक्षिणपार्श्वे शिखां बध्नीयात् ॥ दक्षिणवामकरयोः कुशपवित्रधारणम् ॥ ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ १२ ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ४ ॥ इति दक्षिणवामकरयोः एकैकं पवित्रं धारयेत् ॥ तत आचमनम् ॥ ॐ केशवाय नमः स्वाहा ॥ ॐ नारायणाय नमः स्वाहा ॥ ॐ माधवाय नमः स्वाहा ॥ हस्तप्रक्षालनम् । ॐ गोविंदाय नमः ॥ प्राणायामः ॥ हस्ते जलमादाय—प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता दैवी गायत्रीच्छन्दः भूरादिसप्तव्याहृतीनां क्रमेण विश्वामित्रजमदग्निभरद्वा-जगौतमात्रिवसिष्ठकश्यपा ऋषयः। अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्र-ऋषिः सविता देवता गायत्री छन्दः । आपोज्योतिरित्यस्य प्रजापतिर्ऋषिर्ब्रह्माग्नि-वायुसूर्या देवता यजुश्छन्दः सर्वेषां प्राणायामे विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ३५ ॥ ॐ आपोज्योती रसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ एवं पूरकः कुम्भकः रेचकः इति क्रमेण त्रिवारं पठेत् ॥ यजमानललाटे तिलकं कुर्यात् ॥ ॐ स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १९ ॥ ततो भद्रसूक्तं पठेयुः ॥ ॐ आनो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो ऽअपरीतास ऽउद्भिदः ॥ देवानो यथा सदमिद्वृधे ऽअसन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १४ ॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानांᳪरा-तिरभिनो निवर्त्तताम् ॥ देवानांᳪसख्यमुपसेदिमा वयं देवा न ऽआयुः प्रतिरन्तु जीवसे ॥ १५ ॥ तान्पूर्वया निविदा हूमहे वयं भगम्मित्रमदितिं दक्षमस्रिधम् ॥ अर्यमणं वरुणᳪ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ १६ ॥ तन्नो वातो मयो भुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ॥ तद्ग्रावाणः सोमसुतो मयोभुवस्तद-श्विना शृणुतं धिष्ण्या युवम् ॥ १७ ॥ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ १८ ॥ स्वस्ति न ऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ १९ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो वि-दथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा ऽअवसागमन्निह ॥ २० ॥

भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳬसंस्तनू-
भिर्व्यशेमहिदेवहितंयदायुः ॥ २१/२५ ॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्रा-
जरसन्तनूनाम् ॥ पुत्रासोयत्रपितरोभवन्तिमानोमद्ध्यारीरिषतायुर्गन्तोः ॥ २२/२५ ॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्मातासपितासपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्च
जनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम् ॥ २३/२५ ॥ द्यौःशान्तिरन्तरिक्षᳬशान्तिः पृथि-
वीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाःशान्ति-
र्ब्रह्मशान्तिःसर्वᳬशान्तिःशान्तिरेव शान्तिःसामाशान्तिरेधि ॥ १७/३६ ॥ यतोयतः
समीहसेततोनोऽअभयङ्कुरु ॥ शन्नःकुरुप्रजाभ्योभयन्नःपशुभ्यः ॥ २२/३६ ॥
तत ऋक्सामाथर्वविद्भिरपि स्वशाखोक्तं शान्तिसूक्तं पठनीयम् ॥ सुशान्तिर्भवतु ॥

॥ देवतानमस्कारः—श्रीमन्महागणाधिपतये नमः ॥ इष्टदेवताभ्यो नमः ॥ कुलदेवताभ्यो नमः ॥ ग्रामदेवताभ्यो नमः ॥ स्थानदेवताभ्यो नमः ॥ वाणी-हिरण्यगर्भाभ्यां नमः ॥ श्रीलक्ष्मीनारायणाभ्यां नमः ॥ श्रीउमामहेश्वराभ्यां नमः॥ शचीपुरन्दराभ्यां नमः ॥ मातापितृचरणकमलेभ्यो नमः ॥ सर्वेभ्यो देवेभ्यो नमः ॥ श्रीगुरुभ्यो नमः ॥ परमगुरुभ्यो नमः ॥ परमेष्ठिगुरुभ्यो नमः॥ परात्परगुरुभ्यो नमः॥ सर्वेभ्यो ब्राह्मणेभ्यो नमो नमः ॥ निर्विघ्नमस्तु ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ॥ सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥ येषां हृदिस्थो भगवान्मङ्गलायतनो हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ॥ विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ इति देवतानमस्कारान्कृत्वा सङ्कल्पं कुर्यात् ॥

अथ प्रधानसङ्कल्पः ॥ हस्ते गन्धाक्षतपुष्पसहितं जलमादाय ॥ ॐ विष्णुर्विष्णुर्विष्णुः श्रीमन्मुकुन्दसच्चिदानन्दस्य परब्रह्मणोऽचिन्त्यानन्तशक्तेरिच्छाभ्युचरिते

चतुर्दशलोकात्मकेऽण्डकटाहे स्वयमेव लीलया स्वांशतस्तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिनालोद्भूतस्य सकललोकपितामहस्य ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भरतखंडे जम्बूद्वीपे आर्यावर्तान्तर्गतब्रह्मावर्त्तैकदेशे। अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे तथा अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते श्रीदेवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ ममात्मनः श्रुतिस्मृतिपुराणोक्तपुण्यफलप्राप्त्यर्थम् अस्माकं सर्वेषां सकुटुम्बानां क्षेमस्थित्यायुरारोग्यैश्वर्याभिवृद्ध्यर्थं त्रिविधतापोपशमनार्थं लाभार्थं क्षेमार्थं विजयार्थं मनःकामनासिद्ध्यर्थमलक्ष्मीपरिहारपूर्वकदशविधलक्ष्मीफलप्राप्त्यर्थम् अस्माकं सर्वेषां समस्तदुरितोपशान्त्यर्थम् इहामुत्रसकलभोगादिचतुर्विधपुरुषार्थसिद्ध्यर्थं कायिकवाचिकमानसिकसांसर्गिकादिपापानां क्षयार्थं श्रीसूर्यमण्डलान्तर्वर्तिन्याः सकलागमवृक्षैकबीजायाः श्रीभगवत्या गायत्रीदेव्याः प्रीतिसंपादनार्थमाकल्पं तच्चरणसरोरुहनिवासार्थं सव्याहृतिचतुर्विंशतिवर्णात्मकगायत्रीमन्त्रस्य अमुकसङ्ख्याजपात्मकं क्रमेण च तत्तद्दशांशपक्षेण होमतर्पणमार्जनब्राह्मणभोजनमिति पञ्चाङ्गं तिलादिद्रव्यैः सग्रहमखं श्रीगायत्रीपुरश्चरणम् अद्यारभ्यामुकदिवसपर्यन्तं करिष्ये ॥ पुनर्जलं गृहीत्वा।

---

१ यत्र देशे कर्म क्रियते तद्देशविशेषस्यास्मिन्नूह्यं कार्यं। यथा सौराष्ट्रदेशे–महाराष्ट्रे–मोहमय्याम् ॥ समीपस्थिताया नद्याः क्षेत्रस्य च। (श्रीमहाराष्ट्रदेशे परशुरामक्षेत्रे श्रीमहानद्या गोदावर्या दक्षिणतटे कृष्णावेण्या उत्तरे तटे श्रीमल्लवणाब्धेः पूर्वभागे) ॥

२ लक्षत्रयात्मकम् अष्टलक्षात्मकं चतुर्विंशतिलक्षात्मकं वा ॥

३ परशुरामकारिकायाम्। जपाद्दशांशतो होमस्तर्पणं तद्दशांशतः ॥ मार्जनं तद्दशांशेन दशांशाद्विप्रभोजनम् ॥

४ जपार्चापूर्वको होमस्तर्पणं चाभिषेचनम् ॥ भूदेवभोजनं चैवंप्रकारैषा पुरस्क्रिया ॥ १ ॥ इति पञ्चाङ्गत सिद्धिं मन्त्री शीघ्रमवाप्नुयात् ॥ तेजस्वी ब्रह्मवर्चस्वी निग्रहानुग्रहतत्परः ॥ २ ॥ भवेदचिरकालेन सत्यं जानीहि पार्वति ॥ इतीश्वरवचनम् ॥

५ अथवा–मया ब्राह्मणद्वारा वा सव्याहृतिचतुर्विंशतिवर्णात्मकगायत्रीमंत्रस्य कृतस्यामुकलक्षसंख्याजपात्मकगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं तत्तद्दशांशपक्षेण होमतर्पणमार्जनब्राह्मणभोजनमिति पञ्चाङ्गं तिलादिद्रव्यैः सग्रहमखं गायत्रीपुरश्चरणं करिष्ये ॥ केवलजपात्मकगायत्रीपुरश्चरणारंभे–सव्याहृतिचतुर्विंशतिवर्णात्मकगायत्रीमंत्रस्यामुकलक्षसंख्याजपात्मकं गायत्रीपुरश्चरणं ब्राह्मणद्वारा स्वयं वा करिष्ये। तदङ्गत्वेन गणपतिपूजनादि ब्राह्मणवरणम् आभ्युदयिकं कर्म करिष्ये। श्रीगायत्रीदेव्या अपि पूजनं चेत्। पुनर्जलमादाय श्रीभगवत्या गायत्रीदेव्याः पीठे निर्मिते सर्वतोभद्रमण्डले श्रीब्रह्मादिदेवतावाहनपूर्वकं मंडूकादिपरतत्त्वान्तपरिवारदेवतासहितायाः श्रीगायत्र्या आवाहनं पूजनम करिष्ये। इति विशेषः ॥ एवं तत्र तत्र विचार्योहः कार्यः ॥

तदङ्गत्वेन निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्धारापूजनं वैश्वदेवसङ्कल्पम् आयुष्यमंत्रजपं नान्दीश्राद्धम् आचार्यादिऋत्विग्वरणं तेषां मधुपर्कार्चनं वर्धिनीकलशे देवतावाहनं मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारे भूम्यादिपूजनं द्वारदेवतानामावाहनं पूजनं च मंडपप्रवेशान्तं कर्म निर्वर्तयिष्ये ॥ तत्रादौ दिग्रक्षणं कलशार्चनं दीपपूजनं शङ्खघण्टार्चनञ्च करिष्ये॥

॥ दिग्रक्षणम् ॥ वामहस्ते गौरसर्षपान्गृहीत्वा—ॐ र॒क्षो॒हणं॑वलग॒हनं॑वैष्ण॒वी-मि॒दम॒हन्तं॑व॒ल॒गमु॒त्कि॑रा॒मि॒यम्मे॒निष्ट्यो॒यम॒मात्यो॑निच॒खाने॒दम॒हन्तं॑व॒ल॒गमु॒त्कि॑रा॒मि॒-यम्मे॑ सम॒नो यम॒सं॑मानो निच॒खाने॒दम॒हन्तं॑व॒ल॒गमु॒त्कि॑रामि॒ यम्मे॒सब॑न्धु॒र्य्यम॒सब॑न्धु॒-र्निच॒खाने॒दम॒हन्तं॑व॒ल॒गमु॒त्कि॑रा॒मि॒यम्मे॒सज॒तो॒यम॒सं॑जातो॒ निच॒खानो॒त्कृत्याङ्कि॑रामि ॥ ५।२३ ॥ र॒क्षो॒हणो॑वोवलग॒हन॒ᳩप्रोक्षा॑मिवैष्ण॒वान्र॑क्षो॒हणो॑वोवलग॒हनो॒वं॑नयामि वैष्ण॒वान्र॑क्षो॒हणो॑वोवलग॒हनो॒वं॑स्तृणामिवैष्ण॒वान्र॑क्षो॒हणो॑वांवलग॒ह॒नाऽउप॑दधामि वैष्ण॒वीर॑क्षो॒हणौ॑वांवलग॒ह॒नौ॒पर्यू॑हामिवैष्ण॒वीवैष्ण॒वम॑सिवैष्ण॒वास्थ॑ ॥ ५।२५ ॥ र॒क्षसा॒म्भा॒गो॑सि॒ निर॑स्त॒ᳩरक्ष॒ऽइ॒दम॒हᳩरक्षो॒भिति॑ष्ठा॒मी॒दम॒हᳩ रक्षो॒वं॑बाध॒ऽइ॒दम॒हᳩ रक्षो॑ध॒मन्तमो॑नयामि ॥ घृ॒तेन॒द्यावापृथिवी॒प्रोर्णु॑वाथां॒वायो॒वेस्तो॒काना॒म॒ग्निराज्य॑-स्यवे॒तुस्वाहा॒स्वाहा॑कृते॒ऽऊ॒र्ध्वन॑भसम्मारुतङ्ग॑च्छतम् ॥ ६।१६ ॥ र॒क्षो॒हा॒वि॒श्वच॑र्षणिर॒-भियो॒नि॒मयो॑हते ॥ द्रोणे॑स॒धस्थ॒मास॑दत् ॥ २६।२६ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामवरोधेन गायत्रीयागमारभे ॥ २ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ ३ ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ॥ ते सर्वेऽप्यपगच्छन्तु पुरश्चरणमाचरे ॥४॥ एतैर्मन्त्रैः सर्वदिक्षु सर्षपान्विकीर्य वामपादेन भूमिं त्रिवारं ताडयेत् । नेत्रोदकस्पर्शः ॥

अथ भैरवनमस्कारः॥तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम॥भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥भूमिं त्रिवारं ताडयेत्॥ कलशार्चनम्॥ स्ववामभागेऽक्षतपुञ्जोपरि जलपूरितं कलशं संस्थाप्य तत्र वरुणावाहनम्॥हस्तेऽक्षतान् गृहीत्वा। ॐतत्त्वा॑यामि॒ ब्रह्म॑णा॒वन्द॑मान॒स्तदाशा॑स्ते॒यज॑मानोह॒विर्भिः॑॥ अहे॑डमानोवरुणे॒हबो॒ध्युरु॑शᳩस॒मान॒ऽआयुः॒प्रमो॑षीः ॥२१।२॥ ॐभूर्भुवःस्वः अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि॥ॐमनोजूति०॥२।१३॥ वरुण सुप्रतिष्ठितो वरदो भव॥इति वरुणं प्रतिष्ठाप्य यथाशक्ति पूजयेत्॥पूर्वे ऋग्वेदाय नमः॥दक्षिणे यजुर्वेदाय

नमः॥पश्चिमे सामवेदाय नमः॥उत्तरे अथर्ववेदाय नमः॥मध्येऽपांपतिवरुणाय नमः॥ सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०॥ततोऽनामिकया कलशं स्पृष्ट्वा कलशजलाभिमंत्रणम्॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ १॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः॥२॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा॥ आयान्तु देवपूजार्थं दुरितक्षयकारकाः॥३॥गङ्गे च यमुने चैव गोदावरि सरस्वति॥ कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु॥४॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे॥ तेन सत्येन मे देव तीर्थं देहि दिवाकर॥५॥ कलशं प्रार्थयेत्॥ देवदानवसंवादे मथ्यमाने महोदधौ॥ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः॥ त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा॥ अङ्कुशमुद्रया सर्वाणि तीर्थान्यावाह्य धेनुमुद्रया अमृतीकृत्य हुम् इति कवचेनावगुण्ठ्य मत्स्यमुद्रयाऽऽच्छाद्य वं वरुणाय नमः इत्यनेनाष्टवारमभिमन्त्र्य तस्मादुदकादुदकं गृहीत्वा स्वात्मानं प्रोक्षयेत्॥ ॐआपोहिष्ठा०॥ $\frac{१०-५२}{११}$॥ पुनः स्वल्पोदकमादाय पूजासम्भारान्सम्प्रोक्ष्य तां च भूमिं प्रोक्षयेत्॥ दीपपूजनम्। घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय॥ ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ ... [illegible]॥ $\frac{४०}{११}$॥ ॐ भूर्भुवः स्वः दीपस्थदेवतायै नम आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ अथ शङ्खपूजनम्। हस्ते गन्धाक्षतपुष्पाण्यादाय। शङ्खं चन्द्रार्कदैवत्यं मध्ये वरुणदैवतम्॥ पृष्ठे प्रजापतिं विद्यादग्रे गंगासरस्वतीम्॥ १॥ त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया॥ शङ्खे तिष्ठन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत्॥ २॥ दर्शनेन हि शङ्खस्य किं पुनः स्पर्शनेन तु॥ विलयं यान्ति पापानि हिमवद्भास्करोदये॥ ३॥ नत्वा शङ्खं करे धृत्वा मन्त्रेणानेन वैष्णवः॥ यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम्॥ ४॥ ॐ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम्॥ ॥ ॐ शङ्खाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०॥ घण्टापूजनम्॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम्॥ घण्टानादं प्रकुर्वीत पश्चाद्घण्टां प्रपूजयेत्॥ ॐ सुपर्णोऽसि गरुत्माँस्त्रि-

१ गन्धपुष्पधूपदीपनैवेद्यानि॥

वृते शिरोगायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोमऽआत्माच्छन्दा७ँस्यङ्गानियजू७ँ
षिनाम ॥ सामते तनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ॥ सुपर्णोसि
गरुत्त्मान्दिवङ्गच्छस्वःपत ॥ ११ ॥ ॐ घण्टायै नमः सर्वोपचारार्थे गन्धाक्षत-
पुष्पाणि समर्पयामि ॥ इति दिग्रक्षणकलशार्चनादिकम् ॥

## ॥ अथ गणपतिपूजनम् ॥

ताम्रपात्रे सिद्धिबुद्धिसहितं महागणपतिं संस्थाप्य हस्ते गन्धाक्षतपुष्पाण्यादाय ध्यायेत् ॥ श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः क्षीराब्धौ रत्नदीपैः सुरनरतिलकं रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशाब्जाभयवरदधरं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ ॐभूर्भुवः स्वः सिद्धिबुद्धिसहितमहागणपतये नमः ध्यायामि ॥ आवाहनम् ॥ ॐगणानान्त्वा गणपति७ँ हवामहे प्रियाणान्त्वा प्रियपति७ँ हवामहे निधीनान्त्वा निधिपति७ँ हवामहे वसो मम ॥ आहमजानिगर्भधमात्वमजासिगर्भधम् ॥ १३ ॥ ॐ भूर्भु० सिद्धि० महागणपतये नमः आवाहयामि ॥ प्रतिष्ठापनम् ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ७ँ समिमन्दधातु ॥ विश्वेदेवासऽइह मादयन्तामो ३ म्प्रतिष्ठ ॥ १२ ॥ ॐभूर्भु० सिद्धि० महागणपते सुप्रतिष्ठितो वरदो भव ॥ आसनम् ॥ ॐ वर्ष्मोऽस्मिसमानानामुद्यतामिव सूर्यः ॥ इमन्तमभितिष्ठामि यो मा कश्चाभिदासति ॥ ॐ भूर्भुवः स्वः सि० म० आसनं समर्पयामि ॥ पाद्यम् ॥ ॐएतावानस्यमहिमातोज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ ॐभूर्भुवः स्वः सि० म० पादयोः पाद्यं समर्पयामि ॥ अर्घः ॥ ॐधामन्ते विश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्मिम् ॥ १७ ॥ ॐ भूर्भुवः स्वः सि० म० हस्तयोः अर्घं स० ॥ आचमनीयम् ॥ ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ १ ॥ ॐ भूर्भुवः स्वः सि० म० आचमनीयं स० ॥ पयःस्नानम् ॥ ॐ पयसोरूपंयद्यवा दध्नोरूपङ्कर्कन्धूनि ॥ सोमस्यरूपंवाजिन७ँसौम्यस्य रूपमामिक्षा ॥ ३३ ॥ ॐ भू० सि० म० पयःस्नानं समर्प० ॥ पयःस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥ दधिस्नानम् ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभिनो मुखा करत्प्रणऽआयू७ँषितारिषत् ॥ ३२ ॥ ॐ भूर्भुवःस्वः सि० म० दधिस्नानं समर्पयामि ॥ दधिस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ मधुस्नानम् ॥ ॐ स्वाहामरुद्भिः परि-

इश्रीयस्स्वँदिवः सुꣳ स्पृशस्पाहि ॥ मधु मधु मधु ॥ ३/३ ॥ ॐ भूर्भुवः स्वः सि० म० मधुस्नानं स० ॥ मधुस्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानान्ते आचमनीयं स० ॥ शर्करास्नानम् ॥ ॐ अपाꣳरसमुद्वयसꣳ सूर्य्येसन्तꣳ समाहितम् ॥ अपाꣳ रसस्ययोरसस्तंवोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषते योनिरिन्द्रायत्त्वाजुष्टतमम् ॥ ३ ॥ ॐ भू० सि० म० शर्करास्नानं समर्प० ॥ शर्करास्नानान्ते शुद्धोदकस्नानं स० । शुद्धोदकस्नानांते आचमनीयं स० ॥ गन्धोदकस्नानम् ॥ ॐगन्धर्वस्त्वाविश्वावसुः परिदधातुविश्वस्यारिष्टयैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ३ ॥ ॐ भू० सि० म० गन्धोदकस्नानं समर्प० ॥ गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ उद्वर्तनस्नानम् ॥ ॐ अꣳशुनाँतेऽअꣳशुः पृच्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदायरसोऽअच्युतः ॥ ३/७ ॥ ॐ भू० सि० म० उद्वर्तनस्नानं समर्प० ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं समर्प० । शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥ तीर्थोदकस्नानम् ॥ ॐ येतीर्थानिप्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ३/१ ॥ ॐभूर्भुवःस्वः सि० म० तीर्थोदकस्नानं समर्प० । तीर्थोदकस्नानान्ते शुद्धोदकस्नानं समर्प० । शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥ ततः सर्वोपचारार्थं गन्धाक्षतपुष्पैः संपूज्य निर्माल्यमुत्तरे विसृज्य अभिषेकं कुर्यात् ॥ ॐ नमस्ते गणपतये त्वमेव प्रत्यक्षं तत्त्वमसि त्वमेव केवलं कर्त्तासि त्वमेव केवलं धर्त्तासि त्वमेव केवलं हर्तासि त्वमेव सर्वं खल्विदं ब्रह्मासि त्वं साक्षादात्मासि नित्यं ऋतं वच्मि सत्यं वच्मि अव त्वं मां अव वक्तारं अव श्रोतारं अव दातारं अव धातारं अवानूचानमवशिष्यं अव पश्चात्तात् अव पुरस्तात् अवोत्तरात्तात् अव दक्षिणात्तात् अव चोर्द्ध्वात्तात् अवाधरात्तात् सर्वतो मां पाहि पाहि समन्तात् त्वं वाङ्मयस्त्वं चिन्मयः त्वमानन्दमयस्त्वं ब्रह्ममयः त्वं सच्चिदानन्दाद्वितीयोसि त्वं प्रत्यक्षं ब्रह्मासि त्वं ज्ञानमयो विज्ञानमयोसि सर्वं जगदिदं त्वत्तो जायते सर्वं जगदिदं त्वत्तस्तिष्ठति सर्वं जगदिदं त्वयि लयमेष्यति सर्वं जगदिदं त्वयि प्रत्येति त्वं भूमिरापोऽनलोऽनिलो नभः त्वं चत्वारि वाक्पदानि त्वं गुणत्रयातीतः त्वं देहत्रयातीतः त्वं कालत्रयातीतः त्वं अवस्थात्रयातीतः त्वं मूलाधारस्थितोसि नित्यं त्वं शक्तित्रयात्मकः त्वां योगिनो ध्यायन्ति नित्यं त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्मभूर्भुवःस्वरोम् गणादीन्पूर्वमुच्चार्य वर्णादींस्तदनन्तरं अनुस्वारः परतरः अर्धेन्दुलसितं तारेण रुद्धं एतत्तव मनुस्वरूपम् गकारः पूर्वरूपं अकारो मध्यमरूपं अनुस्वारश्चान्त्यरूपं बिन्दुरुत्तररूपं नादः सन्धानं संहिता सन्धिः

सैषा गणेशविद्या गणक ऋषिः निचृद्गायत्री छन्दः गणपतिर्देवता ॐ गंगणपतयेनमः। एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्॥एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्। रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम्॥ रक्त लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्॥ भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्। आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्तये नमः॥ अमृताभिषेकोऽस्तु॥ ॐ भूर्भुवः स्वः सि० म० अभिषेकस्नानं समर्पयामि॥ अथ शुद्धोदकस्नानम्॥ ॐशुद्धवालः सर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥ ३/२४ ॥ ॐ भू० सि० म० शुद्धोदकस्नानं समर्प०॥ शुद्धोदकस्नानान्ते आचमनीयं समर्प०॥ ततः सिद्धिबुद्धिसहितं श्रीमहागणपतिं रक्तवस्त्रोपरि गोधूमादिनिर्मिताष्टदले पीठे स्वसमीपे संस्थापयेत्॥ वस्त्रम्॥ ॐसुजातोज्ज्योतिषा सहशर्म्मवरूथमासदत्स्वः॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो॥ ४/११॥ ॐभू० सि० म० वस्त्रं समर्प०। वस्त्रान्ते आचम० समर्प०॥ यज्ञोपवीतम्॥ ॐयज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥ ॐभू० सि० म० यज्ञोपवीतं समर्पयामि॥ यज्ञोपवीतान्ते आचम० समर्प०॥ गन्धम्॥ ॐत्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत॥ १/६॥ ॐभू० सि० म० गन्धं समर्प०॥अक्षताः॥ ॐअक्षन्नमीमदन्तह्यवप्रियाऽअधूषत॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी॥ ५/३॥ ॐ भू० सि० म० अक्षतान् समर्प०॥ पुष्पाणि॥ ॐओषधीःप्रतिमोदध्वम्पुष्पवतीःप्रसूवरीः॥ अश्वाऽइव सजित्वरीर्वीरुधःपारयिष्ण्वः॥ ७/१२॥ ॐ भू० सि० म० पुष्पाणि समर्पयामि॥ दूर्वाङ्कुराः॥ ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन च॥ ३/२०॥ ॐभूर्भुवःस्वः सिद्धिबुद्धिसहितमहागणपतये नमः दूर्वाङ्कुरान्समर्प०॥ सौभाग्यद्रव्याणि॥ ॐअहिरिवभोगैः पर्य्येतिबाहुञ्ज्यायाहेतिम्परिबा-

---

१ अथाङ्गपूजा। वामहस्ते गन्धपात्रं गृहीत्वा दक्षहस्तेन पूजयेत्॥ श्रीगणेशाय नम पादौ पूजयामि। आखुवाहनाय नम ऊरू पूजयामि। हेरम्बाय नम कटी पूजयामि। कामारिसूनवे नम नाभिं पूजयामि। गणनायकाय नम हृदयं पूजयामि। स्थूलकण्ठाय नम कण्ठं पूजयामि। स्कन्दाग्रजाय नम स्कन्धौ पूज०॥ पाशहस्ताय नम हस्तौ पूज०। गजवक्त्राय नम वक्त्रं पूज०। विघ्नहर्त्रे नम ललाटं पूज०। सर्वेश्वराय नम

धेमानः ॥ हस्तग्नोविश्वांवयुनानिविद्वान्पुमान्पुमांᳬसम्परिपातुविश्वतः ॥ ११ ।
ॐ भू० सि० म० सौभाग्यद्रव्याणि सम० ॥ धूपः ॥ ॐ अश्वस्यत्वावृष्ण्णः शक्राधू
पयामिदेवयजने पृथिव्याः ॥ मुखाय त्वामुखस्य त्वाशीर्ष्णे ॥ अश्वस्य त्वावृष्ण्णः
शक्राधूपयामिदेवयजने पृथिव्याः ॥ मुखाय त्वामुखस्य त्वा शीर्ष्णे ॥ अश्वस्य त्व
वृष्ण्णः शक्राधूपयामिदेवयजने पृथिव्याः ॥ मुखायत्वामुखस्य त्वाशीर्ष्णे ॥ मुखाय
त्वामुखस्यत्वाशीर्ष्णे ॥ मुखायत्वामुखस्यत्वाशीर्ष्णे ॥ मुखायत्वामुखस्यत्वाशीर्ष्णे
१२ ॥ ॐ भू० सि० म० धूपमाघ्रापयामि ॥ दीपः ॥ ॐ चन्द्रमाऽअप्स्वन्त
रासुपर्णोधावतेदिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहᳬहरिरेतिकनिक्रदत् ॥ १३ ।
ॐ भू० सि० म० दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्य
शुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्जन्नोधेहिद्विपदेचतुष्पदे ॥ १४ ॥ गायत्रीमन्त्रे
ण सम्प्रोक्ष्य धेन्वाऽमृतीकृत्य ग्रासमुद्रया पञ्च प्राणाहुतीर्दद्यात् । ॐ प्राणाय स्वाहा ॥
ॐ अपानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय
स्वाहा ॥ ॐ भूर्भुवःस्वः सि० म० नैवेद्यं निवेदयामि ॥ पूर्वापोशनं समर्पयामि ॥
मध्ये पानीयम् ॥ एलोशीरलवङ्गादिकर्पूरपरिवासितम् ॥ प्राशनार्थं कृतं तोयं गृहाण
गणनायक ॥ ॐ भू० सि० म० मध्ये पानीयं स० ॥ उत्तरापोशनं स० ॥ हस्तप्रक्षालनं
स० ॥ मुखप्रक्षालनं स० ॥ आचमनीयं स० ॥ करोद्वर्त्तनार्थे गन्धं स० ॥ मुखवासार्थे
ताम्बूलम् ॥ ॐ उतस्मास्यद्रवतस्तुरण्यतः पर्णन्नवेरनुवातिप्रगर्द्धिनः ॥ श्येनस्येव
ध्रजतोऽअङ्कसम्परिदधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥ १५ ॥ ॐ भू० सि० म०
ताम्बूलं स० ॥ फलम् ॥ ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्च पुष्पिणीः ॥
बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वᳬहसः ॥ १६ ॥ ॐ भू० सि० म० फलं समर्प० ॥
दक्षिणा ॥ ॐ यद्दत्तंयत्परादानंयत्पूर्त्तंयाश्च दक्षिणाः ॥ तदग्निर्वैश्वकर्मणः स्वर्देवेषु
नोदधत् ॥ १७ ॥ ॐ भू० सि० म० दक्षिणां समर्प० ॥ कर्पूरारार्तिक्यम् ॥ ॐ आरा
त्रिपार्थिवᳬरजः पितुरप्रायिधामभिः ॥ दिवः सदाᳬसिबृहतीवितिष्ठसऽआत्वेषं
वर्त्ततेतमः ॥ १८ ॥ ॐ भू० सि० म० कर्पूरारार्तिक्यं समर्पयामि ॥ मन्त्रपु
ष्पाञ्जलिः ॥ अञ्जलौ पुष्पाणि गृहीत्वा ॥ ॐ नमोगणेभ्योगणपतिभ्यश्चवोनमो

---

शिरः पूज० । श्रीगणाधिपाय नमः सर्वाङ्गं पूज० ॥ अथावरणपूजा । अक्षतैः पूजयेत् ॥ सुमुखाय नमः । एकदन्ताय नमः । कपिलाय नमः । गजकर्णाय नमः । लम्बोदराय नमः । विकटाय नमः । विघ्ननाशनाय नमः । विनायकाय नमः । धूम्रकेतवे नमः । गणाध्यक्षाय नमः । भालचन्द्राय नमः । गजाननाय नमः । गन्धाक्षतपुष्पाणि गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं समस्तावरणार्चनम् ॥ समस्तावरणदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । हस्ते जलं गृहीत्वा । अनेन समस्तावरणदेवतार्चनेन श्रीसिद्धिबुद्धिसहित श्रीमहागणपतिः प्रीयताम् ॥

नमोव्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहितमहा० मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ प्रदक्षिणा । ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥ देवा यद्यज्ञं तन्वाना ऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ ॐ भूर्भुवः० सि० म० प्रदक्षिणां समर्प० ॥ सजलं गन्धाक्षतपुष्पैः सहितं सनारिकेलमर्घ्यपात्रं धृत्वा विशेषार्घं दद्यात् ॥ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ॥ भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद । अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ॥ ॐ भू. सि. म. विशेषार्घं समर्प० ॥ ततः प्रार्थयेत् ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय ॥ विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ॥ नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ॥ भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय ॥ निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति ॥ विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥ ॐ भू सि. म. प्रार्थनापूर्वकं नमस्कारान्समर्पयामि ॥ हस्ते जलमादाय । अनया पूजया सिद्धिबुद्धिसहितः साङ्गः सपरिवारः श्रीमहागणपतिः प्रीयतां न मम ॥

॥ इति गणपतिपूजनप्रयोगः ॥

॥ अथ पुण्याहवाचनप्रयोगः ॥

स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैस्तंडुलैर्वा यवैरष्टदलं कर्तव्यम् ॥ तत्र भूमिं स्पृष्ट्वा । ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३२ ॥ तत्र यवप्रक्षेपः ॥ ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्म-

१ निर्णयसिन्धौ—गर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि ॥ वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनम् ॥ १ ॥ एवं दानखंडेऽपि पूर्वं वृद्धिश्राद्धमुपन्यस्य पुण्याहवाचनं विहितम् ॥ एके आचार्यास्तु—आदावन्ते च मध्ये च कुर्याद् ब्राह्मणवाचनम् ॥ अत्र ब्राह्मणशब्देन स्वस्तिवाचनं होममित्युक्तम् ॥ तथैव शौनकोऽपि—स्वस्तिवाचनमेव तु सर्वेषामृद्धिकारणम् ॥ आदावन्ते च कर्तव्यमिति यज्ञविदां मतम् ॥ २ ॥ आश्वलायनोऽपि—पुण्याहवाचनं शास्त्रमादौ स्यात्सर्वकर्मणि ॥ नाकृत्वैतद् बुधः कुर्यात् सर्वकर्माणि मानवः ॥ ३ ॥ एवं स्वस्तिवाचनम् आदौ अन्ते मध्ये च कार्यमित्यत्र प्रमाणान्युपलभ्यन्ते ॥ अतः स्वस्तिपुण्याहवाचने प्रागपि क्रियमाणे न दोषस्तथापि तत्र देशकालानुसारतो व्यवस्था कार्या ॥ प्रायस्तु सर्वत्र गणपतिपूजनानन्तरं स्वस्तिपुण्या-

णस्त॑ᳬ राजन्पारयामसि ॥ ९६/१२ ॥ तत्र कलशस्थापनम् ॥ ॐ आजिघ्र कुलशम्म्-
ह्यात्वा विशन्त्विन्दंवः ॥ पुनंरूर्ज्जा निर्वर्त्तस्व सानः सुहस्रन्धुक्ष्वोरुधारापयं-
स्वती पुनर्म्माविशताद्र॒यिः ॥ ४२/८ ॥ कलशे जलपूरणम् ॥ ॐ वरुणस्योत्तम्भनम-
सि वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्यऽऋतुसदन्यसि वरुणस्यऽऋत सदनमसि
वरुणस्यऽऋतसदनमासीद ॥ ३६/४ ॥ गन्धप्रक्षेपः ॥ ॐ त्वाङ्गन्धर्वाऽअखनँस्त्वा-
मिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥ ९८/१२ ॥
धान्यप्रक्षेपः ॥ ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ॥
दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णा-
त्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ॥ २०/१ ॥ सर्वौषधीप्रक्षेपः ॥
ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ॥ मनै नु बभ्रूणामहᳬ शतन्धा-
मानि सप्त च ॥ ७५/१२ ॥ दूर्वाप्रक्षेपः ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुष-
स्परि ॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥ २०/१३ ॥ पञ्चपल्लवप्रक्षेपः ॥
अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ॥ गोभाजऽइत्किलासथ यत्स-
नवथ पूरुषम् ॥ ७९/१२ ॥ सप्तमृद्प्रक्षेपः ॥ ॐ स्योना पृथिवि नो
भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ २१/३५ ॥ फलप्रक्षेपः ॥
याः फलिनीर्य्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो
मुञ्चन्त्वᳬहसः ॥ ८९/१२ ॥ पञ्चरत्नप्रक्षेपः ॥ ॐ परि वाजपतिः कविरग्निर्हु-
व्यान्यक्रमीत् ॥ दधद्रत्नानि दाशुषे ॥ २५/११ ॥ हिरण्यप्रक्षेपः ॥ ॐ हिरण्य-
गर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥ स दाधार पृथिवीन्द्यामुते
माङ्कस्मै देवाय हविषा विधेम ॥ ४/१३ ॥ कलशं रक्तसूत्रेण वस्त्रेण वा वेष्टयेत् ॥

---

हवाचनं क्रियते ॥ यद्यपि माध्यन्दिनीयशाखाना स्वस्तिपुण्याहवाचनं नास्तीति कल्पद्रुमे उक्तं तथापि-
यदाम्नातं स्वशाखायामपरोक्षाविरोधि यत् ॥ विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ॥ ४ ॥ इति वचनप्रामा-
ण्यादनुक्तमपि स्वस्तिपुण्याहवाचनं बह्वृचोक्तगृह्यपरिशिष्टोक्तं माध्यन्दिनीयशाखिभिः शिष्टैः स्वकर्मणि स्वीकृत-
मित्यवगम्यते सर्वत्र क्रियमाणत्वात् ॥ अतोऽवश्यमेवादावन्ते मध्येऽपि यथासमयं पुण्याहवाचनं विधेयम् ॥

१ रुद्रकल्पद्रुमे—परशुरामेण तु स्वस्तिवाचनार्थमेकस्यैव कलशस्य विधानमुक्तं परन्च ऋक्शाखीया दाक्षिणात्यास्तु कलशद्वयं निधाय कुर्वन्ति तत्तु देशाचार एव ॥

२ धान्यविषये वसिष्ठः— सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ॥ आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥ तेन सतुषं धान्यं निदध्यात ॥

३ सर्वौषध्यः— कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचन्दनम् ॥ वचा चम्पकमुस्ता च सर्वौषध्यो दश स्मृताः ॥

४ पञ्चभङ्गाः—अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ॥ पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥

५ सप्तमृदः—अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद् ह्रदात् ॥ राजस्थानाच्च गोष्ठाच्च मृदमानीय निक्षिपेत् ॥

६ पञ्चरत्नानि—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ॥ एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ॥

ॐ युवासुवासाः परिवीतऽआगात्स उ श्रेयान्भवति जायमानः ॥ तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ ततः पूर्णपात्रमुपरि न्यसेत् ॥ ॐ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जᳬ शतक्रतो ॥ ३/४९ ॥ वरुणमावाहयेत् ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशᳬसमानऽआयुःप्रमोषीः ॥ १८/४९ ॥ ॐभूर्भुवःस्वःअस्मिन्कलशे वरुणं साङ्गं सपरिवारम् आवाहयामि स्थापयामि ॥ प्रतिष्ठापनम् ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञᳬसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ २/१३ ॥ ॐवरुणाय नमः वरुण सुप्रतिष्ठितो वरदो भव ॥ ॐभूर्भुवःस्वः वरुणाय नमः इतिमन्त्रेण पञ्चोपचारैः[1] संपूज्य अनामिकया कलशं स्पृष्ट्वा अभिमन्त्रयेत् ॥ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धो कावेरि जलेऽस्मिन् संनिधिं कुरु ॥ ततो गायत्र्यादिभ्यो नमः इत्यनेन पुनः पञ्चोपचारैः सम्पूज्य प्रार्थयेत् ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ॥ त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ॥ आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति भूतानि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिदं कर्म कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय । सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक । पुण्याहवाचनं यावत्तावत्त्वं सन्निधौ भव ॥ अवनिकृतजानुमण्डलः[2] कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा ॥ ॐत्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ ३/३४ ॥ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ इति यजमानः ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ इति विप्राः ॥ एवं त्रिवारं सर्वत्र ॥ ॐत्रीगितऽआहुर्दिविबन्धनानित्रीण्य-

१ पञ्चोपचारा —गन्ध पुष्प धूपो दीपो नैवेद्यम् ॥ २ अवनीकृतोभयजानुरित्यथ ॥

प्प्सुश्रीण्यन्तश्समुद्रे ॥ उतेवंमेवरुणश्छन्त्स्यद्वष्यश्रातऽआहुश्परमश्चनिर्त्रम् ॥ ३१ ॥ दीर्घानागानद्योगिरयस्त्रीणि विष्णुपदानिच॥तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु॥ इति यजमानः ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति द्विजाः॥ॐत्रयादेवाऽएकादशत्रयस्त्रिꣳशाश्सुराधसꣳ ॥ बृहस्पतिपुरोहिता देवस्यसवितुश्सवे ॥ देवादेवैरवन्तुमा ॥ ३३ ॥ दीर्घानागा नद्योगिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ इति यजमानः ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति द्विजाः ॥ ततश्चतुरऋग्यजुःसामाथर्ववविदो विप्रानुपवेश्य तेषां ब्राह्मणानां हस्ते सुप्रोक्षितादिकरणम् । ॐ शिवा आपः सन्तु । ॐसन्तु शिवा आपः ॥ ॐसौमनस्यमस्तु । ॐअस्तु सौमनस्यम् ॥ ॐअक्षतं चारिष्टं चास्तु । ॐअस्त्वक्षतमरिष्टं च॥ॐगन्धाः पान्तु सौमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्तु । ॐगन्धाः पान्तु सौमङ्गल्यं चास्तु॥ ॐअक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्तु । ॐअक्षताः पान्तु आयुष्यमस्तु ॥ ॐपुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्तु । ॐ पुष्पाणि पान्तु सौश्रियमस्तु ॥ ॐताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्तु । ॐताम्बूलानि पान्तु ऐश्वर्यमस्तु॥ॐपूगीफलानि पान्तु बहुफलमस्त्विति भवन्तो ब्रुवन्तु । ॐपूगीफलानि पान्तु बहुफलमस्तु ॥ ॐदक्षिणाः पान्तु बहु देयं चास्त्विति भवन्तो ब्रुवन्तु। ॐदक्षिणाः पान्तु बहु देयं चास्तु॥ ततो यजमानो ब्रूयात्। ॐदीर्घमायुःशान्तिः पुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंबहुधनञ्चायुष्यञ्चास्त्वितिभवन्तो ब्रुवन्तु ॥ ब्राह्मणा वदेयुः । अस्तु ते दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यम् ॥ पुनर्यजमानो वदेत् । यङ्कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कारमादिङ्कृत्वा ऋग्यजुःसामाथर्वणाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ ॐवाच्यतामितिद्विजाः ॥ ब्राह्मणानांहस्तेअक्षतान्दद्यात्तेच मन्त्रान्तेआशिषो दद्युः ॥ यजुः— ॐ भद्रङ्कर्णेभिश्शृणुयामदेवाभद्रम्पश्येमाक्षभिर्य्यजत्राꣳ ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँय्यदायुः ॥ ३१ ॥ ॐदेवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाꣳरातिरभिनो निवर्त्तताम् ॥ देवानाꣳ सख्यमुपसेदिमा वयन्देवा नऽआयुꣳ प्प्रतिरन्तु जीवसे ॥ ३२ ॥ ॐदीर्घायुस्तऽओषधे खनिता यस्मै चत्वा खनाम्म्यहम् ॥ अथोत्त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् ॥ ३३ ॥ ॐ द्रविणोदाश्पिपीषति जुहोत प्प्रचतिष्ठत ॥ नेष्टादृतुभिरिष्प्यत ॥ ३४ ॥

ततः ऋक्सामाथर्वमन्त्राः॥यजुः—ॐ सवितात्त्वासवानाᳬंसुवतामग्निर्गृहपतीनाᳬं सोमोवनस्पतीनाम् ॥ बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्यायरुद्रःपशुभ्योमित्रःसत्त्योवरुणोधर्म्मपतीनाम्॥ ३/९॥ ऋक्सामाथर्वमन्त्राः ॥ यजुः—ॐनतद्रक्षाᳬंसिनपिशाचास्तरन्तिदेवानामोजः प्रथमजᳬंह्येतत् ॥ योबिभर्तिदाक्षायणᳬंहिरण्ण्यᳬंसदेवेषुकृणुतेदीर्ग्घमायुः समनुष्ष्येषुकृणुतेदीर्ग्घमायुः ॥ ५१/३४ ॥ ऋक्सामाथर्वमन्त्राः॥

☞ अष्टचत्वारिंशत्तमे पृष्ठे २१ तमाया पङ्क्तौ 'तमहमोंकारमादिं कृत्वा' इति वाक्यस्योपरिस्था टिप्पणीयम् ॥ सपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् । धर्मकर्मणि माङ्गल्ये सङ्ग्रामाद्भुतदर्शने ॥ पुण्याहवाचनं दैवैर्ब्राह्मणस्य विधीयते ॥ एतदेव निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोः ॥ इति दानखण्डवचनम् ॥ तथैव यमोऽपि—सोङ्कारं ब्राह्मणे कुर्यान्निरोङ्कारं महीपतौ ॥ उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्तयेत् ॥ इति वचनानुरोधेन ब्राह्मणस्यैव ओङ्कारपूर्वकं क्षत्रियवैश्यशूद्राणान्तु निरोङ्कारोपांशुस्वस्तिशब्दैः क्रमेण प्रयोग कृत्वा स्वस्तिवाचन विधेय परञ्च क्षत्रियस्य निरोङ्कारमित्यनेन तत्स्थानेऽनुक्तस्याप्याचारात् ह्रींकारशब्दस्यैव प्रयोगो याज्ञिकै क्रियते तथा कृते तत्र न दोष ॥

१ ॐऋक्—द्रविणोदाद्रविणसस्तुरस्यद्रविणोदाःसनरस्यप्रयंसत्॥ द्रविणोदावीरवतीमिषंनोद्रविणोदारासतेदीर्घमायुः॥ अष्टक १ ४/७ ॥

२ साम—ॐदेवो३वो३द्रविणोदाः । पूर्णाविवष्ट्वासिच । उद्वा १ सिंचा २ । ध्वमुपवापृणध्वं । आदिद्वोदे२ । वओहते । इडा २३ भा ३४३ । ओ२३४५ ई । डा ॥ वेयगानस्य द्वितीयप्रपाठकस्य प्रथमार्द्धे साम २४ ॥

३ अथर्वणः—ॐधातारातिःसवितेदंजुषंतांप्रजापतिर्निधिपतिर्नोअग्निः ॥ त्वष्टाविष्णुःप्रजयासंरराणोयजमानायद्रविणं दधातु॥ का० ७ अ० २ सू० १७ मं० ४॥

४ ऋक्—ॐसवितापश्चात्तात्सवितापुरस्तात्सवितोत्तरात्तात्सविताधरात्तात् ॥ सवितानःसुवतुसर्वतातिंसवितानोरासतांदीर्घमायुः॥ ७ १/८१॥

५ साम—ॐऊर्द्ध्वऊषुणा ३ ऊता २३४ याई । तिष्ठादेवोनसविता । ऊर्द्ध्वोवा २३ जा । स्यासनिता । यादंजिभी२ः । वाघाद्भी२ । वीवी२ । ह्वयामा २३हा ३४३ ई । उ २३४५ ई । डौ ॥ वेयगानस्य द्वितीयप्रपाठकस्य प्रथमार्द्धे साम २६ ॥

६ अथर्वणः—ॐअभयंद्यावापृथिवीइहास्तुनोभयंसोमःसवितानःकृणोतु ॥ अभयन्नोस्तूर्वोऽन्तरिक्षंसप्तऋषीणांचहविषाभयन्नोऽस्तु॥ का० ६ अ० ४ सू० ४० मं० १॥ ६ ३/१० ॥

७ ऋक्—ॐनवोनवोभवतिजायमानोह्नांकेतुरुषसामेत्यग्रं॥ भागंदेवेभ्योविदधात्यायन्प्रचंद्रमास्तिरतेदीर्घमायुः ॥ ८ २/२ ॥

८ साम—ॐचंद्रमाआउवा । प्सुवान्तराउवा । सुपर्णो धाउवा । वते-

यजुः—ॐ उच्चा तेजातमन्धसोदिविसद्भूम्याददे ॥ उग्रᳪशर्म्ममहिश्रवः ॥ ११ ॥ ऋक्सामाथर्वमन्त्राः ॥ इत्याशीर्वादः ॥ ततो यजमानो वदेत्—व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् ॥ समाहितमनसः स्मः इति ब्राह्मणा वदेयुः ॥ ( एवं सर्वत्र । ) प्रसीदन्तु भवन्तः ॥ प्रसन्नाः स्मः ॥ ॐ शान्तिरस्तु ॥ ॐ अस्तु शान्तिः ॥ ॐ पुष्टिरस्तु ॥ ॐ तुष्टिरस्तु ॥ ॐ वृद्धिरस्तु ॥ ॐ अविघ्नमस्तु ॥ ॐ आयुष्यमस्तु ॥ ॐ आरोग्यमस्तु ॥ ॐ शिवंकर्मास्तु ॥ ॐ कर्मसमृद्धिरस्तु ॥ ॐ धर्मसमृद्धिरस्तु ॥ ॐ वेदसमृद्धिरस्तु ॥ ॐ शास्त्रसमृद्धिरस्तु ॥ ॐ धनधान्यसमृद्धिरस्तु ॥ ॐ पुत्रपौत्रसमृद्धिरस्तु ॥ ॐ इष्टसंपदस्तु ॥ ॐ अरिष्टनिरसनमस्तु ॥ ॐ यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ॐ यच्छ्रेयस्तदस्तु ॥ ॐ उत्तरे कर्मणि निर्विघ्नमस्तु ॥ ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यन्ताम् ॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसंपदस्तु ॥ पात्रे उदकसेकः ॥ ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् ॥ ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ॐ दुर्गापाञ्चाल्यौ प्रीयेताम् ॥ ॐ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् ॥ ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् ॥ ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ॥ ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ॥ ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ॥ ॐ ब्रह्मपुरोगाः सर्वे वेदाः

---

दिवि । न वोहिराउवा । ण्यनाइमायाउवा । पदंविदाउवा । तिविद्युताः । वित्तंमाओउवा । स्वरोदा २३ सा ३४३ ई । ओ २३४५ ई । डा ॥ वेयगानस्य एकादशप्रपाठकस्य प्रथमार्द्धे साम ३१ ॥

९ अथर्वणः—नैनंरक्षांसिनपिशाचाःसहन्तेदेवानामोजःप्रथमजंह्येतत् ॥ योबिभर्तिदाक्षायणंहिरण्यं सजीवेषुकृणुतेदीर्घमायुः ॥ १ ३५ ॥

११ ऋक्—ॐ उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽअश्वदाःसहतेसूर्येण ॥ हिरण्यदाऽअमृतत्वंभजंतेवासोदाःसोमप्रतिरंतआयुः ॥ ८६ ॥

११ साम—ॐ उच्चाता ३ ईजावमंधसाः । दिवाई । सा १ द्भू २ । मिया २३ ददाई । उमोऽशर्म्मा । महा २३ ईश्रवाउ । वा ३ । स्तोये २३४५ ॥ वेयगानस्य द्वादशप्रपाठकस्य द्वितीयार्द्धे साम १३ ॥

१२ अथर्वणः—ॐ उच्चापतन्तमरुणंसुपर्णमध्येदिवस्तरणिंभ्राजमानम् ॥ पश्यामत्वासवितारंयमाहुरजस्रंज्योतिर्यदविन्ददत्रिः ॥ का० १३ अ० २ सू० मं ३६ ॥ इत्याशीर्वादः ॥

प्रीयन्ताम् ॥ ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ ॐ श्रीसरस्वत्यौ प्रीयेताम् ॥ ॐ श्रद्धामेधे प्रीयेताम् ॥ ॐ भगवती कात्यायनी प्रीयताम् ॥ ॐ भगवती माहेश्वरी प्रीयताम् ॥ ॐ भगवती ऋद्धिकरी प्रीयताम् ॥ ॐ भगवती सिद्धिकरी प्रीयताम् ॥ ॐ भगवती पुष्टिकरी प्रीयताम् ॥ ॐ भगवती तुष्टिकरी प्रीयताम् ॥ ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ ॐ सर्वाः कुलदेवताः प्रीयन्ताम् ॥ ॐ सर्वा ग्रामदेवताः प्रीयन्ताम् ॥ बहिः ॥ ॐ हताश्च ब्रह्मद्विषः ॥ १ ॥ ॐ हताश्च परिपन्थिनः ॥ २ ॥ ॐ हताश्च विघ्नकर्तारः ॥ ३ ॥ ॐ शत्रवः पराभवं यान्तु ॥ ४ ॥ ॐ शाम्यन्तु घोराणि ॥ ५ ॥ ॐ शाम्यन्तु पापानि ॥ ६ ॥ ॐ शाम्यन्त्वीतयः ॥ ७ ॥ पुनः पात्रे ॥ ॐ शुभानि वर्द्धन्ताम् ॥ ॐशिवा आपः सन्तु ॥ ॐशिवा ऋतवः सन्तु ॥ ॐ शिवा ओषधयः सन्तु ॥ ॐ शिवा वनस्पतयः सन्तु ॥ ॐ शिवा नद्यः सन्तु ॥ ॐशिवा गिरयः सन्तु ॥ ॐ शिवा अतिथयः सन्तु ॥ ॐ शिवा अग्नयः सन्तु ॥ ॐशिवा आहुतयः सन्तु ॥ ॐअहोरात्रे शिवे स्याताम् ॥ यजुः—ॐनिकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्ताँयोगक्षेमोनःकल्पताम् ॥२२॥ ॐऋक्[13]साम[14]अथर्व[15]मन्त्राः॥ ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्॥ॐभगवान्नारायणः प्रीयताम्॥ॐभगवान्पर्जन्यः प्रीयताम्॥ ॐभगवान् स्वामी महासेनः प्रीयताम्॥पुण्याहकालान्वाचयिष्ये॥विप्राः—ॐवाच्यताम् ॥ ब्राह्म्यं पुण्यं महर्यच्च सृष्ट्युत्पादनकारकम्॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः॥१॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य गायत्रीपुरश्चरणकर्मणः पुण्याहं भवन्तो ब्रुवन्तु॥ॐअस्तु* पुण्याहम्॥

---

१ प्रयोगचूडामणौ हताश्च ब्रह्मद्विष इत्यारभ्य शाम्यन्त्वीतयः इत्यन्तैः सप्तवाक्यैः पूर्वस्मात् पात्रान्तरे जलप्रक्षेपः कार्य इत्युक्तम् ॥ * द्विजैः सर्वत्र क्रमेण—अस्तु पुण्याहम् । अस्तु कल्याणम् । कर्म ऋध्यताम् । आयुष्मते स्वस्ति । अस्तु श्रीः । इति प्रतिवचनं देयम् ॥

१३ ऋक्—शन्नः कनिक्रदद्देवः पर्जन्योऽअभिवर्षतु ॥ शन्नोद्यावापृथिवीशं प्रजाभ्यः शन्न एधि द्विपदेशंचतुष्पदे ॥ ऋ. ग्र. शान्तिपाठे परिशिष्टमन्त्रः ॥

१४ साम—ॐत्वष्टा ३४ । नो दैवियं वचौः । पर्जन्योब्रह्मणस्पा २३ तीः । पुत्रैर्भ्रातृभिरदितिर्नुपातू२३ नाः । दुष्टारा २३ आ । मणंवा २३ चा ३४३ः । ओ २३४५ ई । डा ॥ वेयगानस्य अष्टमप्रपाठकस्य प्रथमार्द्धे साम २० ॥

१५ अथर्वणः—गणास्त्वोपगायन्तुमारुताःपर्जन्यघोषिणः पृथक् ॥ सर्गावर्षस्यवर्षतोवर्षन्तुपृथिवीमनु ॥ का० ४ अ० ३ सू० १५ मं० ४ ॥

एवं त्रिः ॥ यजुः ॥ ॐपुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १ ॥ ऋक्सामाथर्वमन्त्राः ॥ पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥२॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य गायत्रीपुरश्चरणकर्मणः कल्याणं भवन्तो ब्रुवन्तु ॥ ॐ अस्तु कल्याणम् । एवं त्रिः ॥ यजुः ॥ ॐ यथेमांवाचङ्कल्याणीमावदानिजनेभ्यः ॥ ब्रह्मराजन्याभ्या ᳪ शूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामःसमृद्ध्यतामुपमादोनमतु ॥ २ ॥ ऋक्सामाथर्वमन्त्राः ॥ सागरस्य यथावृद्धिर्महालक्ष्म्यादिभिः कृता ॥ सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः ॥३॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य गायत्रीपुरश्चरणकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु । ॐ कर्म ऋद्ध्यताम् ॥ एवं त्रिः ॥ यजुः ॥ ॐसत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताः

---

१ ऋक्—ॐ उद्गातेवशकुनेसामगायसिब्रह्मपुत्रऽइवसवनेषुशंससि ॥ वृषेववाजीशिशुमतीरपीत्यासर्वतोनः शकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ २ ॥

साम—ॐपुनानःसोमा३धारा२३४ या । आपोवसानोअर्षस्यारत्नधायोनिमृतस्यसा ईद साई । ओहा३उवा । उत्सोदेवोहिरा २३ हाई । ओहा ३ उवा । व्यया । ओ । होवा । हो ५ ई । डा । वेयगानस्य चतुर्दशप्रपाठकस्य प्रथमार्द्धे साम ३५ ॥

अथर्वणः—ॐपुनन्तुमादेवजनाःपुनन्तुमनवोधिया ॥ पुनन्तुविश्वाभूतानिपवमानःपुनातुमा काण्ड ६ अ० २ सू० १९ मं० १ ॥

२ ऋक्—ॐअपाः सोमस्तमिन्द्रप्रयाहिकल्याणीर्जायासुरणंगृहेते ॥ यत्रारथस्यबृहतोनिधनंविमोचनंवाजिनोदक्षिणावतः ॥ ३ ॥

साम—ॐकोऽ५ या । नश्चा ३ इत्रा ३ आभुवात् । उ । ती स दा वृध स्स ३ खा । ॐ ३ हो हाइ । कया २३ शचा इ । ष्टयो हो ३ । हुंम्मा १२ । वाँऽ २ तों ३५ हाइ ॥ वेयगानस्य पञ्चमप्रपाठकस्य प्रथमार्द्धे साम २५ ॥

अथर्वणः—ॐविश्वजित्कल्याण्यैमापरिदेहि ॥ कल्याणिद्विपाच्चसर्वन्नोरक्षचतुष्पाद्यच्चनःस्वम् ॥ का० ६ अ० ११ सू० १०७ मं० ३ ॥

अभूम ॥ दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्योतिः ॥ ५२/८ ॥ ऋक्-सामाथर्वमन्त्राः ॥ स्वस्तिरस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणायास्मै गायत्रीपुरश्चरणकर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥ ॐ आयुष्मते स्वस्ति ॥ एवं त्रिः ॥ यजुः ॥

---

§ अत्र अव्ययानव्ययवाचकस्य स्वस्तिशब्दस्य प्रयोगे केचन वैदिका महद्विवादं कुर्वन्ति ॥ स्वस्तिशब्दस्यानव्ययवाचकत्वं स्वीकृत्य अस्य कर्मण स्वस्तिं भवन्तो ब्रुवन्तु इत्याकारकं सपरिहासमुच्चैरुच्चारयन्ति ॥ परश्चास्मिन्विषये प्रयोज्यमानस्य स्वस्तिशब्दस्य आशीर्वादात्मकत्वेनैव प्रयोगदर्शनात् "स्वस्ति आशीःक्षेमपुण्यादौ" इत्यमरकोशानुरोधाच्च "स्वस्ति ते (तुभ्यं) भूयादिति" प्रयोगवत् स्वस्तिशब्दस्याव्ययवाचकत्वमेव स्वीकर्तुं युक्ततरम् ॥ तस्माद्वैयाकरणरीत्या "नम स्वस्तिस्वाहास्वधाअलंवषड्योगाच्च "इतिपाणिनीयसूत्रेण "अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु" इत्येव प्रयोग साधुरित्येव सर्वैरङ्गीक्रियते॥अपिच षष्ठीप्रयोगकर्तारस्ते याज्ञिका वैयाकरणैस्तु नोपहास्या॥ तथैव कारिकायामपि स्वस्तिशब्दस्याव्ययवाचकत्वमेव स्वीकृतम्। यथा—वक्तारश्च चतुर्थ्यन्त तत्तन्नामोक्तिपूर्वकम् ॥ स्वस्तीति च प्रतिब्रूयुरथ सर्वेऽपि ते द्विजा ॥ इति विशेषोक्तिदर्शनात्सर्वत्र चतुर्थ्यन्त एव प्रयोग कर्तव्य इत्यपि स्पष्टतया सदृश्यते॥ ननु केचन शिष्टा 'स्वस्तिरस्तु याऽविनाशाख्या' इति श्लोकस्यार्थं कुर्वन्तो ब्राह्मणद्वारा "तां च स्वस्तिं ब्रुवन्तु न" इत्यस्माकं यजमानाभिप्राय इत्यपि प्रब्रुवन्तोऽनव्ययवाचकत्वं साग्रहं स्वीकृत्य षष्ठ्या एव प्रयोगस्य साधुत्वं मानयन्ति तत्किं योग्यम् इतिचेन्न॥ स्वस्तिर्भवतु ते दाश इत्यादावपि चतुर्थीविभक्तेरेव प्रयोगदर्शनात् तथैव तेषाञ्च पूर्वोक्तकल्पनाया मानाभावाच्च ॥ अतस्तेऽदृष्टपूर्वापरसम्बन्धा एव ज्ञेयाः ॥ ननु केचन भविष्यपुराणस्य प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषत ॥ स्वस्तिर्भवतु मे नित्य सुख चानुमतं तथा ॥ १ ॥ इति श्लोके षष्ठीप्रयोगवत् अत्रापि तथा प्रयोगे का हानिरिति वदेयुरिति चेन्न। अत्र तु अव्ययवाचकस्वस्तिशब्दस्यैव स्वीकारात्। अव्यययोगेऽपि पुराणवत् स्वीकारेऽनेकविधाना तादृशाना प्रयोगाना साधुत्वे साधुप्रयोगप्रतिपादकपाणिनीयव्याकरणस्यैव वैयर्थ्यापत्ते असाधुप्रयोगस्यैव साधुत्वापत्तेश्च ॥

३ ऋक्—ॐ ऋद्ध्यामस्तोमंसनुयामवाजमानोमंत्रैसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूतांशोऽअश्विनोः काममप्राः ॥ ८२/६ ॥

साम—औ हो वा औ हो वा औ हो ३ वा। अगन्म ज्योतिः । अगन्म ज्योतिः । अगन्म ज्यो तिः। अमृता अभूम । अमृता अभूम । अमृता अ भू मा । तरिक्षंपृथिव्याअध्यारु हा मा । तरिक्षंपृथिव्याअध्यारु हा मा । तरिक्षंपृथिव्याअध्यारुहाम । दिवमन्तरिक्षा दध्या रुहा म । दिवमन्तरिक्षादध्यारु होमे । दिवमन्तरिक्षा दध्या रुहाम । अविदाम दे वा न्। अविदाम दे वा न् । अविदाम दे वा न्। समुदे वै रगन्महि । समु दे वै रगन्महि । समुदे वै रगन्महि औ हो वा । औ हो वा । औ हो ३ वा । सुवर्ज्यो ती २ ३ ४ । ५ः ॥

आरण्यगानस्य चतुर्थप्रपाठकस्य प्रथमार्द्धे साम ४ ॥

अथर्वणः—ॐ ऋधङ्मंत्रोयोनिंयआनुभूवामृतासुवर्द्धमानः सुजन्मा ॥ अदब्धासुभ्राजेमानोहेवत्रितोधर्त्तादाधारत्रीणि ॥ का० ५ अ० १ सू० १ म० १ ॥

ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टने-मिःस्वस्तिनोबृहस्पतिर्दधातु ॥ ३६ ॥ ऋक्सामाथर्वमन्त्राः ॥ समुद्रमथना-ज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः ! मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्यास्य गायत्रीपुरश्चरणकर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ ॐ अस्तु श्रीः ॥ एवं त्रिः ॥ ॥ यजुः ॥ ॐमनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनाᳬरूपमन्नस्यरसोयशःश्रीःश्रयताम्मयिस्वाहा ॥ ३९ ॥ ऋक्सामाथर्वमन्त्राः॥ हस्ते जलमादाय। मया कृतेऽस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् महागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः इति द्विजाः ॥

अथाभिषेकः ॥ अभिषेके पत्नी वामतः इत्यनुरोधात् यजमानस्य वामभागे

---

१ सव्ये (वामे) पत्नी त्रिषु स्थाने पितॄणा पादपूजने ॥ रथस्यारोहणे चैव ह्यभिषेके तथैव च ॥ तथा च संस्कारकौस्तुभे-सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः स्थिता ॥ विप्रपादक्षालने च ह्यभिषेके च वामतः ॥ तथैव-वामे पत्नी त्रिषु स्थाने पितॄणा पादशौचने ॥ रथारोहणकाले च ऋतुकाले सदा भवेत् ॥

४ ऋक्—ॐस्वस्तिरिद्धिप्रपथेश्रेष्ठारेक्णस्वत्यभियावाममेति ॥ सानोऽअमासोऽअरणे-निपातुस्वावेशाभवतुदेवगोपा ॥ ८५ ॥

साम—ॐत्रातारमिन्द्रमविता। रमि २३ न्द्राम्। हे वे हवे सुहवᳬशू। र मी '२३ न्द्राम्। हुवाइ नुशक्रंपुरुहू। तमी २३ न्द्राम्। इ दᳬह। वाइः। म घ वा। वा३४३ इ। तू ३ वा ५ इन्द्रा ६५६ः॥ वेयगानस्य नवमप्रपाठकस्य प्रथमार्द्धे साम ३ ॥

अथर्वणः—ॐस्वस्तिमात्रउतपित्रेणोऽअस्तु स्वस्तिगोभ्योजगतेपूरुषेभ्यः ॥ विश्वंसुभूतंसु विदत्रंनो अस्तुज्योगेवदृशेमसूर्यम् ॥ का० १ अ० ६ सू० ३१ मं० ४ ॥

५ ऋक्—ॐश्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाऽअमृत-त्वमायन्भवन्तिसत्यासमिथामितद्रौ ॥ ७४ ॥

साम—ॐआयन्तइवसू ४ रायां। विश्वा ५२ इदिन्द्रा। ५२ स्यभा ५२ क्षाता। वा सू नि जा तो ज निमा। नियोजा १ सा ५२। प्रतिभा गं नदी २ धिमः। ग्रा २३ ती। मागांना ३ दा। हुं। धिमा ३ः। ओ २३४ वा। है २ ३ ४ ५॥ वेयगानस्य सप्तम-प्रपाठकस्य द्वितीयार्द्धे साम ५ ॥

अथर्वणः—ॐप्रहयातुवरुणः सोमोअग्निर्बृहस्पतिर्वसुभिरेहयातु ॥ अस्यश्रियमुपसंयातस-र्वऽउग्रस्यचेतुःसंमनसः सजाताः ॥ काण्ड ६ अनुवाक ८ सूक्त ७३ मंत्र १ ॥

पत्नीमुपवेश्य पात्रपातितकलशोदकेन अविधुराश्चत्वारो ब्राह्मणा दूर्वाम्रपल्लवैरुदङ्मुखास्तिष्ठन्तः सपत्नीकं यजमानमभिषिञ्चेयुः ॥ ॐपयः॑पृथि॒व्याम्पय॒ऽओष॑धीषु॒पयो॑दि॒व्य॒न्तरि॑क्षे॒पयो॑धाः ॥ पय॑स्वतीः॒प्र॒दिश॑ः सन्तु॒मह्य॑म् ॥ ३६/१८ ॥ ॐपञ्च॑न॒द्यः॑ सर॑स्वती॒मपि॑यन्ति॒सस्रो॑तसः ॥ सर॑स्वती॒तुप॑ञ्च॒धासो दे॒शेभ॑वत्स॒रित् ॥ ११/३४ ॥ ॐवरु॑णस्यो॒त्तम्भ॑नमसि॒वरु॑णस्यस्क॒म्भ॒सर्ज॑नीस्थो॒वरु॑णस्यऽऋ॒त॒सद॑न्यसि वरु॑णस्यऽऋ॒त॒सद॑नमसि॒वरु॑णस्यऽऋ॒त॒सद॑न॒मासी॑द ॥ ३६/४ ॥ ॐपु॒नन्तु॑मादेवज॒नाः पुनन्तु॒मन॑सा धिय॑ः ॥ पु॒नन्तु॒विश्वा॑भू॒ता॒नि॒जात॑वेदः पु॒नी॒हिमा॑ ॥ ३९/१९ ॥ ॐदे॒वस्य॑त्वासवि॒तुः प्र॑स॒वे॒श्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्याम् ॥ सर॑स्वत्यैवा॒चोय॒न्तुर्य॒न्त्रियै॑दधामि॒बृह॒स्पते॑ष्ट्वा॒साम्राज्ये॑ना॒भिषि॑ञ्चाम्यसौ ॥ ३०/९ ॥ ॐदे॒वस्य॑त्वासवि॒तुः प्र॑स॒वे॒श्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्याम् ॥ सर॑स्वत्यैवा॒चोय॒न्तुर्य॒न्त्रेणा॒ग्नेः साम्राज्ये॑ना॒भिषि॑ञ्चामि ॥ २८/१८ ॥ ॐदे॒वस्य॑त्वासवि॒तुः प्र॑स॒वे॒श्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्याम् ॥ अ॒श्विनो॒र्भैष॑ज्येन॒तेज॑से ब्रह्मवर्च॒साया॒भिषि॑ञ्चामि॒सर॑स्वत्यै॒भैष॑ज्येनवी॒र्या॒या॒न्नाद्या॑या॒भिषि॑ञ्चामीन्द्र॑स्येन्द्रि॒येण॒बला॑यश्रि॒यैयश॑से॒भिषि॑ञ्चामि ॥ ३/२० ॥ ॐविश्वा॑निदेवसवितर्दुरि॒तानि॒परा॑सुव ॥ यद्भ॒द्रन्तन्न॒ऽआसु॑व ॥ ३/३० ॥ ॐधाम॒च्छद॒ग्निरिन्द्रो॑ब्र॒ह्मादे॒वोबृह॒स्पति॑ः । सचे॑तसो॒विश्वे॑दे॒वाय॒ज्ञम्प्राव॑न्तुनः शु॒भे ॥ ६/१८ ॥ ॐत्वय॑व्यंविष्ट॒दाशु॒षो॒नॄः पा॑हिशृ॒णु॒धीगिर॑ः ॥ रक्षा॑तो॒कमु॒तत्मना॑ ॥ ३/११ ॥ ॐअन्न॑पु॒तेन्न॑स्यनोदेह्यनमी॒वस्य॑शु॒ष्मिण॑ः । प्रप्र॑दा॒तार॑न्तारिष॒ऽऊर्जं॑नोधेहिद्वि॒पदे॒चतु॑ष्पदे ॥ ८३/११ ॥ ॐ द्यौः शान्ति॑र॒न्तरि॑क्ष॒ᳪ शान्ति॑ः पृथि॒वीशान्ति॒रापः॒ शान्ति॒रोष॑धयः॒ शान्ति॑ः ॥ वन॒स्पत॑यः॒ शान्ति॒र्विश्वे॑दे॒वाः शान्ति॒र्ब्रह्म॒शान्ति॑ः सर्व॒ᳪ शान्ति॑ः शान्ति॑रे॒वशान्ति॑ः सामा॒शान्ति॑रेधि ॥ १७/३६ ॥ ॐ यतो॑यतः स॒मीह॑से॒ततो॑नो॒ऽअभ॑यङ्कुरु ॥ शन्न॑ः कुरु॒प्र॒जाभ्यो॒भय॑न्नः प॒शुभ्य॑ः ॥ २२/३६ ॥ ॐस॒र्वेषां॒वा॒ऽएषवे॒दानां॒ᳪ र॒सोयत्सा॒मस॒र्वेषा॒मे॒वैनमेतद्वे॒दानां॒ᳪ र॒सेना॒भिषि॑ञ्चति ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ स्वस्थाने उपविश्य हस्ते जलं गृहीत्वा—अभिषेककर्तृकेभ्यो ब्राह्मणेभ्यो यथोत्साहं दक्षिणां दास्ये तेन कर्माधीशः प्रीयताम् ॥ अत्रावसरे दम्पत्योः पुत्रवतीभिर्वृद्धसुवासिनीभिर्नीराजनं कार्यम् ॥ ॐ अना॑धृष्टापु॒रस्ता॑द॒ग्नेराधि॑पत्य॒ऽआयु॑र्मे॑दाः पु॒त्रव॑तीदक्षिण॒तऽइन्द्र॒स्याधि॑पत्ये प्र॒जाम्मे॑दाः । सु॒षदा॑प॒श्चाद्दे॒वस्य॑सवि॒तुराधि॑पत्ये॒चक्षु॑र्मे॑दा॒ऽआश्रु॑तिरुत्तर॒तोधा॒तुराधि॑पत्येरा॒यस्पोष॑म्मेदाः ॥ विधृ॑तिरु॒परि॑ष्टा॒द्बृह॒स्पते॒राधि॑पत्य॒ऽओजो॑मेदा॒विश्वा॑भ्योमा॒ना॒ष्ट्राभ्य॑स्पाहि॒मनो॒रश्वा॑सि ॥ १३/७ ॥ अत्रावसरे यजमानेन यथाशक्ति नीराजनकर्त्रीभ्यः सुवासि-

नीभ्यो यत्किञ्चिद्व्यावहारिकं द्रव्यं देयम् ॥ ततो हस्ते जलं गृहीत्वा-अनेन पुण्याह- वाचनेन कर्मणा कर्माङ्गदेवता श्रीभगवती गायत्रीदेवी प्रीयताम् ॥

॥ इति पुण्याहवाचनप्रयोगः ॥

॥ अथ गौर्यादिचतुर्दशमातृणां समन्त्रकपूजनप्रयोगः ॥

रक्तवस्त्रास्तृते पीठे गोधूमैर्निर्मितेपु गणेशार्थपुञ्जेन सह पञ्चदशपुञ्जेपु वायव्य- चतुःकोष्टकमध्यकोष्टे गणेशमावाह्य (मध्यचतुःकोष्टकस्येशानतो) वाह्यत ईशानतो वा प्रादक्षिण्येन गौर्यादयश्चतुर्दशमातरः स्थाप्याः ॥ यथा–हस्तेऽक्षतान्गृहीत्वा ॥

॥ अथ गौर्यादिचतुर्दशमातृणां स्थापनार्थं कोष्टकम् ॥

ई. पू. अ.

उ. (left) — द. (right)

| | | | |
|---|---|---|---|
| गौ. १ | प. २ | | श. ३ |
| स्वा. १० | धृ. ११ | पु. १२ | मे. ४ |
| स्व. ९ | आ. १४ | तु. १३ | सा. ५ |
| ग. | | | |
| दे. ८ | ज. ७ | | वि. ६ |

वा. प. नै.

ॐ गणानान्त्वा गणपतिं हवामहेप्प्रियाणान्त्वा प्प्रियपतिं हवामहे निधीनान्त्वा निधिपतिं हवामहे व्वसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ $\frac{२३}{१९}$ ॥ वायव्यचतुःकोष्टकमध्यकोष्टे । ॐभूर्भुवःस्वः गणेशाय नमः गणेशमावाहयामि स्थापयामि ॥१॥ ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्च प्प्रयन्त्स्वः ॥ $\frac{६}{३}$ ॥ ईशान्या कोष्ठे । ॐभूर्भु० गौर्यै नमः

‡ कल्पद्रुमकारे अमौ प्रीयतामित्युक्त्वा तत्तद्देवतानामभिधानानि प्राय परिगणितानि तानि ततो ज्ञेयानि ॥ तत्र तत्र च अनेन पुण्याहवाचनेन अमौ प्रीयतामिति असौ स्थाने तत्तद्देवताभिधान वदेदित्यर्थः ॥ परञ्च प्रधानदेवता या तु स्याच्चिकीर्पितकर्मण ॥ असाविति तु तां ब्रूयात्सदेहे तु प्रजापतिम् ॥ इति वचनप्रामाण्यात्प्रजापतिः प्रीयतामिति प्रयोगेऽपि न दोप इति ध्वन्यते ॥

१ गौर्यादिचतुर्दशमातृणां स्थापन पोडशमातृणां वेत्यत्रापि मतद्वयम् ॥ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातर ॥ १ ॥ धृति पुष्टिस्तथा तुष्टिरात्मन कुलदेवता ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥ २ ॥ इति श्लोकनिर्दिष्टक्रमेण परिगणनाया पोडश मातरो भवन्ति ॥ परञ्च मातरो लोकमातर इति पदे सर्वासां मातृणां विशेषणमुक्त्वा एताश्चतुर्दश मातरो वृद्धौ पूज्या इत्युक्तम् ॥ कात्यायनेन

गौरीमा० स्था० ॥ १ ॥ पूर्वे । ॐ हिरण्यरूपाऽउषसोविरोकऽउभाविन्द्राऽउदिथः सूर्य्यश्च ॥ आरोहतंवरुणमित्रगर्तन्ततश्चक्षाथामदितिन्दितिश्चमित्रोसिवरुणोसि ॥ ५/१० ॥ ॐ भू० पद्मायै नमः पद्मामा० स्था० ॥ २ ॥ आग्नेय्याम्। ॐ कदाचन स्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्यतऽआदि-

छन्दोगपरिशिष्टेऽपि कथितम्—कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ॥ पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥१॥ तथा मातॄणां परिगणनाऽपि तेन तत्रैव पूर्वोक्ता विहिता॥ तथैव आदित्यभाष्ये परशुरामेणापि—गौर्यादितुष्टिपर्यन्ता आत्मदेवतया सह ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश ॥ इत्युक्तम्। परञ्च हेमाद्रिरूपनारायणमदनरत्नदानसागरदानप्रदीपकारैस्तु वृद्धौ पूज्यास्तु षोडश इति कथयित्वा 'मातरो लोकमातरः' इत्युभयोः पदयोः पृथक् परिगणनं कृतम् ॥ एवमुभयैः शिष्टैश्चतुर्दशषोडशमातृस्वीकाराद्द्वौ पक्षौ इत्यन्ये। अत एव पद्धतिकारैरप्युभौ पक्षौ स्वीकृतौ॥ तथैव षोडशमातॄणां स्थापनार्थं कोष्टकमप्यभिहितम्॥ पञ्चोर्ध्वाः पञ्च तिर्यग्वै रेखाः कृत्वा विचक्षणैः॥

## ॥ अथ सगणेशगौर्यादिषोडशमातृकाणां स्थापनार्थं कोष्टकम् ॥

| ई. | | पू. | | आ. |
|---|---|---|---|---|
| | स्वधा १० | लोक. १३ | मातृ १२ | स्वाहा ११ |
| | देवसे. ९ | कुलदे. १७ | पद्मा ३ | विज ७ |
| उ. | जया ८ | धृति १४ | गौरी २ | सावि. ६ | द. |
| | ग. १ | | | |
| | तुष्टि १६ | मेधा ५ | शची ४ | पुष्टि १५ |
| वा. | | प. | | नै. |

वायुचतुष्कमध्यस्थं गणेशं तत्र पूजयेत् ॥ १ ॥ मध्यनैर्ऋतके कोणे गौरी पद्मा तु पावके ॥ शची पश्चिमतो मेधा सावित्री विजया यमे ॥ २ ॥ जयोत्तरे देवसेना स्वधा चैशान एव च ॥ स्वाहा चैव तथाऽऽग्नेय्यां मातरो लोकमातरः ॥ ३ ॥ मध्यवायौ धृतिश्चैव नैर्ऋत्ये पुष्टिरेव च ॥ तुष्टिश्चैव तु वायव्ये मध्येऽथ कुलदेवता ॥ ४ ॥ प्रादक्षिण्यक्रमात्स्थाप्या ईशानदिशतोऽमला ॥ वायुचतुष्कमध्ये तु गणेशं तत्र पूजयेत् ॥५॥ एवं गौर्यादिमातॄणां स्थानं तु समुदीरितम् ॥ कर्तव्यं स्थापनं तासां सुधीभिस्तु यथारुचि ॥ ६ ॥

त्येभ्यस्त्वा॥ ३/८॥ ॐभू० शच्यै न० शचीमा० स्था०॥३॥ततोऽधस्ताद्दक्षिणकोष्ठे। ॐ मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा ॥ १५/३२॥ ॐभू० मेधायै नमः मेधामा० स्था० ॥ ४ ॥ ततोऽधस्ताद् दक्षिणकोष्ठे । ॐ उपयामगृहीतोसि सावित्रोसि चनोधाश्चनोधाऽअसि चनो मयि धेहि ॥ जिन्व यज्ञञ्जिन्व यज्ञपतिम्भगाय देवाय त्वा सवित्रे ॥ ७/८ ॥ ॐभू० सावित्र्यै न० सावित्रीमा० स्था० ॥ ५ ॥ नैर्ऋत्याम् । ॐ विज्यन्धनुः कपर्द्दिनो विशल्यो वाणवाँ२उत ॥ अनेशन्नस्य याऽइषवऽआभुरस्य निषङ्गधिः ॥ १०/१६ ॥ ॐ भू० विजयायै न० विजयामा० स्था० ॥ ६ ॥ पश्चिमायाम् । ॐ या ते रुद्र शिवा तनूरघोरा पापकाशिनी ॥ तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि ॥ २/१६ ॥ ॐ भू० जयायै नमः जयामावा० स्था० ॥ ७ ॥ वायव्याम् । ॐ देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाᳬं रातिरभि नो निवर्त्तताम् ॥ देवानाᳬं सख्यमुपसेदिमा वयन्देवा नऽआयुः प्रतिरन्तु जीवसे ॥ १५/२५॥ ॐ भू० देवसेनायै न० देवसेनामा० स्था० ॥ तदुपरि उत्तरकोष्ठे। ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम् ॥ ३६/१९ ॥ ॐ भू० स्वधायै न० स्वधामा० स्था० ॥९॥ तदुपरि उत्तरस्याम् । ॐ स्वाहा यज्ञं मनसः स्वाहोरोरन्तरिक्षात्स्वाहा द्यावापृथिवीभ्याᳬं स्वाहा वातादारभे स्वाहा॥ ६/४॥ ॐभू० स्वाहायै न० स्वाहामा० स्था० ॥१०॥ तद्दक्षिणे मध्यकोष्ठस्येशान्याम् । ॐ धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहि निष्क्रव्यादᳬं सेधा देवयजं वह ॥ ध्रुवमसि पृथिवीन्दृᳬं ह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य वधाय ॥ १७/१॥ ॐभू० धृत्यै न० धृतिमा० स्था० ॥ ११ ॥ तद्दक्षिणे मध्यकोष्ठस्य आग्नेय्याम् । ॐ त्वष्टा तुरीपोऽअद्भुतऽइन्द्राग्नी पुष्टिवर्द्धना ॥ द्विपदा च्छन्दऽइन्द्रियमुक्षा गौर्न वयो दधुः ॥ २०/२१॥ ॐ भू० पुष्ट्यै न० पुष्टिमा० स्था० ॥ १२ ॥ तदधस्तान्मध्यकोष्ठस्य नैर्ऋत्याम् । ॐ बृहस्पतेऽअति-

---

अथवा षोडशकोष्ठानि कृत्वा वायुचतुष्कोन मध्य गणेशं संस्थाप्य ईशानतः प्रादक्षिण्येन मातरो स्थाप्याः ॥ एवं मातृणां स्थापने उभौ पक्षौ दृश्येते तथापि रुद्रकल्पद्रुमकारादिभिर्मातरो लोकमातर इति सर्वासां विशेषणमुक्त्वा चतुर्दश एव मातर इत्यभिहितं तदेव सर्वेषां संमतम् ॥ अत्रान्यदपि प्रमाणम् ॥ हेमाद्रौ प्रतिष्ठाकाण्डोदाहृतानां गौर्याद्यावाहनमन्त्राणामपि चतुर्दश वसवोसन्त्वाच्चतुर्दशमातृणामेव स्थापनं युज्यते इत्यपि बहवः ॥ वस्तुतस्तु यत्र मण्डपे विनायकादिघृतमातृकान्तानां स्थापनं विहितं तत्र 'मातरो लोकमातर' इत्युभयोः पृथक् गणनायां षट्षष्टिमातृकाणामावाहनं स्यादिष्यते च चतुःषष्टिमातृणामेवातः सर्वत्र गौर्याद्यावाहने चतुर्दशमातृकाणामेव आवाहनं पूजनमाचरणीयमिति निष्कर्षः ॥ तथापि येषां मातृणां पूजने यदि कोऽप्यधिकतरं पुण्यं स्येष्टं ते कुर्वन्तु नाम षोडशमातृणां पूजनम् ॥ अतोऽत्र शास्त्रसम्मता देशाचारतो वा व्यवस्था बोध्या ॥

यदुर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासु द्रविणन्धेहिचित्रम् ॥ १६ ॥ ॐ भू० तुष्ट्यै न० तुष्टिमा० स्था० ॥ १३ ॥ तदुत्तरे मध्यकोष्ठस्य वायव्याम् । ॐअम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १६ ॥ ॐ भू० आत्मनः कुलदेवतायै न० आत्मनः कुलदेवतामा० स्था० ॥ १४ ॥ ॐमनोजूतिर्जुषतामाज्यस्यबृहस्प-तिर्य्यज्ञमिमन्तनोत्वरिष्टंय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोम्प्र-तिष्ठ ॥ १३ ॥ ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातरः सुप्रतिष्ठिता वरदा भवत ॥ ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः आसनार्थे अक्षतान् सम०॥ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः पादयोः पाद्यं स०॥ ॐ भूर्भुवः स्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः हस्तयोरर्घ्यं सम०॥ ॐभूर्भुवः स्वः सगणेशगौ-र्याद्यावाहितमातृभ्यो नमः आचमनीयं सम०॥ ॐभूर्भुवः स्वः सगणेशगौर्याद्यावा-हितमातृभ्यो नमः स्नानं सम०॥अथ मिलितपञ्चामृतस्नानम्॥ ॐभूर्भुवःस्वः सगणे-शगौर्याद्यावाहितमातृभ्यो नमः मिलितपञ्चामृतस्नानं सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः शुद्धोदकस्नानं सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः वस्त्रोपवस्त्रे सम० ॥ ॐभूर्भुवःस्वः सगणेश-गौर्याद्यावाहितमातृभ्यो नमः गन्धं सम० ॥ ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहित-मातृभ्यो नमः अक्षतान् सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः ऋतुकालोद्भवानि पुष्पाणि पुष्पमालाश्च सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौ-र्याद्यावाहितमातृभ्यो नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः धूपमाघ्रापयामि ॥ ॐ भूर्भुवःस्वः सगणेश-गौर्याद्यावाहितमातृभ्यो नमः दीपं दर्शयामि॥ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहि-तमातृभ्यो नमः नैवेद्यं निवेदयामि ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य वामहस्तं पद्माकारं कृत्वा दक्षिणहस्तेन ग्रासमुद्राः प्रदर्शयेत् ॥ ॐ प्राणाय स्वाहा ॥ ॐअपानाय स्वाहा ॥ ॐव्यानाय स्वाहा ॥ ॐउदानाय स्वाहा ॥ ॐसमानाय स्वाहा ॥ नैवद्यान्ते आचमनीयं सम० ॥ पूर्वापोशानं सम० ॥ मध्ये पानीयं सम० ॥ उत्त-रापोशानं सम० ॥ हस्तप्रक्षालनं सम० ॥ मुखप्रक्षालनं सम० ॥ आचमनीयं सम० ॥ करोद्वर्तनार्थे गन्धं सम० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः मुखवासार्थे सपूगीफलं ताम्बूलं सम० ॥ ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहितमा-तृभ्यो नमः यथाशक्ति सुवर्णपुष्पदक्षिणां सम० ॥ निराजनीं प्रज्वाल्य संपूज्य ॥ ॐ

आरात्रिपार्थिवं०॥ ३३/३४ ॥ कर्पूरपूरेण०। इत्यारार्तिकं कुर्यात् ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः आरार्त्तिक्यं सम०। पुष्पैर्देववन्दनम्। हस्तेनात्मवन्दनम् ॥ हस्तं प्रक्षाल्य॥ ॐ सर्मक्ख्येदेव्याधियासन्दक्षिणयोरुचक्षसा॥ मामऽआयुःप्रमोषीर्म्मोऽअहन्तववीरंविदेयतवदेविसन्दृशि ॥ ३४/४ ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः मंत्रपुष्पाञ्जलिं सम० ॥ ॐभूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः प्रदक्षिणां सम०॥ विशेषार्घ्यः। अर्घ्यपात्रे गन्धाक्षतपुष्पसहितं जलं सहिरण्यं नालिकेरं च निधाय प्रत्येकं दत्त्वा गौर्यादिमातृभ्योऽर्घ्यं दद्यात्॥ प्रसन्ना मातरः सर्वाः पूजां गृह्णन्तु मामकीम्। अनेन सफलार्घ्येण वरदाः सन्तु मे सदा ॥ १ ॥ इदं फलं मया देवि स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि॥ २॥ रूपं देहि जयं देहि भाग्यं भगवति देहि मे। पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ ३॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः विशेषार्घ्यं समर्प० ॥ ततः प्रार्थयेत् ॥ गणेशपूर्विका देव्यो गौर्यादिप्रमुखाः स्मृताः ॥ प्रसीदन्तु हि कल्याण्यो निर्विघ्नं कुरुताध्वरम् ॥ १ ॥ यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः ॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ २ ॥ रोगानशेषा० ॥ ॐ भूर्भुवःस्वः सगणेशगौर्याद्यावाहितमातृभ्यो नमः प्रार्थनापूर्वकं नमस्कारान्स० ॥ हस्ते जलं गृहीत्वा। अनेन यथाज्ञानेन ध्यानावाहनादिषोडशोपचारैः कृतपूजनेन सगणेशगौर्याद्यावाहितमातरः प्रीयन्तां न मम ॥

॥ इति गौर्यादि चतुर्दशमातॄणां समन्त्रकपूजनप्रयोगः समाप्तः ॥

---

१ (सगणेश) गौर्यादिचतुर्दशमातृकाणां षोडशमातृकाणां च नाममंत्रेण पूजनम्॥

अथवा नाममंत्रेण सगणेशगौर्यादीनामावाहनपूजनं कुर्यात्। यथा–गणेशाय नमः गणेशमावा. स्था. ॥१॥ १ गौर्यै नमः गौरीम् आ. स्था.। २ पद्मायै नमः पद्माम् आ. स्था.। ३ शच्यै नमः शचीम् आ. स्था.। ४ मेधायै नमः मेधाम् आ. स्था.। ५ सावित्र्यै नमः सावित्रीम् आ. स्था.। ६ विजयायै नमः विजयाम् आ. स्था.। ७ जयायै नमः जयाम् आ. स्था। ८ देवसेनायै नमः देवसेनाम् आ. स्था.। ९ स्वधायै नमः स्वधाम् आ. स्था.। १० स्वाहायै नमः स्वाहाम् आ. स्था.। (षोडशमातृकापक्षे–मातृभ्यो नमः मातॄः आ. स्था.। लोकमातृभ्यो नमः लोकमातॄः आ. स्था.–इति ऊहः कार्यः) ११ धृत्यै नमः धृतिम् आ. स्था.। १२ पुष्ट्यै नमः पुष्टिम् आ. स्था.। १३ तुष्ट्यै नमः तुष्टिम् आ. स्था.। १४ आत्मकुलदेवतायै नमः आत्मकुलदेवताम् आ. स्था.।

ॐमनोजूति० ॥ इति प्रतिष्ठाप्य सगणेशगौर्यादिमातृभ्यो नमः आसनं समर्पयामि। पाद्यं. स.। आचमनीयं स.। स्नानं स.। मिलितपञ्चामृतस्नानं स.। शुद्धोदकस्नानं स.। वस्त्रोपवस्त्रे स.। गन्धं स.। अक्षतान् स.। पुष्पाणि स.। सौभाग्यपरिमलद्रव्यं स.। धूपं स.। दीपं स.। नैवेद्यं स.। ताम्बूलं स.। हिरण्यदक्षिणां स.। आरार्तिकं स.। मन्त्रपुष्पाञ्जलिं स.। प्रदक्षिणां स.। विशेषार्घ्यं स.। प्रार्थनापूर्वकं नमस्कारान् स.। अथवा सर्वोपचारार्थे गन्धाक्षतपुष्पाणि स.। संकल्पः–अनेन पूजनेन सगणेशगौर्यादिमातरः प्रीयन्ताम् ॥

## ॥ अथ श्र्यादिसप्तवसोर्धारादेवतापूजनप्रयोगः ॥

अथ गौर्यादिमातॄणां समीपे सन्निहितकुड्यलग्ना दक्षिणाद्युत्तरापवर्गाः पश्चिमादिप्रागपवर्गाः नातिनीचा न चोच्छ्रिताः सगुडेन घृतेन ॐ वसोः॑ पवित्र॑मसि शतधा॑रं वसोः॑ पवित्र॑मसि सहस्र॑धारम् ॥ देवस्त्वा॑ सविता पु॑नातु वसोः॑ पवित्रे॑ण शतधा॑रेण सुप्वा॑—ॐ इति मंत्रेण सप्त वसोर्धाराः कार्याः ॥ ततः ॐ कामधुक्षः॑ ॥ [१] ॥ इति पठित्वोर्ध्वभागे तासामेकीकरणम् ॥

## ॥ अथ श्र्यादिसप्तवसोर्द्धारादेवता(घृतमातृका)नां कोष्टकम् ॥

| सं० | श्र० | पु० | मे० | धृ० | ल० | श्री० |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |

एवं निर्मितासु सप्तधारासु दक्षिणत आरभ्योदक्संस्थं श्र्यादिसप्तवसोर्धाराणामावाहनं कार्यम् । यथा—ॐमन॑सः॒ काम॒माकू॑तिं वा॒चः॑ स॒त्यम॑शीय ॥ प॒शू॒नाᳬरू॒पम॒न्नस्य॒ रसो॒ यशः॒ श्रीः॑ श्र॑यतां॒ मयि॒ स्वाहा॑ ॥ [१] ॥ ॐ भू० श्रियै नमः श्रियम् आ० स्था० ॥ १ ॥ ॐ श्रीश्च॑ ते लक्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒पम॒श्विनौ॒ व्यात्त॑म् ॥ इ॒ष्णन्नि॑षाणा॒मुम्म॑ऽइषाण सर्वलो॒कम्म॑ऽइषाण ॥ [२] ॥ ॐ भू० लक्ष्म्यै नमः लक्ष्मीम् आ० स्था० ॥२॥ ॐ इ॒हर॑ति॒रि॒हर॑मद्ध्व॒मि॒ह धृति॑रि॒ह स्वधृ॑तिः॒ स्वाहा॑ ॥ उ॒प॒सृ॒जन्ध॒रुणं॑ मा॒त्रे ध॒रुणो॑ मा॒तर॒न्धय॑न् ॥ रा॒यस्पोष॑म॒स्मासु॑ दीधर॒त्स्वाहा॑ ॥ [३] ॥ ॐ भू० धृत्यै नमः धृतिम् आ० स्था० ॥३॥ ॐ मे॒धाम्मे॒ वरु॑णो ददातु मे॒धाम॒ग्निः प्र॒जाप॑तिः ॥ मे॒धामिन्द्र॑श्च वा॒युश्च॑ मे॒धान्धा॒ता द॑दातु मे॒ स्वाहा॑ ॥ [४] ॥

१ सर्वैर्गौर्यादिमातॄणां श्र्यादिघृतमातृकाणांचावाहनं कृत्वा सौकर्यार्थमेकतंत्रेण पूजनं क्रियते । परंच रुद्रकल्पद्रुमरुद्रयामलोक्तवचनम्—तत्पुरतः सन्निधाने वा कुड्ये रेखा घृतेन वै ॥ धारालिङ्गेन मंत्रेण सप्तरेखाः समालिखेत् ॥ १ ॥ एकीकृत्योर्ध्वभागे तु रोचनं कुंकुमादिना ॥ प्रतिष्ठा भिन्नत. कार्या पूजनं युगपद्भवेत् ॥ २ ॥ चन्दनं कुंकुमं प्रोक्तं दूर्वापुष्पे यथेच्छया ॥ गुडधूपो भवेद्दीपः सर्पिषा परिकीर्तित. ॥ ३ ॥ नैवेद्यं तु भवेद्भाभ्यां भवेदर्घ्यं यथेच्छया ॥ दशोपचारैः पूर्वोक्तैरर्पदानान्तिके प्रिये ॥४॥ पूजा गौर्यादिमनुभिर्यथाशास्त्रविधानतः ॥ सम्प्रार्थयेत्ततो देवान्मातृधारागणेश्वरान् ॥ इति ॥ तथैव स्मृतिरत्नावलिदानखण्डमदनरत्नढोढुमिश्रप्रयोगरत्ननिबन्धग्रन्थकाराणामपि मातृपूजां समाप्यैव पञ्च सप्त वा वसोर्धाराः कार्या इति वचनानि । अतो मातृपूजां विधायैव घृतमातृकाणामावाहनं दशोपचारैश्च पूजनं कर्तव्यम ॥ तथैवोक्तम् ॥ ये तु पूर्वं वसोर्धारा. कृत्वा मातृः संस्थाप्य मातॄणां वसोर्धाराणाञ्च युगपत्पूजनमाचरन्ति ते उक्तग्रन्थविरुद्धाचारकत्वादुपेक्ष्या एव ॥ अस्माभिस्तु एकतंत्रेण पूजायां सप्तघृतमातॄणां दशोपचारा एव विधीभूता इत्यनुमीयते गौर्यादिमातॄणां घृतमातृकाणां च पूजायां भिन्नोपचारदर्शनात् ॥ अन्यथैकतंत्रेण पूजने न कापि क्षतिः ॥ धारालिङ्गको मन्त्रस्तु ॐवसो. पवित्रमसीति ज्ञेयः ॥

ॐ भूर्भुवःस्वः मेधायै नमः मेधाम् आवाहयामि स्थापयामि ॥ ४ ॥ ॐ देवी जोष्ट्रीसरस्वात्युश्विनेन्द्रमवर्द्धयन् ॥ श्रोत्रन्नकर्ण्णयोर्य्यशोजोष्ट्रीभ्या न्दधुरिन्द्रियंवसुवनैवसुधेयस्यव्यन्तुयज ॥ २१/१ ॥ ॐभू० पुष्ट्यै नमः पुष्टिम् आ० स्था० ॥ ५ ॥ ॐ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्श्रद्धामाप्नोति श्रद्धयासत्यमाप्यते ॥ २०/१ ॥ ॐभू० श्रद्धायै० नमः श्रद्धाम् आ० स्था० ॥ ६ ॥ ॐदेवीस्तिस्रस्तिस्रोदेवीश्पतिमिन्द्रमवर्द्धयन् ॥ अस्पृक्षद्भारतीदिवᳬरुद्रैर्य्यज्ञᳬसर स्वतीडावसुमती गृहान्वसुवनैवसुधेयस्यव्यन्तुयज ॥ २८/१ ॥ ॐ भू० सरस्वत्यै नमः सरस्वतीम् आ० स्था० ॥७॥ ॐमनोजूति० ॥ ३/२ ॥ ॐभू० श्यादिसप्तव सोर्धाराः सुप्रतिष्ठिता वरदा भवत ॥ ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः इत्यनेन दशोपचारैः पूजयेत् ॥[1]

ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । पादयोः पाद्यं समर्पयामि ॥ १ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । हस्तयोरर्घ्यं सम० ॥ २ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । आचमनीयं सम० ॥ ३ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । स्नानं समर्पयामि ॥ ४ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । वस्त्रं समर्पयामि ॥ ५ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । चन्दनार्थे कुंकुमं सम० ॥ ६ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । दूर्वाङ्कुरान्रक्तपुष्पाणि च सम० ॥७॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । गुडधूपं समर्पयामि ॥ ८ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः । घृतदीपं दर्शयामि ॥ ९ ॥
ॐ भू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः। गुडसर्पिर्भ्यां नैवेद्यं निवेदयामि॥१०॥

नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य वामहस्तं पद्माकारं कृत्वा दक्षिणहस्तेन पञ्च प्राणाहुतीर्दद्यात् । ॐ प्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐव्यानाय स्वाहा। ॐउदानाय स्वाहा । ॐसमानाय स्वाहा॥इति नैवेद्यं स०॥विशेषार्घ्यः॥एकस्मिन्पात्रे सजलगन्धाक्षतपुष्पाणि प्रक्षिप्य तदुपरि सहिरण्यं नालिकेरादिकं निधाय अर्घ्यं दद्यात्॥ प्रसन्ना मातरः सर्वाः पूजां गृह्णन्तु मामकीम्॥ अनेन सफलार्घ्येण वरदाः सन्तु सर्वदा॥ॐभू० श्यादिसप्तवसोर्धारादेवताभ्यो नमः विशेषार्घ्यं सम०॥ ततः स्तुतिपाठः । यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः । कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ ब्रह्माणी कमलेन्दुसौम्यवदना माहेश्वरी लीलया कौमारी

१ दानमान्याया दशोपचारा ॥ पाद्यमर्घ्यंचाचमन स्नान वस्त्रनिवेदनम् ॥ गन्धादयो नैवेद्यान्ता उपचारा दश क्रमात् ॥

रिपुदर्पनाशनकरी चक्रायुधा वैष्णवी ॥ वाराही घनघोरघर्घरमुखी चैन्द्री च वज्रायुधा चामुण्डा गणनाथरुद्रसहिता रक्षन्तु नो मातरः ॥ १ ॥

ॐ भू० श्र्यादिसप्तवसोर्धारादेवताभ्यो नमः प्रार्थनापूर्वकं स्तुतिपाठं समर्पयामि॥ हस्ते जलं गृहीत्वा। अनया पूजया श्र्यादिसप्तवसोर्धारादेवताः प्रीयन्तां न मम ॥

॥ इति श्र्यादिसप्तवसोर्धारादेवतापूजनप्रयोगः समाप्तः ॥

---

## ॥ अथाचाराद्वैश्वदेवसङ्कल्पः ॥

अथ वैश्वदेवसङ्कल्पं कुर्यात्। हस्ते जलं गृहीत्वा वैश्वदेवहवनीयं घृततण्डुलसहितं सदक्षिणं पात्रमादाय अस्मिन्गायत्रीपुरश्चरणकर्मणि वैश्वदेवाकरणजनितप्रत्यवायपरिहारार्थं वैश्वदेवकरणजनितफलनिष्पत्त्यर्थम् इदं वैश्वदेवहवनीयद्रव्यम् अमुकगोत्रायामुकनाम्ने ब्राह्मणाय तुभ्यमहं संप्रददे ॥ तेन वैश्वदेवकरणजनितफलनिष्पत्तिरस्तु इति सजलं वैश्वदेवहवनीयद्रव्यपात्रं ब्राह्मणाय दद्यात्॥

अथायुष्यमंत्रजपः ॥ ॐ आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् ॥ इदꣳहिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् ॥ $\frac{५०}{३४}$ ॥ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳह्येतत् ॥ यो बिभर्त्ति दाक्षायणꣳहिरण्यꣳस देवेषु कृणुते दीर्घमायुꣳस मनुष्येषु कृणुते दीर्घमायुः ॥ $\frac{५१}{३४}$ ॥ यदाबध्नन्दाक्षायणा हिरण्यꣳशतानीकाय सुमनस्यमानाः ॥ तन्म आबध्नामि शतशारदायायुष्मान्जरदष्टिर्यथासम् ॥ $\frac{५२}{३४}$ ॥ आयुष्यं आयुष्यं आयुष्यम्—॥ इति आयुष्यमंत्रजपः ॥

---

॥ १ अथ श्र्यादिसप्तवसोर्द्धारादेवतानां ( घृतमातृकाणां ) नाममंत्रेण पूजनम् ॥

१ श्रियै नमः श्रियमा. स्था.। २ लक्ष्म्यै नमः लक्ष्मीमा. स्था.। ३ धृत्यै नमः धृतिमा. स्था.। ४ मेधायै नमः मेधामा. स्था.। ५ पुष्ट्यै नमः पुष्टिमा. स्था.। ६ श्रद्धायै नमः श्रद्धामा. स्था.। सरस्वत्यै नमः सरस्वतीमा. स्था.॥ ॐमनोजूतिः— इति प्रतिष्ठाप्य। श्र्यादिसप्तवसोर्द्धारादेवताभ्यो नमः। पाद्यं स.। अर्घ्यं स.। आचमनीयं स.। स्नानं स.। वस्त्रं स.। कुंकुमं स.। दूर्वाङ्कुररक्तपुष्पाणि स.। गुडधूपं स.। घृत दीपं स.। नैवेद्यं स.। विशेषार्घ्यं स.। स्तुतिपाठं स,। अनेन पूजनेन श्र्यादिसप्तवसोर्द्धारादेवताः प्रीयन्ताम् ॥ अत्र केचित्पर शुरामकारिकायाः 'श्रीश्च लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती॥ इति वसोर्द्धारादेवताप्रामाण्येन पुष्टिश्रद्धयोः स्थाने स्वाहाप्रज्ञयोरावाहनादिकं कुर्वन्ति तद्यथाचारं कर्तव्यम् ॥ केचित्सप्तस्थाने श्रीलक्ष्मीधृतिमेधासरस्वत्य इति पञ्च वसोर्द्धाराः कुर्वन्ति तत्रापि देशाचारतो व्यवस्था ज्ञेया ॥

२ पूर्वाह्णे निर्णेजनान्तपञ्चमहायज्ञातकृतनित्यक्रियो यजमानः सपत्नीकः करिष्यमाणकर्मणः सङ्कल्पमाचरेत् ॥ इति सर्वेषां शास्त्रसंमतत्वादत्र न वैश्वदेवसङ्कल्पावसरः प्राप्तिश्च ॥ परञ्च–अविघ्नो मंडपश्चैव मातृणां पूजनं सकृत् ॥ वैश्वदेवं वसोर्धारा नान्दीश्राद्धमतः परम् ॥ इति वचनात् केचन शिष्टा वैश्वदेवसङ्कल्पानन्तरमेव वसोर्धारा कुर्वन्ति ॥ परञ्च ते सर्वे भ्रान्ता एवेत्यत्र न संशयः ॥ अविघ्नो मंडपश्चैवेति श्लोकस्य मूलमेव कुत्रापि नोपलभ्यते। अतोऽपि वैश्वदेवसङ्कल्पस्यावश्यकता एव नास्ति ॥ परञ्चाधुना प्रायः सर्वत्र वैश्वदेवस्य बहुषु गृहेषु लोप एव दृश्यते। अतो यज्ञादिप्रारंभात्प्राक् वैश्वदेवं कारयित्वैव यज्ञस्य प्रारंभो युक्ततर इति मत्वा शिष्टाचारकृते वैश्वदेवसङ्कल्पे न दोषः इत्यपि सर्वैर्मन्यते। सर्वत्र वैश्वदेवसङ्कल्पस्य अनुष्ठानात् ॥

## ॥ अथ साङ्कल्पिकनान्दीश्राद्धप्रयोगः ॥

### नान्दीश्राद्धे कुशबटूनां यजमानस्य चोपवेशनार्थं मंडलम् ॥




एतेषां पूजनमपि पूर्वत आरभ्य पश्चिमदिगन्तं कार्यम् ।
तत्र प्रमाणानि टिप्पण्यां द्रष्टव्यानि ॥

अथ नान्दीश्राद्धकर्ता यजमानः प्राङ्मुखः प्रागग्रेषु दर्भेषु प्रागुपक्रमान्पश्चिमापवर्गान् उदङ्मुखान् विश्वेदेवास्थाने द्वौ सपत्नीकपित्रादिस्थाने द्वौ सपत्नीकमातामहादिस्थाने द्वौ एवं षट् कुशबटून्दूर्वाकाण्डानि वा संस्थाप्य यज्ञोपवीती पातितदक्षिणजानुः यवान् गृहीत्वा क्षणदानं कुर्यात् ॥ यथा हस्ते यवान्

---

१ अथ नान्दीश्राद्धं यत्किञ्चिद्वक्ष्यामः ॥ अथ नान्दीश्राद्धं कुत्र कर्तव्यं कथं कर्तव्यं केन क्रमेण च कर्तव्यमित्यादिविषये यत्किञ्चिदुद्धृत्य लिख्यते ॥ विष्णुपुराणे पराशरः-कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ॥ नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ १ ॥ सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ॥ नान्दीमुखान्पितृगणांस्तर्पयेत्प्रयतो गृही ॥ २ ॥ तथैव ब्रह्माण्डपुराणेऽपि-कर्मण्यथाभ्युदयिके माङ्गल्ये चातिशोभने ॥ जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥ १ ॥ पितॄन्नान्दीमुखानेव तर्पयेद्विधिपूर्वकम् ॥ आभ्युदयिके इति पदेन यत्र यत्र स्वात्मनोऽभ्युदयार्थं कर्म क्रियते तस्मिन्नपि नान्दीश्राद्धं विधेयम् ॥ ब्राह्मेऽपि-वेदव्रतेषु चाधाने महापुंसवनेषु च । नवान्नभोजने स्नाने [illegible]ऊढाया प्रथमर्तवे ॥ १ ॥ देवारामतडागादिप्रतिष्ठाद्युत्सवेषु च । राज्याभिषेकबालान्नभोजने षट्सहस्रकान् ॥ २ ॥ वनस्थायाश्रमं गच्छन् पूर्वेद्यु सद्य एव वा ॥ पितॄन्पूर्वोक्तविधिना तर्पयेत् कर्मसिद्धये ॥ ३ ॥ तथैव कालादर्शेऽपि-सीमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञतनयोत्पत्तिप्रतिष्ठासु च ॥ पुंसवनगृहप्रवेशनसुतस्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषेक-

गृहीत्वा ( विश्वेदेवस्थानीयौ द्वौ कुशवटू संस्पृश्य । ) ॐ नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवा अद्य गायत्रीपुरश्चरणकर्माङ्गतया क्रियमाणे साङ्कल्पिकनान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम् ॥ तथा प्राप्नुतां भवन्तौ ॥ प्राप्नवाव ॥ पुनर्यवान् गृहीत्वा । ( पितृस्थानीयौ द्वौ कुशवटू संस्पृश्य । ) गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः अद्य गायत्रीपुरश्चरणकर्माङ्गतया क्रियमाणे नान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम् ॥ तथा प्राप्नुतां भवन्तौ ॥ प्राप्नवाव ॥ पुनर्यवान्गृहीत्वा ( पूर्ववन्मातामहादिस्थानीयौ द्वौ कुशवटू संस्पृश्य ) द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः अद्य गायत्रीपुरश्चरणकर्माङ्गतया क्रियमाणे नान्दीश्राद्धे भवद्भ्यां क्षणः क्रियताम् ॥ तथा प्राप्नुतां भवन्तौ॥ प्राप्नवाव ॥ ततः पाद्यम् ॥ नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ सङ्कल्पः । हस्ते जलमादाय । अत्राद्येत्यादि० शुभपुण्यतिथौ करिष्यमाणगायत्रीपुरश्चरणकर्माङ्गतया सत्यवसुसंज्ञकविश्वदेवपूर्वकं साङ्कल्पिकेन विधिना नान्दीश्राद्धं करिष्ये ॥ आसनदानम् ॥ नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः इदं वः आसनम् । सुखासनम् ॥ गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वः आसनम् । सुखासनम् ॥ द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः इदं वः आसनम् । सुखा-

---

दयितार्थौ च नान्दीमुखम् ॥ १ ॥ इत्याद्यनेकवाक्यैराभ्युदयिकेषु यज्ञादिष्वपि नान्दीश्राद्धं कर्तव्यमित्यवगम्यते ॥ तत् नान्दीश्राद्धं नवदैवत्यं षड्दैवत्यं सपिण्डकं पिण्डरहितं–साङ्कल्पिकञ्चेत्यनेकविधं दृश्यते । परञ्च तत् वाजसनेयिभिः षड्दैवतं कार्यम् ॥ तदर्थं छन्दोगपरिशिष्टे कात्यायनः–पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां नान्दीश्राद्धं पार्वणद्वयेनैव विधेयं न तु पार्वणत्रयेण ॥ तस्मान्नहि मातृपितामहीप्रपितामहीनामित्यूहं कृत्वा मातृश्राद्धं पितुः श्राद्धात्पृथक् कदापि करणीयम् ॥ न योषिद्भ्यः पृथग् दद्यादवसानदिनादृते ॥ स्वभर्तृपिण्डदानाच्च तृप्तिरासां यतः स्मृता । इति कात्यायनवचनात् ॥ तथैव नान्दीश्राद्धे सर्वेऽप्युपचाराः प्रदक्षिणक्रमेणैव यज्ञोपवीतिना देयाः ॥ तथा कात्यायनसूत्रे–आभ्युदयिके श्राद्धे प्रदक्षिणमुपचारः पूर्वाह्णे इति प्रकृत्य । नान्दीमुखाः पितृपितामहप्रपितामहा मातामहप्रमातामहवृद्धप्रमातामहाश्च प्रीयन्ताम्–इत्यादिप्रमाणभूतवचनान्युक्तानि ॥ अतः षड्दैवतमेव नान्दीश्राद्धं सर्वथा विधेयम् ॥ तथैव छन्दोगपरिशिष्टे कात्यायनः–आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥ षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत् ॥ ननु–मातृश्राद्धं तु पूर्वं स्यात्पितृश्राद्धमनन्तरम् ॥ ततो मातामहानाञ्च वृद्धौ श्राद्धं त्रयं स्मृतम् ॥ इति स्मृत्यन्तरवचनप्रामाण्यात् तथैव–अन्वष्टकासु वृद्धौ च गयायां च मृतेऽहनि ॥ मातुः श्राद्धं पृथक् कुर्यादन्यत्र पतिना सह । इति वचनाच्च नान्दीश्राद्धे मातृश्राद्धं पृथगेवाचरणीयं युक्ततरमिति चेन्न ॥ पूर्वोक्तकात्यायनसूत्रस्य–नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीका इत्यादिवचनैः सह । षड्भ्यः पितृभ्यः ।

सनम् ॥ ततो गन्धादिदानम् ॥ नान्दीमुखाः सत्यवसुसंज्ञकाः विश्वेदेवाः इदं वो यथादत्तं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः इदं वो यथादत्तं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः इदं वो यथादत्तं गन्धाद्यर्चनं स्वाहा संपद्यतां वृद्धिः ॥ ततो भोजननिष्क्रयद्रव्यदानम् ॥ नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः युग्मब्राह्मणभोजनपर्याप्तमन्नं वा तन्निष्क्रयीभूतं किञ्चिद्धिरण्यम् अमृतरूपेण वः स्वाहा संपद्यतां वृद्धिः॥ गोत्रा नान्दीमुखाः पितृपितामहप्रपितामहाः सपत्नीकाः युग्मब्राह्मणभोजनपर्या-

प्रागग्रेष्वथ दर्भेषु इत्यादिभिश्च विरोधापत्ते ॥ अतो मातृश्राद्धस्य पृथक् वचनानि शाखान्तरविषयाण्येव ज्ञेयानि ॥ अतो नहि वाजसनेयिना मातृश्राद्धेन पार्वणत्रय कालत्रयेऽपि विधीयते ॥ तथैव कोकिलमतानुसारिभिरपि षड्दैवतमेव नान्दीश्राद्ध कर्तव्यम् । तेषा तु पितृपितामहप्रपितामहा मातृमातामहप्रमातामहा इति मातामहश्राद्ध मातृपूर्वक एव ऊह इति विशेष ॥

अथ पितु सत्त्वे पुत्रेण क्रियमाणे नान्दीश्राद्धे पितु पितृपितामहप्रपितामहा पितु मातामहप्रमातामह वृद्धप्रमातामहा इत्यूह कृत्वा नान्दीश्राद्ध विधेयम् ॥ तथैव कल्पद्रुमेऽपि–जीवत्पितृकादिस्तु पितु पित्रादीन्मातामहादींश्चोद्दिश्याभ्युदयिक कुर्यादिति वचनम् ॥ तथैव जीवत्पितृकादीना नान्दीश्राद्धे अधिकारोऽपि छन्दोगपरिशिष्टे कात्यायनवचनादेव प्राप्यते ॥ यथा–वृद्धौ तीर्थ च सन्न्यस्ते ताते च पतिते सति ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्सुत स्वयम् ॥ पितुर्मातामहादीनां सत्त्वे तु मातामहश्राद्ध न कर्तव्यम् ॥ तस्य द्वारलोपात् ॥ पितुरुभयो सत्त्वे तु नान्दीश्राद्धस्य लोप एव ॥ तदुक्तम् ॥ पितृवर्गे मातृवर्गे तथा मातामहस्य च ॥ जीवेत्तु यदि वर्गाद्यस्त वर्गं परिवर्जयेत् ॥ पितरि मृते पितामहसत्त्वे नान्दीश्राद्ध पितामहपितुरुद्देशेनैव तथा मातामहे मृते प्रमातामहसत्त्वेऽपि प्रमातामहपितुरुद्देशेन नान्दीश्राद्ध कर्तव्य परन्त्वस्मिन्विषये कल्पद्रुमेऽतीव स्पष्टतर शास्त्रार्थ स तु ततोऽवगन्तव्य ॥ स्वपुत्रस्य संस्कारकर्मण्यपि जीवत्पितृकेन पितु पित्रादिमातामहाद्युद्देशेनैव नान्दीश्राद्ध कर्तव्यम् ।

आभ्युदयिके श्राद्धे श्राद्धकर्तु दिङ्नियमादिक सव्यापसव्यादिकञ्च कल्पद्रुमे उक्तम् ॥ तत्राभ्युदयिके प्रदक्षिणोपचार । तेन सर्वं देववदनुष्ठान कर्तव्यमित्यवगम्यते ॥ तथैव हेमाद्रौ शातातप । कर्तव्य चाभ्युदयिक श्राद्धमभ्युदयार्थिना । सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥१॥ पितृणा रूपमास्थाय देवा अन्न समश्नुते ॥ तस्मात्सव्येन दातव्य वृद्धिश्राद्धे तु नित्यश ॥२॥ यथैवोपचरेद्देवाँस्तथा वृद्धौ पितॄनपि ॥३॥ कात्यायनछन्दोगपरिशिष्टे–दक्षिण पातयेज्जानु देवान्परिचरन्सदा । इतरत्पातयेज्जानु पितॄन् परिचरन्नपि ॥ १ ॥ निपातो नहि सव्यस्य विद्यते जानुन क्वचित् ॥ सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥ २ ॥ इत्यादिवाक्यैरुपवीतिना पातित दक्षिणजानुना च वृद्धिश्राद्धे देववत्पितॄणां पूजन कार्यम् ॥ प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ॥ अपः क्षिप मूलदेशेऽवनेनिक्ष्वेति निखिलाः ॥ तथैव सङ्कल्पश्राद्धे । अर्घ्यावाहनाग्नौकरणपिण्डस्वधावाचनानि वर्जयेत् ॥ अत्रार्घपदेन हस्तार्घो निषिद्ध पादार्घस्तु भवत्येवेत्यपरे ॥ अत्रापि महद्विवाद ॥ सोऽपि ततोऽवगन्तव्य ॥ सङ्कल्पश्राद्धेऽपि ब्राह्मणवत् आसनेषु कुशवटूनुपवेश्य क्षणदानादि कुर्यात् ॥ दर्भवटूनां स्थापनम्–स्वय श्राद्धकर्ता प्राङ्मुखश्चेत् कुशवटून् उदङ्मुखान् स्थापयित्वा स्वयमुदङ्मुखश्चेत् प्राङ्मुखान् स्थापयित्वा क्षणदानादिक सर्वं कुर्यात् । अथवा दैवे पित्र्ये च ये विप्रास्तेषां सर्वेषां प्राङ्मुखानामुपवेशनम् इत्यपि द्वितीय पक्ष । परन्तु पूर्वपक्ष एव वाजसनेयिभि कात्यायनसमतत्वादङ्गीकार्य । तथैव कुशवटून्निधाय नान्दीश्राद्धमाचरेत् ॥ वचनाधुनिकास्तु पूर्वोक्त दिङ्नियमादि सपिण्डकनान्दीश्राद्धे एव न साङ्कल्पिकनान्दीश्राद्धे इति वदन्ति परन्तु पिण्डरहिते श्राद्धे पूर्वोक्तार्घावाहनादीनां निषेधवत् एतेषां कुत्रापि निषेधस्याश्रवणादनुपपत्त्वा

समन्नं वा तन्निष्क्रयीभूतं किञ्चिद्धिरण्यम् अमृतरूपेण वः स्वाहा संपद्यतां वृद्धिः ॥ द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः युग्मब्राह्मणभोजनपर्याप्तमन्नं वा तन्निष्क्रयीभूतं किञ्चिद्धिरण्यम् अमृतरूपेण वः स्वाहा संपद्यतां वृद्धिः ॥ सक्षीरयवमुदकदानम् ॥ नान्दीमुखाः सत्यवसुसंज्ञका विश्वेदेवाः प्रीयन्ताम् । गोत्रा नान्दीमुखा पितृपितामहप्रपितामहाः सपत्नीकाः प्रीयन्ताम् ॥ द्वितीयगोत्रा नान्दीमुखा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः प्रीयन्ताम् ॥ आशिषां ग्रहणम् ॥ गोत्रं नोऽभिवर्द्धताम् । अभिवर्द्धतां वो गोत्रम् ॥ दातारो नोऽभिवर्द्धन्ताम् । अभिवर्द्धन्तां वो दातारः ॥ सन्ततिर्नोऽभिवर्द्धताम् । अभिवर्द्धतां वः सन्ततिः ॥ श्रद्धा च नो मा व्यगमत् । मा

---

तथैव हेमाद्रौ मार्कण्डेयपुराणे—उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ॥ वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचन । इति वचनाच्च ॥ तेषां वचनं नोपादेयमेवेत्यस्माकं प्रतिभाति तथापि विद्वद्भ्यो यद्रोचते तदेव शास्त्रसंमतं कर्तव्यं नाशास्त्रीयमितिदिक् ॥ अपि च आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाश्चेति आश्वलायनसूत्रवचनात्कुशबटू वैश्वदेविकेऽपि द्वौ पितृस्थाने द्वौ कुशबटू मातामहस्थाने द्वौ कुशबटू एवं षट् कुशबटून्स्थापयित्वैव द्वाभ्यां द्वाभ्यां सहैव क्षणदानादि सर्वम् उपचारादिकम् आसमाप्ति दद्यात् इति ग्रन्थकर्तुराशयः । परञ्चाधुनिकैस्तु एकस्मिन्पात्रे एकतन्त्रेण षड्भ्यः स्थाने त्रीन्कुशबटून्स्थापयित्वा यजमानमपि प्राङ्मुखमेवोपवेश्य क्षणदानं विना स्वदक्षिणतः उदक्संस्थं प्रथमकुशबटौ विश्वेभ्यो देवेभ्यः, तदुत्तरे द्वितीयकुशबटौ पितृभ्यः, तदुत्तरे तृतीयकुशबटौ मातामहादिभ्यश्च पाद्यं दत्वा सर्वं क्रियते । परञ्च तत्सर्वं कात्यायनादिवचनविरोधान्मन्दतरम् ॥ तेषां तदेककुशबटुस्थापनं याज्ञवल्क्याद्युक्तं दृश्यते । तथापि कात्यायनाद्युक्तोत्तरग्रन्थेन सह विरोधोऽपि स्पष्टतर एव ॥ तद्यथा "आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्यः उदङ्मुख उदङ्मुखेभ्यः प्राङ्मुखो वा दद्यात् । द्वौ द्वौ पवित्रे इति । तथैव प्रदक्षिणोपचारताविधानात्तदनुमहाय ब्राह्मणपङ्क्तिनिवेशोऽपि प्रागुपक्रमं पश्चादपवर्गश्चेति मातामहप्रभृतींस्तु पितृतो वामतो न्यसेत् इत्यादि वचनानि । वस्तुतस्तु कात्यायनसमता नान्दीश्राद्धस्येतिकर्तव्यताऽस्माभिः प्रदर्श्यते ।

१—द्वौ कुशबटू वैश्वदेविकौ
२ ,, सपत्नीकपितृकौ
३ ,, सपत्नीकमातामहकौ

} नान्दीश्राद्धकर्ता स्वयं प्राङ्मुखः सन् स्वसमीपे स्थापिते पात्रे प्रागुपक्रमान्पश्चिमापवर्गान् षट् कुशबटून् संस्थाप्य प्रागुपक्रमं पश्चिमापवर्गं विश्वान्देवान् पूर्वं क्षणं दत्वा तद्वामे पितॄन् तद्वामे मातामहादीनपि क्षणं दत्वा तत्तत्क्रमेणोपचारान्ददन् पाद्यादि सर्वमासमाप्ति नान्दीश्राद्धं कुर्यात् ॥ अत्र ब्राह्मणाभावे कुशबटवो ब्राह्मणस्वरूपा ज्ञेया ॥

सपिण्डकनान्दीश्राद्धाभावे साङ्कल्पिकमेव नान्दीश्राद्धं कर्तव्यमित्यत्रापि वक्ष्यते । स्मृतिरत्नावल्यां स्मृत्यन्तरे च—विवाहमौञ्जीबन्धोर्ध्वं वर्षार्द्धं वर्षमेव वा । पिण्डान्सपिण्डा नो दद्युः सपिण्डीकरणं विना ॥ १ ॥ तथैव—विवाहव्रतचूडासु वर्षमर्द्धं तदर्धकम् ॥ पिण्डदानं न कर्तव्यं ज्ञातीनामृद्धिमिच्छता ॥ २ ॥ वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया । इति कार्ष्णाजिनी अपि ॥ पुनस्तथैव—वृद्धौ तु पिण्डान्निर्वाप्य पुनः पिण्डान्ददाति यः ॥ गोत्रवृद्धिविघाती स्यान्नरकं प्रतिपद्यते । इत्यपि स्मृतिरत्नावल्यां द्वितीयमपि वचनम् ॥ परञ्च बृहस्पतिस्तु—महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि । कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥ स्मृतिरत्नावल्यामपि—पित्रोः क्षयाहे यज्ञे च पितृयज्ञे महालये ॥ गयायां पिण्डदानस्य न कदाचिन्निराक्रिया ॥ पुनर्बृहस्पतिः दिवोदासीये—तीर्थे संवत्सरे प्रेते पितृयागे महालये ॥ पिण्डदानं प्रकुर्वीत युगादिभरणीमघा ॥ पिण्डैर्विना नहि श्राद्धमपवादादृते क्वचित् ॥ इति वचनाच्च पिण्डदाननिषेधापवादवचनप्रामाण्याभावाच्चहि पिण्डरहितं नान्दीश्राद्ध-

व्यगमद् यः श्रद्धा ॥ अन्नं च नो बहु भवेत् । भवतु वो बह्वन्नम् ॥ बहुदेयं च नोऽस्तु । अस्तु वो बहुदेयम् ॥ अतिथींश्च लभेमहि । लभन्तां वोऽतिथयः ॥ याचितारश्च नः सन्तु । सन्तु वो याचितारः ॥ एता आशिषः सत्याः सन्तु । सन्त्वेता आशिषः सत्याः ॥ दक्षिणासङ्कल्पः । नान्दीमुखेभ्यः सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थम् इमां द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ गोत्रेभ्यो नान्दीमुखेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थम् इमां द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ द्वितीयगोत्रेभ्यो नान्दीमुखेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थम् इमां द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ करसंपुटौ कृत्वा । 'नान्दीश्राद्धं संपन्नम्' इति ब्राह्मणान्प्रार्थयेत् ॥ 'सुसंपन्नम्' इति ब्राह्मणाः प्रतिवदेयुः ॥ ततो विसर्जनम् ॥ ॐ वाजेवाजेवतवाजिनो नोधनेषु विप्राऽअमृताऽऋतज्ञाः ॥ अस्य मध्वः पिबत मादयध्वन्तृप्तायात पथिभिर्देवयानैः ॥ १८ ॥ अनुव्रज्य ॥ ॐ आमावाजस्य प्रसवो जग-

मन्यच्छ्राद्धं च कर्तव्यमित्यपि ध्वन्यते ॥ वर्षमर्द्धं तदर्द्धं च नेत्याहुस्तिलतर्पणम् । पिशाचमन्यथा तत्स्याद्विधिहीने कृते सति ॥ मरीचिस्तु तर्पणेऽपि तिलनिषेधो वक्ति-विवाहे चोपनयने चौले सति यथाक्रमम् ॥ वर्षमर्द्धं तदर्द्धं च नेत्याहुस्तिलतर्पणम् ॥ स्मृत्यर्थसारेऽपि-वृद्धौ सत्यां च तन्मासि नेत्याहुस्तिलतर्पणम् ॥ गार्ग्योऽपि-भानौ भौमत्रयोदश्यां नन्दाभृगुमघासु च । पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ मरीचिरपि-सप्तम्यां रविवारे च ग्रहे जन्मदिने तथा ॥ भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम् ॥ काशीखण्डेऽपि-रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि सन्ध्ययोः ॥ श्रेयोर्थी ब्राह्मणो जातु न कुर्यात्तिलतर्पणम् ॥ अस्माकन्तु पिंडतिलनिषेधप्रतिप्रसवपूर्वोक्तिपर्यालोचनेन प्रेतोद्देशेन क्रियमाणं सपिंडीकरणान्तं श्राद्धं प्रेतश्राद्धं, पित्रोः क्षयाहश्राद्धं, यज्ञे नान्दीश्राद्धं, पितृयज्ञे ( सोमयागे ) चातुर्मास्यान्तर्गतपित्र्येष्ट्या पितृश्राद्धं, महालयश्राद्धं, क्षयाहश्राद्धं, गयायामपि क्रियमाणं गयाश्राद्धम् इत्यादि श्राद्धानि कृतविवाहमौञ्ज्यपि स्वकालप्राप्तानि स्ववश्यमेव कुर्यादित्येवार्थनिष्कर्षः प्रतिभाति ॥ एवञ्च वर्षं तदर्धं तन्मासि वेत्यादि तिलतर्पणनिषेधस्य प्रतिप्रसववचनस्यानुपलभ्यत्वात् मौञ्जीविवाहयोः पित्राद्युद्देशेन कृतसपिंडनान्दीश्राद्ध एव तिलतर्पणं न कुर्यात् श्राद्धादौ न दोष इत्येवान्तिमार्थः ॥ परञ्च तान्यपि तिलतर्पणनिषेधवचनानि वाजसनेयिभिन्नशाखापराण्येव ज्ञेयानि । तेषां तु ततोऽपसव्यं तिलमिश्रमिति कात्यायनस्नानसूत्रे तिलमिश्रमित्यनेनैव तिलप्राप्तौ एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीनिति सूत्रे पुनस्तद्ग्रहणसामर्थ्यात्स्मृत्युक्तप्रतिषिद्धदिनेऽपि तिलनिवृत्तिर्माभूदित्येतदर्थमिति हरनाथादिभिः हरिहरादिभिश्च व्याख्यातत्वात् ॥ कठाः कण्वाश्च जाबाला ये च वाजसनेयिनः ॥ सतिलं तर्पणं कुर्युर्निषिद्धेषु दिनेष्वपि-इति मरीचेरपि वचनाच्च । स्कन्दपुराणे तु-यदि कुर्यात्ततः कुर्याच्छुक्लैरेव तिलैः कृती । इति शुक्लतिलैरेव तिलतर्पणं न कृष्णतिलैः ॥ इत्युक्तम् । इति ॥ अतः प्रकृतमनुसराम ॥ पूर्वोक्तवचनैर्दधिबदराक्षतमिश्राः पिंडा इति सूत्रेण च इदमेवावगम्यते यत् कात्यायनानां सपिंडकमेव नान्दीश्राद्धं न साङ्कल्पिकं नान्दीश्राद्धम् ॥ तथापि हेमाद्रौ त्रिशन्मतवचनानुरोधात्-धनमिश्रो यदा विप्र उच्छिन्नाभिरथापि वा । तदा वृद्धिषु सर्वासु सङ्कल्पश्राद्धमाचरेत् ॥ पिंडनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य हि ॥ इति भविष्यवचनान्नान्दीश्राद्धमपि सपिण्डकं विहर-

म्म्यादेमेद्यावापृथिवी विश्वरूपे ॥ आमागन्ताम्पितरा मातरा चामा सोमोऽअमृतत्त्वेन गम्यात् ॥ १९ ॥ हस्ते जलं गृहीत्वा। मया कृतेऽस्मिन्नान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीनान्दीमुखप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः ॥ पुनर्जलं गृहीत्वा । अनेन साङ्कल्पिकेन विधिना नान्दीश्राद्धकर्मणा कृतेन नान्दीमुखाः पितरः प्रीयन्ताम् ॥

॥ इति साङ्कल्पिकनान्दीश्राद्धप्रयोगः समाप्तः ॥

## ॥ अथ आचार्याद्यृत्विग्वरणप्रयोगः ॥

तत आचार्याद्यृत्विजां वरणार्थमेकस्मिन्पात्रे आपः[1] क्षीरमित्याद्यष्टद्रव्याण्येकीकृत्य तत्राचारात्फलं हिरण्यञ्च प्रक्षिप्य द्वितीयेन पात्रेण तत्पात्रं पिधाय

---

हितश्च श्रायते । अतो यो नान्दीश्राद्धे पिण्डदानं कर्तुं नेच्छति तेन पिण्डरहितं साङ्कल्पिकं नान्दीश्राद्धमेवाचरणीयम् । तद्यथा । पात्रे भोज्यस्य चान्नस्य त्यागः संकल्प उच्यते । तत्प्रयुक्तो विधिर्यस्तु यत्तेन व्यपदिश्यते । तावन्मात्रेण संबन्धश्राद्धं सांकल्पमुच्यते ॥ इति हेमाद्रौ संवर्तवचनाच्च कात्यायनादिभिः सपिंडकनान्दीश्राद्धाभावे साङ्कल्पिकं नान्दीश्राद्धमेवाचरणीयमिति युक्तम्। तत्र च अर्घावाहनाग्नौकरणपिंडस्वधावाचनानि न विधेयान्यन्यत्सर्वं संपिडकनान्दीश्राद्धवत् । नान्दीश्राद्धं स्वधाशब्दशर्मवर्मपित्र्यभिधानादिरहितं कर्तव्यम् ॥ न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥ न तिलैर्नापसव्येन पित्र्यमंत्रविवर्जितम् ॥ असच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ॥ इति पुराणसमुच्चयाच्च ॥ तथैव संग्रहेऽपि-अनसद्वृद्धशब्दानामरूपाणामगोत्राणाम् ॥ संबन्धाद्युच्चारणेऽपि विशेषक्रमः श्राद्धकाशिकायाम्-संबन्धं प्रथमं ब्रूयान्नामगोत्रमतः परम् ॥ रूपं ततो विजानीयादेष धर्मः सनातनः ॥ तथैव-आसने चार्घदाने च पिंडदानेऽवनेजने । संबन्धनामगोत्राणि यथार्हमनुकीर्तयेत्। इति बृहस्पतिः ॥ नान्दीश्राद्धे रूपं ततो विजानीयादिति वचनात् स्वधाशर्मवर्मनामाद्युच्चारणप्रतिषेधेऽपि रूपवाचकस्य नान्दीमुखशब्दस्य संबन्धं प्रथमम् इति श्राद्धकाशिकावचनात्संबन्धाद्युच्चारणानन्तरं क्रमशः प्राप्तोच्चारणत्वेऽपि नान्दीमुखान्पितॄनावाहयिष्ये इत्यादौ नान्दीमुखशब्दस्य पितृशब्दात्पूर्वं समाम्नातत्वात्सर्वत्र नान्दीमुखशब्दः पितृशब्दात्प्रागेव योज्यः ॥ हेमाद्रिरपि यत्र यत्र पितृपदप्रयोगस्तत्र तत्र नान्दीमुखपदं पूर्वं प्रयोज्यम् ॥ अतो 'गोत्राणां नान्दीमुखाना पितृपितामहप्रपितामहानां सपत्नीकानां करिष्यमाणामुककर्माङ्गाभ्युदयिकश्राद्धे भवद्भ्या क्षणः क्रियताम्' इत्याकारकं मातामहादीनामुच्चारेऽपि ब्रूयात् ॥

नान्दीश्राद्धे अनसद्वृद्धशब्दानामरूपाणामगोत्रिणाम् इति संग्रहवाक्यात् शर्मवर्मासच्छब्दगोत्रनाम्नामुच्चारणं न कर्तव्यम्। ननु श्राद्धकाशिकायाम्-संबन्धं प्रथमं ब्रूयान्नामगोत्रमतःपरम् ॥ रूपं ततो विजानीयादेष धर्मः सनातनः ॥ तथैव बृहस्पतिः—आसने चार्घदाने च पिण्डदानेऽवनेजने । संबन्धनामगोत्राणि यथार्हमनुकीर्तयेत् ॥ तथैव व्यासोऽपि-गोत्रसंबन्धनामानि पितॄणामनुकीर्तयन्। एकैकस्य तु विप्रस्य ह्यर्घपात्रं विनिःक्षिपेत्। इत्यादिवचनैः नान्दीश्राद्धेऽपि गोत्रसंबन्धनामोच्चारणमवश्यमेवेति चेन्न। नान्दीश्राद्धे पितॄणां देवरूपत्वेन तत्प्रतिषेधात्॥ तथा च स्मृतिः-पितॄणा रूपमास्थाय देवा अन्नं अदन्ति वै । तस्मात् सव्येन दातव्यमृद्धिपूर्तेषु दातृभिः ॥ तथैव हेमाद्रौ विष्णुधर्मोत्तरेऽपि-वृद्धौ समर्चयेद्विद्वानखिलं नान्दीमुखान्पितॄन्। संपादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥ तथैव आश्वलायनगृह्यकारिकायाम्-संबन्धनामरूपाणि वर्जयेदत्र कर्मणि ॥ इति वचनादपि नात्र संबन्धनामरूपाणां कथनं संबन्धादीनामुच्चारणस्य स्पष्टतयाऽनभिहितत्वाच्चेति दिक् ॥

[1] आपः क्षीरं कुशाग्राणि दधिचन्दनमक्षताः । दूर्वाः सिद्धार्थकाश्चेति ह्यष्टाङ्गो ह्यर्घ उच्यते ॥ तथैव-दधि दुग्धं यवा दूर्वा गन्धाः सिद्धार्थसंयुताः ॥ जलपुष्पधनायुक्ताः पादार्घे एभिरष्टभिः ॥

रक्तसूत्रेणावेष्ट्य सपत्नीको यजमानः उदङ्मुखो भूत्वा प्राङ्मुखैराचार्यादिभिर्दत्तं तदर्घपात्रं गृहीत्वोत्थायोदङ्मुख एव तिष्ठेत् ॥ ततः सर्वे आचार्यादृत्विज आशुः शिशान इति द्वादशर्चमप्रतिरथसूक्तम् आनोभद्रा इत्यनुवाकं द्यौः शान्तिरिति कण्डिकां वा जपेयुः ॥ तत उदङ्मुखो यजमानः प्राङ्मुखोपविष्टान्ब्राह्मणान्प्रार्थयेत् ॥ (सुमुहूर्तादि कर्तव्यं शोभने मण्डपे द्विजैः ॥ शान्तिपाठोऽर्घदानं च पृच्छापूर्वं समाचरेत् ॥) ॐ आदित्याद्या ग्रहाः सर्वे राहुकेतुपुरःसराः ॥ ग्रहदेवाधिदेवैश्च नक्षत्राणां च दैवतैः ॥ १ ॥ इन्द्रादिभिश्च दिक्पालैर्ब्रह्मविष्णुमहेश्वरैः ॥ वास्तुदुर्गागणेशैश्च क्षेत्रपालादिसंयुतैः ॥ २ ॥ भूम्यान्तरिक्षदेवैश्च कुलदेवैश्च मातृभिः॥ चतुर्भिश्चैव वेदैश्च रुद्रेण सहितैस्तथा ॥ ३ ॥ सागरा द्वीपपातालान्यूर्ध्वलोकसुरैः सह ॥ पर्वता ऋषयः सर्वे गंगाद्याः सरितो द्रुमाः ॥ ४ ॥ मन्त्राधिष्ठितदेवैश्च ब्रह्मन्नाचार्य ऋत्विजः ॥ आयुरारोग्यपुत्रादिसुखश्रीप्राप्तये मम ॥ ५ ॥ आपद्विघ्नविनाशाय शत्रुबुद्धिक्षयाय च ॥ विशेषकाम्यहोमेन सहितं समिधादिभिः ॥ ६ ॥ स्वागतं वो द्विजश्रेष्ठा मदनुग्रहकारकाः॥अयमर्घ इदं पाद्यं भवद्भिः प्रतिगृह्यताम् ॥ ७ ॥ चरणक्षालनाद्देवास्तुष्यन्ति शुद्धमानसाः ॥ तज्जलेनैव संसिक्ताः पूर्णकामा भवन्तु मे ॥ ८ ॥ इमं वोऽर्घं प्रयच्छामि गृह्णन्तु प्रीतमानसाः ॥ पावयन्तु च मां नित्यं पूरयन्तु मनोरथान् ॥ ९ ॥ इति सर्वान्प्रार्थयेत् ॥ ततः अर्घोऽर्घोऽर्घ इति केनचिद्विप्रेणोक्ते सति यजमानः प्रतिगृह्यतामिति वदन् अर्घपात्रं ब्राह्मणहस्ते दद्यात् ॥ प्रतिगृह्णीम इति विप्रा वदेयुः ॥ ततो यजमानः सपत्नीक उदङ्मुख एवोपविश्य तत आचार्यं कर्तुं योग्यस्य प्राङ्मुखोपविष्टस्य विप्रस्य साक्षतेन पाणिना दक्षिणजानु आलभ्य स्वगोत्रोच्चारपूर्वकं तं वृणुयात् ॥ तद्यथा । अमुकगोत्रोत्पन्नः अमुकप्रवरान्वितः अमुकोऽहम् अमुकगोत्रोत्पन्नम् अमुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गतवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्समहमस्तगायत्रीपुरश्चरणकर्मणि आचार्यत्वेन त्वामहं वृणे इति वदन् अक्षतान्ब्राह्मणहस्ते दद्यात् । ततो विप्रो यजमानेन दत्तानक्षतान्गृहीत्वा वृतोऽस्मीति वदेत् ॥ ॐव्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ १९ ॥ ततो यजमानो वृतायाचार्याय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इति हस्ते अर्घं दत्वा गन्धादिभिस्तं संपूज्याचारात् रक्तसूत्रेणाचार्यहस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐ यदाबध्नन्दाक्षायणाहिरण्यꣳशता-

१ केचन प्राङ्मुखो यजमान उदङ्मुखानामाचार्यादृत्विज्य चरणमाचरेदित्यपि मन्यन्ते ॥

नीकाय सुमनस्यमानाः ॥ · तन्मुऽआर्वभामिशुतशारदायायुष्माख़रदंष्ट्रिस्वर्था-सेम् ॥ ३३ ॥ ततो प्रार्थयेत् । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन् आचार्यो भव सुव्रत ॥ भवामीत्याचार्यो वदेत् ॥ ॐ बृहस्पतेऽअतियदर्य्यो० ॥ २६ ॥ ततो ब्रह्माणं वृणुयात् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगोत्रोत्पन्नम् अमुकप्रवरान्वितं शुक्लयजुर्वेदान्तर्गतवाजिमाध्यन्दिनीयशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि ब्रह्मत्वेन त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान्दद्यात् । अक्षतानादाय वृतोऽस्मीति विप्रो वदेत् ॥ ॐ व्रतेन दीक्षा० । यजमानः वृताय ब्रह्मणे एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इत्युक्त्वा हस्ते अर्घं दत्त्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐ यदा वध्नन्दाक्षायणा० ॥ ततः प्रार्थयेत् ॥ यथा चतुर्मुखो ब्रह्मा सर्वलोकपितामहः । तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ भवामीति विप्रो वदेत् । ॐब्रह्म जज्ञानं० ॥ १३ ॥ ततः कर्मणो निर्विघ्नतासिद्ध्यर्थं गणपतिमंत्रजपार्थं गाणपत्यं वृणुयात् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगोत्रोत्पन्नम् अमुकप्रवरान्वितम् अमुकवेदशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि गाणपत्यत्वेन त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान्दद्यात् । अक्षतानादाय वृतोऽस्मीति विप्रो वदेत् । ॐ व्रतेन दीक्षा० ॥ यजमानो वृताय गाणपत्याय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इत्यर्घं हस्ते दत्त्वा गन्धादिभिस्तं सम्पूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐयदा वध्नन्दाक्षायणा० । ततो यजमानः प्रार्थयेत् ॥ वाञ्छितार्थफलावाप्त्यै पूजितोऽसि सुरासुरैः ॥ निर्विघ्नं क्रतुसंसिद्ध्यै त्वामहं गणपं वृणे ॥ ॐगणानान्त्वा० ॥ तत सदस्यवरणम् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगो० अमुकप्रव० अमुकवेद० अमुकश० अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि सदस्यत्वेन त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान् दद्यात्॥अक्षतानादाय वृतोऽस्मीति विप्रो वदेत्॥ॐव्रतेन० । ततो यजमानो वृताय सदस्याय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घं इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् । ॐयदा वध्नन्दाक्षायणा० । ततो यजमानः प्रार्थयेत् ॥ कर्मणामुपदेष्टारं सर्वकर्मविदुत्तमम् । कर्मिणं वेदतत्त्वज्ञं सदस्यं त्वामहं वृणे ॥ ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य

कार्म्यम् । सुनिम्मेधामयासिषुᳫंस्वाहा ॥ ३।३२ ॥ ततः सर्वोपद्रष्टृवरणम् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगोत्रोत्पन्नम् अमुकप्र० अमुकवेद० अमुकश० ब्राह्मणम् अस्मिन्स० गायत्रीपुर० सर्वोपद्रष्टृत्वेन त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान्दद्यात् ॥ अक्षतानादाय वृतोऽस्मीति विप्रो वदेत् ॥ ॐ व्रतेन० । यजमानो वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐयदाबध्नन्दाक्षायणा० ॥ ततो यजमानः प्रार्थयेत् ॥ भगवन् सर्वकर्मज्ञ सर्वधर्मभृतांवर ॥ गायत्र्या मम यज्ञेऽस्मिन् उपद्रष्टा भव द्विज ॥ तत अष्टौ द्वारपालान्वृणुयात्[1] ॥ तत्र पूर्वद्वारे होमकाले ऋग्वेदस्य सूक्तजपार्थं द्वौ ऋग्वेदिनौ विप्रौ वृणुयात् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगो० अमुकप्रव० अमुकवेद० अमुकश० अस्मिन्सम्र० गायत्रीपुरश्चरणकर्मणि पूर्वद्वारे ऋग्वेदसूक्तजपार्थे त्वामहं वृणे इत्यक्षतान् विप्रहस्ते दद्यात् । अक्षतान्गृहीत्वा वृतोऽस्मीति विप्रो वदेत् । ॐ व्रतेन० । यजमानो वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात्॥ॐयदा बध्नन्दाक्षायणा०। ततः प्रार्थयेत्॥ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्॥ होतारं रत्नधातमम्॥एवं द्वितीयं वृणुयात्॥ ततो दक्षिणद्वारे यजुर्वेदस्य सूक्तजपार्थे द्वयोर्विप्रयोर्वरणम् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगोत्रोत्पन्नम् अमुकप्र० अमुकवेद० अमुकश० अस्मिन्स० गायत्रीपुरश्चरणकर्मणि दक्षिणद्वारे यजुर्वेदसूक्तजपार्थं त्वामहं वृणे इत्युक्त्वाऽक्षतान् विप्रहस्ते दद्यात् । वृतोऽस्मीति विप्रो वदेत् ॥ ॐ व्रतेन० ॥ ततो यजमानः वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घः इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐयदा बध्नन्दाक्षायणा० ॥ ततः प्रार्थयेत् ॥ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः । काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ ॐइषेत्वोर्जेत्वा० ॥ १।१ ॥ एवं द्वितीयमपि

[1] पूर्वदक्षिणपश्चिमोत्तरदिक्षु क्रमेण होमकाले ऋग्यजुःसामाथर्ववेदानां तत्तत्सूक्तजपार्थम् ऋग्यजुःसामाथर्वविदोऽष्टौ द्वारपालान्वृणुयात् ॥ तदुक्तं मात्स्ये-द्वाभ्यामष्टहोतारो द्वारपालास्तथाष्ट वै ॥ तथैव तेषां दिशोऽपि स्कान्दे-पूर्वेण ऋग्वेदविदौ भवेतां यजुर्विदौ दक्षिणतश्च कार्यौ ॥ स्थाप्यौ द्विजौ सामविदौ तु पश्चादाथर्वणावुत्तरतश्च कार्यौ ॥ तथैव-पूर्वद्वारे च संस्थाप्य बह्वृचं वेदपारगम् ॥ यजुर्विदं तथा याम्ये पश्चिमे सामगायिनम् ॥ अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥ तेषां वरणार्थं मंत्रा अपि प्रतिग्रहोमादौ ऋग्वेदः पद्मपत्रा० इत्यादयः कथिताः ॥

वृणुयात् ॥ ततः पश्चिमद्वारे सामवेदसूक्तजपार्थे द्वयोर्विप्रयोर्वरणं कुर्यात् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगो० अमुकप्र० अमुकवेद० अमुकशर्मा० अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि पश्चिमद्वारे सामवेदसूक्तजपार्थे त्वामहं वृणे इत्युक्त्वाऽक्षतान्विप्रहस्ते दद्यात्॥ वृतोऽस्मीति विप्रो वदेत्॥ ॐव्रतेन०॥ ११॥ ततो यजमानो वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घ इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात्। ॐयदाबध्नन्दाक्षायणा०॥ ५/३ ॥ ततः प्रार्थयेत्॥ सामवेदस्तु पिङ्गाक्षो जाग्रतः शक्रदैवतः ॥ भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ ॐअग्न आयाहि० । एवं द्वितीयमपि सामगायिनं वृणुयात् ॥ तत उत्तरद्वारेऽथर्ववेदसूक्तजपार्थे द्वयोर्विप्रयोर्वरणम् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगो० अमुकप्र० अमुकवेद० अमुकश० अस्मिन्सग्रहमखगायत्रीपुर० उत्तरद्वारे अथर्ववेदसूक्तजपार्थे त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान्दद्यात् ॥ वृतोऽस्मीति विप्रो वदेत् ॥ ॐव्रतेन०॥ ३/१ ॥ ततो यजमानो वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घ इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात्॥ॐयदा बध्नन्दाक्षायणा०॥ ५/३ ॥ ततः प्रार्थयेत् ॥ बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैशम्पायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ॥ ॐ शन्नोदेवी० ॥ एवं द्वितीयमपि विप्रं वृणुयात् ॥ ततो जपार्थं होमार्थं वा ब्राह्मणानां वरणम् ॥ यजमानः साक्षतेन पाणिना विप्रस्य दक्षिणं जानु आलभ्य स्वगोत्रोच्चारपूर्वकम् अमुकगो० अमुकप्र० अमुकवेद० अमुकश० अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि जपार्थं होमार्थं वा ऋत्विक्त्वेन त्वामहं वृणे इत्युक्त्वा विप्रहस्तेऽक्षतान्दद्यात् ॥ वृतोऽस्मीति विप्रो वदेत् ॥ ॐ व्रतेन० ॥ ३/१ ॥ वृताय एतत्ते पाद्यं पादप्रक्षालनम् एष तेऽर्घ इत्यर्घं हस्ते दत्वा गन्धादिभिस्तं संपूज्य तस्य हस्ते कङ्कणबन्धनं कुर्यात् ॥ ॐयदा बध्नन्दाक्षायणा० ॥ ५/३ ॥ ततः प्रार्थयेत् । भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ॥ गायत्र्याश्चैव यज्ञेऽस्मिन्नृत्विक् त्वं मे प्रभो भव ॥ एवं होमार्थं जपार्थं वा यावत्सङ्ख्याकानाम् ऋत्विजां प्रयोजनं तावत्संख्याकान् ऋत्विजो वृणुयात् ॥

॥ इति आचार्याद्यृत्विग्वरणप्रयोगः ॥

## ॥ अथ वरणश्राद्धम् ॥

आचम्य प्राणानायम्य यजमानो हस्ते जलं गृहीत्वा देशकालौ सङ्कीर्त्य सूतानां

ब्राह्मणानां वरणश्राद्धं करिष्ये इति संकल्प्य ततो दिग्बन्धनं कुर्यात् । ॐस्वस्ति नऽइन्द्रो वृद्धश्रवाः० ॥ २५/१९ ॥ पुनर्हस्ते जलं गृहीत्वा । वरणश्राद्धोपहाराः शुचयो भवन्तु इति तेन जलेन वरणश्राद्धोपहाराणां प्रोक्षणं कुर्यात् ॥ पुनर्जलं गृहीत्वा। आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्य इदमासनम्। आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्य दत्तानि दास्यमानानि गन्धमाल्यादीनि वस्त्रयुग्मोपवीतकुण्डलमुद्रिकाकेयूरांगदकंठाभरणादीनि यथादैवतानि (तन्निष्क्रयद्रव्यं वा) स्वाहा संपद्यन्तां न मम ॥ पुनर्जलमादाय । कर्मणः आसमाप्ति दास्यमानानि सिद्धान्नानि आमान्नानि वा आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा संपद्यन्तां न मम ॥ पुनर्जलं गृहीत्वा। अस्य वरणश्राद्धस्य साङ्गतासिद्ध्यर्थं यथाशक्ति गोनिष्क्रयीभूतं द्रव्यम् आचार्यादिभ्यः सर्वेभ्य ऋत्विग्भ्यः स्वाहा संपद्यतां न मम ॥ ततो यजमानः करसंपुटौ कृत्वा वदेत् ॥ यस्य विप्रस्य यो भागः स तेन प्रतिगृह्यताम्। पुनः प्रार्थयेत्॥ अस्य ऋत्विग्वरणविधेर्यन्न्यूनातिरिक्तं तत्सर्वं गणेशाम्बिकयोः प्रसादाद्भवतां ब्राह्मणानां वचनाच्च परिपूर्णमस्तु ॥ अस्तु परिपूर्णमिति सर्वे ऋत्विजः प्रतिब्रूयुः ॥ ततः स्वस्ति नऽइन्द्रो वृद्धश्रवाः० ॥ २५/१९ ॥ इति सपत्नीकस्य यजमानस्य भाले तिलकं कुर्यात् ॥ तत आचारात् यजमानस्य दक्षिणहस्ते । ॐ यदा बध्नन्दाक्षायणा० ॥ ३४/५२ ॥ इति कङ्कणबन्धनम् ॥ तथैव। ॐतत्पत्नीभि० ॥ १/८ ॥ इति मंत्रेण यजमानपत्न्या वामहस्ते कङ्कणबन्धनं कुर्यात् ॥ तत आचार्यो यजमानमूर्धनि ॐकाण्डात्काण्डात्प्ररोहन्ती० ॥ १३/२० ॥ इति मंत्रेण दूर्वया मार्जनं कुर्यात् ॥ ततो यजमानो दधिक्राव्णो० ॥ २३/३२ ॥ इति मंत्रेण दधिवन्दनं कुर्यात् ॥ आचार्यो ॐ याः फलिनीर्या० ॥ १२/८९ ॥ इति मंत्रेण यजमानाय फलसमर्पणं कुर्यात् ॥

॥ इति वरणश्राद्धम् ॥

## ॥ अथ आचार्यादीनां मधुपर्कार्चनप्रयोगः ॥

यजमानो वृतानां ब्राह्मणानां मधुपर्कार्चनार्थं स्वस्य दक्षिणभागे अर्च्यसङ्ख्याकानि युग्मविष्टरादीनि गन्धाक्षतपुष्पमालायुग्मोपवीतोष्णीषालङ्करणछत्रोपानत्क-

१ ऋत्विजो वृत्वा मधुपर्कमाहरेदिति आश्वलायनवचनात् । सम्पूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ॥ असम्पूज्य कारयन्कर्म किल्बिषेणैव युज्यते ॥ तथैवाभ्यर्चयेद्विधिना इति स्कन्दपुराणवचनाच्च ॥ अत्रत्येन विधिवाक्येन स्वशाखोक्तेन मधुपर्कविधिना इत्येवार्थो बोध्यः ॥ स्वशाखा च आचार्यस्यैव ज्ञेया। प्रवृत्ते कर्मणि वृतानां ब्राह्मणानां भिन्नभिन्नशाखात्वेऽपि सर्वेषां कथं एकशाखया मधुपर्क इति नो शङ्कनीयम् ॥ गृह्यभाष्यकारेण—अर्घदेशाख्या मधुपर्कं, यच्छाखीयं कर्म तच्छाखीयो मधुपर्कः ॥ इति च व्याख्यानात् ॥ विवाहादावपि अर्घ्यस्य वरस्यैव मधुपर्कः कार्यः ॥ तत्र अर्घ्यो वरः ॥ तथैव वरणादौ अर्घ्ये आचार्ये तस्यैव मुख्यत्वात् तच्छाखयैव मधुपर्कं कार्यं ॥ एवमं आचार्यस्यैव मधुपर्कार्चनमिति कल्पद्रुमे । तत्र सर्वत्र एकवचनसेन प्रयोग ॥

मण्डलुकांस्यपात्रप्रभृतिवरणद्रव्याणि स्थापयित्वा स्वयमुदङ्मुख एव प्राङ्मुखोपविष्टानां सर्वेषाम् आचार्याद्यृत्विजां मधुपर्कार्चनमाचरेत् ॥ तद्यथा । यजमानः आचमनं प्राणायामञ्च विधाय । हस्ते जलं गृहीत्वा । अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि वृतानाम् आचार्यादीनां सर्वेषाम् ऋत्विजां मधुपर्कार्चनं करिष्ये ॥ इति संकल्प्य ततः करसंपुटौ कृत्वा वदेत् ॥ साधु भवन्तः आसताम् । अर्चयिष्यामो भवतः । अर्चय इति विप्रा वदेयुः । ततो यजमानः स्वहस्ते उदगग्रान् विष्टरान् गृह्णीयात् ॥ अर्च्यानां मध्ये कश्चन विप्र आचार्यो वा ब्रूयात् । विष्टराः विष्टराः विष्टराः ॥ प्रतिगृह्यन्ताम् इति यजमानः ॥ प्रतिगृह्णीम इति विप्राः प्रतिब्रूयुः ॥ एवं यजमानेन दत्तं विष्टरं सर्वे आचार्यादय ऋत्विजः स्वहस्ताभ्याम् उदगग्रं

---

१ पारस्करगृह्यसूत्रोक्तमधुपर्कसूत्रम् ॥

षडर्घ्या भवन्त्याचार्यऽऋत्विग्वैवाह्यो राजा प्रियः स्नातकऽ इति प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्त्वृत्विजऽ आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमित्याहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितङ्काꣳस्ये काꣳस्येनान्यस्त्रिस्त्रिः प्राह विष्टरादीनि विष्टरं प्रतिगृह्णाति वर्ष्मोस्मि समानानामुद्यतामिव सूर्यः ॥ इमन्तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति पादयोरन्यं विष्टरऽआसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहऽ इत्यर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ॥ अरिष्टाऽअस्माकं वीरा मा परासेचिमत्पयऽइत्याचामत्यामागन्यशसा सꣳसृज वर्चसा ॥ तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिन्तनूनामिति मित्रस्य त्वेति मधुपर्कं प्रतीक्षते देवस्य त्वेति प्रतिगृह्णाति सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्तऽआविद्धं तत्ते निष्कृन्तामीत्यनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम् ॥ तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योन्नादोऽसानीति मधुमतीभिर्वा प्रत्यृचं पुत्रायान्तेवासिने वोत्तरतऽआसीनायोच्छिष्टं दद्यात्सर्वं वा प्राश्नीयात्प्राग्वासंचरे निनयेदाचम्य प्राणान्संमृशति वाङ्मऽआस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्व्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेत्याचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः ॥ प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ट ॥ मम चामुष्य च पाप्मानꣳ हनोमीति यद्यालभेताथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हतऽओमुत्सृजत तृणान्यत्त्विति ब्रूयान्न त्वेवामाꣳसोर्घः स्यादधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयाद्यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्याऽएवैनं याजयेयुर्नाकृतार्घ्याऽइति श्रुतेः ॥ ३ ॥

प्रागग्रं वा गृहीत्वा ॥ ॐ वर्ष्मोस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासति । इति मंत्रान्ते स्वस्य स्वस्यासनस्याधोभागे उदगग्रं निधाय तस्योपरि उपविशेयुः ॥ ततः पूर्ववत् यजमानः स्वहस्ते सजलं पाद्यपात्रं गृहीत्वा तिष्ठेत् ॥ तथैवार्च्यानां मध्ये कश्चन विप्र आचार्यो वा ब्रूयात्। पादार्थमुदकानि पादार्थमुदकानि पादार्थमुदकानि॥ प्रतिगृह्यन्ताम् इति यजमानः॥ प्रतिगृह्णीम इति विप्राः प्रतिब्रूयुः ॥ तत आचार्यादयः सर्वे ऋत्विजो यजमानेन दत्तं पादार्थमुदकपूरितं पाद्यपात्रं स्वस्वहस्ताभ्यां गृहीत्वा । ॐ विराजोदोहोसि विराजोदोहमशीयमयि पाद्यायै विराजोदोहः । इति मन्त्रेण स्वयमेव स्वकीयं स्वकीयं दक्षिणं पादं प्रक्षाल्य पुनर्मन्त्रावृत्त्या वामपादं प्रक्षालयेयुः ॥ ततः पूर्ववत् यजमानः उदगग्रं प्रागग्रं वा द्वितीयं विष्टरम् आदाय तिष्ठेत् ॥ तथैव अर्च्यानां मध्ये कश्चन विप्र आचार्यो वा ब्रूयात् । विष्टराः विष्टराः विष्टराः ॥ प्रतिगृह्यन्ताम् इति यजमानः ॥ प्रतिगृह्णीम इति विप्राः प्रतिब्रूयुः ॥ एवं यजमानेन दत्तं द्वितीयं विष्टरं सर्वे आचार्यादय ऋत्विजः स्वस्वहस्ताभ्याम् उदगग्रं प्रागग्रं वा गृहीत्वा । ॐ वर्ष्मोस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासति । इति मन्त्रेण स्वस्वपादयोरधोभागे उदगग्रं निधाय तस्योपरि पादौ स्थापयेयुः ॥ ततः पूर्ववत् यजमानो गन्धाक्षतपुष्पादिसहितं सजलम् अर्घपात्रं स्वदक्षिणहस्ते आदाय तिष्ठेत् । ततः अर्च्यानां कश्चन विप्र आचार्यो वा ब्रूयात् । अर्घाः अर्घाः अर्घाः ॥ प्रतिगृह्यन्ताम् इति यजमानः ॥ आचार्यादय ॐआपस्थ युष्माभिः सर्वान्कामानवाप्नवानि । इति मन्त्रं पठन्तः प्रतिगृह्णीम इति प्रतिब्रूयुः ॥ एवम् आचार्यादयः सर्वे ऋत्विजः स्वस्वहस्ताभ्याम् अर्घपात्रम् गृहीत्वा तत्पात्रं स्वस्य स्वस्य मस्तकं नीत्वा शिरसाऽभिवन्द्य तदर्घपात्रं निनयन् ( नामयन् ) यजमानेन दत्तम् अर्घपात्रस्थं जलं ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टाऽअस्माकं वीरा मा परासेचिमत्पयः । इति मन्त्रं पठन्तः स्वसमीपे स्थापिते पात्रान्तरे प्रक्षिपेयुः ॥ ततो यजमान एवमेव जलपूरितम् आचमनीयपात्रं स्वदक्षिणहस्ते गृहीत्वा तिष्ठेत् ॥ तथैव पूर्ववत् अर्च्यानां कश्चन विप्र आचार्यो वा ब्रूयात् । आचमनीयानि आचमनीयानि आचमनीयानि ॥ प्रतिगृह्यन्ताम् इति यजमानः ॥ प्रतिगृह्णीम इति विप्रा प्रतिब्रूयुः । तत आचार्यादयः सर्वे ऋत्विजो यजमानेन दत्तम् आचमनीयपात्रं स्वदक्षिणहस्ते आदाय वामहस्ते गृहीत्वा तत्पात्राद्दक्षिणहस्ते जलम् आदाय । ॐ आमागन्यशसा सꣳसृजवर्चसा ॥ तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिन्तनूनाम् ॥ इति

मन्त्रेण स्वदक्षिणहस्तस्थं तज्जलं पीत्वा पुनस्तूष्णीं द्विवारं जलं पात्राद्दक्षिणहस्ते गृहीत्वा पिबेयुः ॥ अथ मधुपर्कः ॥ एकस्मिन् कांस्यपात्रे दधिमधुघृतानि एकीकृत्य तत्पात्रम् अन्येन पात्रेण पिधाय तन्मधुपर्कपात्रं यजमानः स्वदक्षिणहस्ते आदाय तिष्ठेत् ॥ पूर्ववत् अर्च्यानां कश्चिद्विप्र आचार्यो वा ब्रूयात्। मधुपर्काः मधुपर्काः मधुपर्काः ॥ प्रतिगृह्यन्ताम् इति यजमानः ॥ ततो यजमानहस्तस्थं तन्मधुपर्कपात्रं ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे। इति मंत्रेण आचार्यादयः सर्वे ऋत्विजः प्रतीक्षन्तः। ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ २२ ॥ इति मन्त्रेण प्रतिगृह्णीमः इति प्रत्युक्त्वा मधुपर्कपात्रं स्वस्वदक्षिणहस्ते गृह्णीयुः ॥ ततः सव्ये (वामे) पाणौ कृत्वा मधुपर्कपात्रस्योपरि आच्छादितं पात्रम् अपाकृत्य मधुपर्कं स्वस्वदक्षिणहस्तस्य अनामिकया ॐ नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि ॥ इति मन्त्रेण प्रदक्षिणमालोड्य किञ्चिन्मधुपर्कं तूष्णीमनामिकया प्रागुदग्वा बहिः प्रक्षिपेयुः ॥ एवं पुनः द्विवारम् ॐ नमः श्यावास्यायान्निति मंत्रं पठित्वा प्रदक्षिणमालोड्य अनामिकया बहिः प्रक्षिपेयुः॥ ततो मधुपर्कप्राशनम्॥ तत आचार्यादयः सर्वे ऋत्विजः स्वस्वदक्षिणहस्तस्यानामिकाङ्गुष्ठेन मधुपर्कं गृहीत्वा। ॐ यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ इति मंत्रेण किंचित् प्राशयेयुः॥ एवं पुनर्द्विवारं स्वस्वदक्षिणहस्तानामिकांगुष्ठेन मधुपर्कं गृहीत्वा ॐ यन्मधुनो मधव्यम् इति मन्त्रेण किञ्चित् प्राशयेयुः ॥ (अवशिष्टं प्रागसंचरे निनयेयुः पुत्राय शिष्याय वा दद्यात् सर्वं वा प्राश्नीयात्।[2]) तत आचमनम् ॥ ततः सर्वे आचार्यादय ऋत्विजो मधुपर्कप्राशनानन्तरम् आचमनं कुर्युः ॥ स्वदक्षिणहस्ते जलं गृहीत्वा। ॐ आमागन्यशसा सꣳसृजवर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥ अनेन मंत्रेण सकृदाचमनं विधाय पुनर्द्विवारं तूष्णीम् आचामेयुः ॥ एवमाचमनं विधाय तत आचार्यादयः सर्वे ऋत्विजो वामहस्ते जलं गृहीत्वा दक्षिणहस्तेन प्राणान्संस्पृशेयुः ॥ ॐ वाङ्मऽआस्येऽस्तु (इति दक्षिणहस्तांगुलिभिः आस्यं स्पृशेयुः)॥ ॐ नसोर्मे प्राणोऽस्तु (इति दक्षिणहस्तस्य तर्जन्यङ्गुष्ठेन नासापुटौ स्पृशेयुः) ॥ ॐ अक्ष्णोर्मे चक्षुरस्तु

१ मधुमतीभिर्वा प्रत्यृचम् इति वचनात्। मधुव्वाता ऋतायते० इति त्रिभिर्मंत्रैः प्रतिमन्त्रं त्रिवारं प्राशयेत्। २ ननु उच्छिष्टो विप्रो मधुपर्कस्य पुनर्मन्त्रावृत्त्या कथं प्राशयेदिति चेत्। ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने। मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् इति मनुस्मृतिप्रामाण्यात्॥ तथैव उच्छिष्टस्य मधुपर्कस्य पुनः पुनर्मन्त्रावृत्त्या प्राशनेऽपि न दोषः 'नोच्छिष्टो मधुपर्कः' इति पूर्वोक्तवचनादप्यवगम्यते। ३ अनेनैव मन्त्रेणाचमनं विधेयमिति चेत्। ॐ केशवाय स्वाहा इत्यादि स्मार्ताचमनस्यापि विधानात्॥

( इति दक्षिणहस्तस्य मध्यमाङ्गुष्ठेन युगपच्चक्षुषी स्पृशेयुः ) ॐ कर्णयोर्मे श्रोत्रमस्तु ( इति दक्षिणहस्तस्य अनामिकाङ्गुष्ठेन दक्षिणवामकर्णौ स्पृशेयुः )॥ ॐ बाह्वोर्मे बलमस्तु ( इति दक्षिणहस्तस्य कराग्रेण दक्षिणबाहुं वामबाहुं च स्पृशेयुः )॥ ॐ ऊर्वोर्मेऽओजोस्तु ( इति दक्षिणहस्तस्य कराग्रेण दक्षिणवामोरू स्पृशेयुः )॥ ॐअरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु ( इति शिरःप्रभृति पादान्तान्यङ्गानि उभाभ्यां हस्ताभ्यां स्पृशेयुः ॥ ) ततो मधुपर्काङ्गगोरुत्सर्जनं कुर्यात् ॥ यजमानोऽर्च्यसङ्ख्याकं गोनिष्क्रयद्रव्यं गृहीत्वा ब्रूयात् । गौर्गौर्गौः । तत आचार्यादयः माता रुद्राणां दुहिता वसूना(ँ)स्वसादित्यानाममृतस्य नाभिः॥ प्रनुवोचं चिकितुषे जनाय मागामनागामदितिं वधिष्ठ। इति मन्त्रं पठित्वा । अस्माकम् अमुकशर्मणाम् अस्य यजमानस्य च पाप्मा हतः। इति तूष्णीमुक्त्वा उत्सृजत तृणान्यत्तु इत्युच्चैर्ब्रूयात् ॥ तत यजमानो गोनिष्क्रयद्रव्यम् उत्सृजेत् ॥ तद्द्रव्यम् आचार्यादय ऋत्विजो विभज्य विभज्य गृह्णीयुः । अथवा आचार्य एव गृह्णीयात् ॥

इति आचार्यादीनां मधुपर्कार्चनप्रयोगः ॥

॥ अथ आचार्यादिपूजनपूर्वकप्रार्थनाप्रयोगः ॥

ततो यजमानो वृतान् ब्राह्मणान् यथाशक्ति गन्धादिभिः पुष्पमालाभिश्च समभ्यर्च्य हस्ते कुसुमाञ्जलिम् आदाय आचार्यादीनां सर्वेषाम् ऋत्विजां प्रार्थनां कुर्यात्॥ यथा । ब्राह्मणाः सन्तु मे शस्ताः पापात् पान्तु समाहिताः॥ देवानाञ्चैव दातारः पातारः सर्वदेहिनाम्॥ १ ॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः॥ देवानाञ्च ऋषीणाञ्च तृप्त्यर्थं याजकाः कृताः ॥ २॥ येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् ॥ रक्षन्तु सततं ते मां गायत्रीयागसंस्थिताः ॥ ३ ॥ ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः ॥ ४ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः॥ ५ ॥ श्रोत्रियाः सत्यवाचश्च गायत्रीध्यानतत्पराः ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः॥ ६ ॥ अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥ ७ ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥ गायत्रीयागसंपूज्याः सन्तु मे नियमान्विताः ॥ ८ ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ॥ गायत्रीध्यानसन्ध्येयाः प्रसन्नमनसः सदा ॥ ९ ॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः ॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ १० ॥ ऋत्विजश्च यथापूर्वं शक्रादीनां मखेऽभ-

वन् ॥ यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः ॥ ११ ॥ गायत्रीयागनिष्पत्तौ भवन्तोऽभ्यर्चिता मया ॥ सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ॥ १२ ॥ (इति संप्रार्थ्य तान् ब्रूयाद्यथावत् क्रियतां विधिः)॥ ततः कुसुमाञ्जलिम् आचार्या-दृत्विजां समीपे निधाय करसंपुटौ कृत्वा तान् प्रणमेत् ॥ ततो यजमानभाले ॐ स्वस्तिन॰ ॥ २५/२१ ॥ इति मन्त्रेण तिलकं कृत्वा सर्वे आचार्यादय ऋत्विजः ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्नऽआसुव ॥ ३०/३ ॥ इति मन्त्रं पठित्वा आशिषो दद्युः ॥

॥ इति आचार्यादिपूजनपूर्वकप्रार्थनाप्रयोगः ॥

---

## ॥ अथ मण्डपप्रवेशपूर्वकदिग्रक्षणम् ॥

आचार्यादीनां मधुपर्कार्चनानन्तरं सपत्नीको यजमानः आचार्यब्रह्मर्त्विक्-समन्वितः शुक्लमाल्याम्बरधरः पूजाद्युपयुक्तसंभारान्सम्भृत्य गन्धाक्षतपुष्पमाला-दिभिः सौभाग्यद्रव्यादिभिश्चार्चितजलपूरितकलशं पत्नीहस्तयोर्ग्राहयित्वा मङ्ग-लवाद्यघोषेण भद्रंकर्णेभिरिति वेदमन्त्रघोषेण च समन्वितो मण्डपं प्रदक्षिणीकृत्य

---

१ याज्ञिका मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारं समागत्य मंडपाद्बहिरेव भूमिकूर्मानन्तदेवतानाम् अक्षतपुञ्जेषु पूजनं कुर्वन्ति । तदनन्तरं यजमानस्य हस्तेन रक्षोघ्नमन्त्रैः सर्वदिक्षु भूतोत्सादनं कारयित्वा तेन सह मंडपं प्रविश्य पञ्चगव्यैः मंडपं प्रोक्षयन्ति।परन्तु तत्सर्वं गतानुगतिकं प्रतिभाति।वस्तुतस्तु तत्सर्वं मंडपप्रवेशानन्तरं गणेशपूजां कृत्वैव कार्यम् ॥ तद्यथा–मण्डपे पश्चिमद्वारेणैव प्रवेशः कार्यः॥ शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥ यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः ॥ पश्चिमद्वारमाश्रित्य प्रविशेद्यागमंडपम् ॥ केचन मंडपप्रवेशानन्तरम् ऋत्विजां वरणमपि कुर्वन्ति परंच–साचार्यो यजमानः मंडपं प्रविशेत्–इति शास्त्रोक्तिप्रामाण्यात् आचार्यादीनां वरणानन्तरमेव मंडपप्रवेशः शास्त्रसंमतः । अन्यथा साचार्यो यजमान इति वचनस्य वैयर्थ्यापत्तेः । अतस्ते मंडपे वरणादिकं कुर्याद् इति वक्तारोऽनभिज्ञा एव ॥ तथैव हेमाद्रौ–पश्चिमद्वारविशेषमपि प्रतिष्ठाप्रकरणेऽभिहितम् । तथैव प्रवेशानन्तरं मंडपस्य पूजां कृत्वैव वास्तुपूजनं कार्यम् ॥ मंडपं संप्रविश्याथ तोरणादि प्रपूज्य च ॥ वास्तुयागं ततः कुर्यात् प्रासादे मंडपेऽथवा ॥ तदपि वास्तुपूजनं प्रवेशोत्तरं वक्ष्यमाणसिद्धार्थविकिरणादि कृत्वा कार्यम् ॥ समंततश्च सिद्धार्थान् किरेद्रक्षोघ्नमंत्रतः ॥ भूतसङ्घान्विघ्नसङ्घानुत्सारयितुमादृतः ॥ इति सम्प्रहोक्तेः ॥ ततः पञ्चगव्येन प्रोक्षणम् ॥ "सर्वतः पञ्चगव्येन प्रोक्षयेद्यागमण्डपम् ॥ आपोहिष्ठातृचेनैव ततः स्वस्त्ययनं जपेत् ॥ तत्र—जानुभ्यां धरणीं गत्वा मंडपं प्रविशेत्ततः ॥ पश्चिमेनैव द्वारेण मंडपं नेतरेण तु ॥ होमद्रव्यं तु पूर्वेण दानार्थं दक्षिणेन वै ॥ प्रतिष्ठार्थांश्च संभारानुत्तरेण प्रवेशयेत् ॥ रुद्रकल्पद्रुमेऽपि तथैव कथितम् ॥ अङ्गसंकोचपूर्वकं यजमानः पश्चिमद्वारेण प्रविशेत्–अङ्गं संकोचयन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा ॥ नैर्ऋत्यां दिशि वास्त्वीशं ( वास्तोष्पतिं ) ब्राह्मणांश्च समर्चयेत् ॥ इति शारदातिलकेऽपि ॥

२ प्रायः बहवो विद्वांसः प्रवेशकलशे यज्ञकर्मणि प्रमाणभूते रुद्रकल्पद्रुमे तदन्यकर्मोऽभन्तदेवेनानुक्तमपि वर्धिन्यादिदेवतानामावाहनं पूजनञ्च कुर्वन्ति । तत्सर्वमस्माकं गतानुगतिकमेव प्रतिभाति । अतोऽस्माभि-र्मूलमन्थेनोक्तम् ॥ परन्तु येषां तत्सम्मतं स्यात्तदर्थं टिप्पण्यां दीयते ॥ तद्यथा । यजमानो हस्ते जलं गृहीत्वा ॥ अद्यपूर्वोच्चारित॰ शुभपुण्यतिथौ श्रीगायत्रीपुरश्चरणकर्माङ्गतया मण्डपप्रवेशार्थं वर्धिनीकलशस्थापनं तत्र वर्धिन्यादिदेवतानामावाहनं पूजनं च करिष्ये ॥ ततः स्वसमीपे भूमौ अक्षतैः पुञ्जं विधाय तत्र भूमिं स्पृष्ट्वा ॐमहीद्यौः पृथिवी॰ ॥ तत्र यवप्रक्षेपः—ॐओषधयः स॰ ॥ तदुपरिकलशस्थापनम्–ॐआजिघ्र कलशं॰ ॥ कलशे

मण्डपस्य पश्चिमद्वारं समागत्य जानुभ्यां धरणीं गत्वा स्वाङ्गं सङ्कोचयन्द
क्षिणपादपुरःसरं मण्डपान्तः प्रविशेत् ॥ ततस्तं जलपूरितं मङ्गलकल
मण्डपस्येशान्यां दिशि आग्नेय्यां वा स्थापयित्वा स्वयं सपत्नीकोऽग्न्यायतनात्प
श्चिमत उपविश्य । आचमनं प्राणायामञ्च विधाय हस्ते जलं गृहीत्वा प्रारब्धस
सग्रहमखगायत्रीपुरश्चरणकर्मणोऽङ्गतया दिग्रक्षणं पञ्चगव्यकरणं भूमिपूजनञ्च
करिष्ये । तत्रादौ पञ्चोपचारैः षोडशोपचारैर्वा गणेशपूजनं करिष्ये । इति सङ्कल्
विधाय यथाशक्ति गणेशपूजां कृत्वा हस्ते गौरसर्षपान् गृहीत्वा भूतोत्साद
कुर्यात् ॥ तद्यथा । वामहस्ते गौरसर्षपानादाय स्वदक्षिणहस्तेनाच्छाद्य मन्त्रान्पठेत् ।
ॐ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ२ऽइभेन । तृष्वीमनु प्रसि
तिन्द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः ॥ ९/१३ ॥ तव भ्रमासऽआशुया पतन्त्यनु
स्पृश धृषता शोशुचानः ॥ तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्का
॥ १०/१३ ॥ प्रतिस्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः ।
योनो दूरेऽअघशंसो योऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ११/१३ ॥ उदग्ने
तिष्ठ प्रत्यातनुष्व न्यमित्राँ२ऽओषतात्तिग्महेते ॥ योनोऽअरातिः समिधानचक्रे
नीचा तन्धक्ष्यतसन्न शुष्कम् ॥ १२/१३ ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व

---

जलपूरणम्–ॐ वरुणस्योत्तम्भ० ॥ गन्धप्रक्षेपः–ॐ त्वाङ्गन्धर्व्वा० ॥ धान्यप्रक्षेपः–ॐ धान्यमसिधि० ॥ सर्वौष
धिप्रक्षेपः–ॐ याऽओषधीः ॥ दूर्वाप्रक्षेप.–ॐ काण्डात्काण्डात्प्र० ॥ पञ्चपल्लवप्रक्षेपः–ॐ अश्वत्थेवोनि० ॥ सप्तमृद
प्रक्षेपः–ॐ स्योनापृथिवि० ॥ फलप्रक्षेपः–ॐ याः फलिनी० ॥ पञ्चरत्नप्रक्षेपः–ॐ परिवाजपतिः क० ॥ हिरण्यप्र
क्षेपः–हिरण्यगर्भः सम० ॥ रक्तसूत्रेण वस्त्रेण वा वेष्टयेत्–ॐ युवासुवासाः परि० ॥ पूर्णपात्रमुपरि न्यसेत्-
ॐ पूर्णादर्व्वि परापत० ॥ वरुणमावाहयेत् ॥ ॐ तत्त्वायामि० ॥ ॐ भूर्भुवः स्वः अस्मिन्कलशे वरुणं साङ्गं सप०
सशक्तिकम् आवा० स्था० ॥ तत्रैव–वर्धिन्यै नमः वर्धिनीमावाहयामि स्थापयामि । ब्रह्मणे० ब्रह्माणमा० स्था० । रुद्राय०
रुद्रमा० स्था० । विष्णवे० विष्णुमा० स्था० । मातृभ्यो० मातृः आ० स्था० । सागरेभ्यो० सागरान् आ० स्था० ।
मह्यै० महीमा० स्था० । नदीभ्यो० नदीः आ० स्था० । तीर्थेभ्यो० तीर्थानि आ० स्था० । गायत्र्यै० गायत्रीम्
आ० स्था० । ऋग्वेदाय० ऋग्वेदम् आ० स्था० । यजुर्वेदाय० यजुर्वेदम् आ० स्था० । सामवेदाय० सामवेदम्
आ० स्था० । अथर्ववेदाय० अथर्ववेदम् आ० स्था० । अग्नये० अग्निम् आ० स्था० । आदित्येभ्यो० आदित्यान्
आ० स्था० । एकादशरुद्रेभ्यो० एकादशरुद्रान् आ० स्था० । मरुद्भ्यो० मरुत आ० स्था० । गन्धर्वाय०
गन्धर्वान् आ० स्था० । ऋषये० ऋषिम् आ० स्था० । वरुणाय० वरुणम् आ० स्था० । वायवे० वायुम् आ०
स्था० । धनदाय० धनदम् आ० स्था० । यमाय० यमम् आ० स्था० । धर्माय० धर्मम् आ० स्था० । शिवाय०
शिवम् आ० स्था० । यज्ञाय० यज्ञम् आ० स्था० । विश्वेभ्यो देवेभ्यो० विश्वान्देवान् आ० स्था० । स्कन्दाय०
स्कन्दम् आ० स्था० । गणेशाय० गणेशम् आ० स्था० । यक्षाय० यक्षम् आ० स्था० । अरुन्धत्यै० अरुन्ध-
तीम् आ० स्था० ॥ प्रतिष्ठापनम्––ॐ मनोजूति० ॥ वरुणवर्धिन्याद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवत ॥
ततः ॐ भूर्भुवः स्वः वरुणवर्धिन्याद्यावाहितदेवताभ्यो नमः इत्यनेन पञ्चोपचारैर्वा षोडशोपचारैः सम्पूज्य प्रार्थयेत्-
वर्धिनि त्वं महाभागा सर्वतीर्थोदकान्विता । अतस्त्वां प्रार्थये देवि भव त्वं कुलवर्धिनी ॥ हस्ते जलमादाय–अनया
पूजया वरुणवर्धिन्याद्यावाहितदेवताः प्रीयन्ताम् ॥

दैव्याद्यग्ने ॥ अवस्थिरातनुहियातुजूनांज्ञामिमजांमिम्मम्र्मृणीहि शत्रून् ॥ अग्ने-ष्ट्वातेजसा सादयामि ॥ ३/१ ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन गायत्रीयागमारभे ॥ २ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ ३ ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ॥ स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवन्त्विमाम् ॥ ४ ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपगच्छन्तु गायत्रीयागमारभे ॥ ५ ॥ इति ईशानादिसर्वदिक्षु सर्षपान्विकिरेत् ॥ ततः पञ्चगव्यं कुर्यात् ॥

॥ इति मण्डपप्रवेशपूर्वकदिग्रक्षणप्रयोगः ॥

## ॥ अथ पञ्चगव्यकरणम् ॥

यजमानः आचार्यो वा स्वसमीपे कांस्यपात्रं निधाय तत्र गोमूत्रं क्षिपेत् ॥ ॐभूर्भुवः स्वः ॥ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३/६ ॥ ततो गोमयम् ॥ ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषुरीरिषः ॥ मानोवीरान्रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ १/६ ॥ गोमयं क्षिप्त्वा ततः क्षीरम् ॥ ॐआप्यायस्व समेतुते विश्वतः सोमवृष्ण्यम् । भवावाजस्य सङ्गथे ॥ १/१२ ॥ क्षीरं क्षिप्त्वा ततो दधि ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषि तारिषत् ॥ ३/२३ ॥ दधि क्षिप्त्वा तत आज्यम् ॥ ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ २/१ ॥ आज्यं क्षिप्त्वा ततः कुशोदकम् ॥ ॐ देवस्यत्त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥ १/१ ॥ अनेन मन्त्रेण कुशोदकं क्षिप्त्वा । ॐइति पञ्चगव्यम् आलोड्य । ॐ आपोहिष्ठेति त्र्यृचेन कुशैः पञ्चगव्येन यज्ञमण्डपं प्रोक्षयेत् ॥ ततः स्योनापृथिवि० ॥ ३/१३ ॥ इति मन्त्रेण ॐमहीद्यौः पृथिवी० ॥ १/२ ॥ इति मन्त्रेण च भूमिं गन्धादिभिः संपूज्य यजमानः कृताञ्जलिः सन् ॐस्वस्तिन इन्द्रो० । १/६ इत्येतं मन्त्रं त्रिवारं जपेत् ॥ पुनर्गृहीतकुसुमाञ्जलिर्यजमानः ऊर्ध्वं पश्यन् । देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्ष ॥ इति पठन् कुसुमाञ्जलिमूर्ध्वं प्रक्षिप्याचारात् भूमौ प्रादेशं कुर्यात् ॥

॥ इति पञ्चगव्यकरणम् ॥

## ॥ अथ वास्तुमण्डलदेवतापूजनप्रयोगः ॥

अथ वास्तुमण्डलार्थं चतुःषष्टिकोष्ठात्मके वास्तुपीठे पश्चिमत आरभ्य प्रागायता दक्षिणत आरभ्य उत्तरायता नव नव रेखाः कृत्वा तत्र समचतुरस्रेऽर्धसार्धद्विप-

---

१ अत्र चतुःषष्टिकोष्ठात्मकेऽपि वास्तुपीठे केचन शिष्टाः गृहे प्रासादे च शिख्यादिक्रम एव विहित इति मात्स्यस्य प्रमाणमङ्गीकृत्य वास्तुमण्डलस्य बहिरीशानकोणे ईशानकोणस्थदक्षिणार्धपदादारभ्य शिख्यादि देवान्स्थापयन्ति ॥ परञ्च रुद्रकल्पद्रुमकारास्तु नवरेखाभिः चतुःषष्टिकोष्ठात्मकं वास्तुपीठं निर्माय मध्यपद चतुष्टये वास्तोर्हृदये ब्रह्माणं, मध्यचतुःकोष्ठकात् पूर्वदक्षिणपश्चिमोत्तरदिक्षु द्विपदेषु अर्यमादीन् चतुरो देवान्, तथैव मध्यचतुःकोष्ठकस्याग्नेयादिविदिक्षु आग्नेयदक्षिणकोष्ठकादारभ्य दक्षिणोत्तरयोः अर्धार्धपुपदेषु सावित्रादीनष्टौ देवान् तथैव वास्तुमण्डलस्य बहिः ईशानकोणे तद्दक्षिणार्धपदादारभ्य क्रमेणेशानकोणपर्यन्तं अर्धे सार्धे चत्वारि द्विपदानि एवं चतुर्णां दिशां द्वात्रिंशत्पदेषु शिख्यादिद्वात्रिंशद्देवान् तथैव ईशानादिकोणेषु चरक्यादीन्, तथैव पूर्वादिदिक्षु स्कन्दादीन् दिग्विदिक्षु दश इन्द्रादींश्च देवान् स्थापयन्ति ॥ एवं चतुःषष्टिकोष्ठात्मकेऽपि ब्रह्मादिदेवानां शिख्यादिदेवानाञ्चावाहनं दृश्यते । अस्माभिस्तु रुद्रकल्पद्रुमकाराणामेव पक्षमवलम्ब्य ब्रह्मादि देवानाम् आवाहनं पूजनञ्च स्वीकृत्य भवद्भ्य उपहारीकृतम् ॥ तथैव पञ्चरात्रे "चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः" इत्युक्त्वा "मण्डपान्प्रवरान्वक्ष्ये प्रासादस्यानुरूपतः" इति मण्डपस्यापि प्रासादसाम्यम् अङ्गीकृतम् ॥ तत्प्रकारश्च शारदातिलकादावपि अभिहितः ॥ स एव शारदातिलकाद्युक्तः सङ्क्षेपेण प्रदर्श्यते ॥ आचार्यो वास्तुहोमा कुण्डं स्थण्डिलं वा विधाय तदीशाने हस्तमात्रां वेदिकां कृत्वा ईशानादिकोणेषु–विशन्तु भूतले नागा लोकपालाः सर्वतः ॥ मण्डलेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा ॥ इति शङ्कुरोपणं कुर्यात् ॥ ततोऽग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः ॥ तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ इत्यादिभिः शङ्कुपार्श्वे माषभक्तबलिं दद्यात् । ततो वेद्यामास्तृते वस्त्रे सुवर्णादिशलाकया ॥ शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ॥ सती च सुमनन्दा सुभद्रा नवमी मता इति नव रेखाः कुङ्कुमादिना प्रागपरायताः कृत्वा ॥ हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया । जया काला विशोका चेति नव रेखा दक्षिणोत्तरायताः कृत्वा मध्यकोष्ठचतुष्टयमेकीकृत्य चतुःकोणेषु रेखा दद्यात्तेनार्धपदानि सम्पद्यन्ते ॥ ततस्तत्र ब्रह्मादीनावाहयेत् ॥ वास्तोश्चतुरस्रं शरीरम् आक्रम्य देवाः स्थिता इति तत्तत्पदेषु तत्तद्देवानाम् आवाहनम् ॥ तत्र मध्यपदचतुष्के वास्तोर्हृदये ब्रह्माणम् ॥ पूर्वपदद्वये दक्षिणस्तने अर्यमणम् ॥ दक्षिणपदद्वये जठरदक्षिणे विवस्वन्तम् ॥ पश्चिमपदद्वये जठरवामे मित्रम् ॥ उदक्पदद्वये वामस्तने पृथ्वीधरम् ॥ आग्नेयपदार्धयोर्दक्षिणोत्तरयोर्दक्षिणहस्ते सावित्रसवितारौ ॥ नैर्ऋत्यपदार्धयोर्दक्षिणोत्तरयोः वृषणमेढ्रयो विबुधाधिपजयौ ॥ वायव्यपदार्धयोर्दक्षिणोत्तरयोर्वामहस्ते राजयक्ष्मरुद्रौ ॥ ईशानपदार्धयोर्दक्षिणोत्तरयोर्वक्षस्यापापवत्सौ ॥ ईशानपददक्षिणार्द्धे शिरसि शिखिनम् ॥ तद्दक्षिणे सार्द्धपदे दक्षिणनेत्रे पर्जन्यम् ॥ तद्दक्षिणे पदद्वये दक्षिणश्रोत्रे जयन्तम् ॥ तद्दक्षिणपदद्वये दक्षिणांसे कुलिशायुधम् तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्यम् ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ सत्यम् ॥ तद्दक्षिणसार्द्धपदे दक्षिणकूर्परे भृशम् ॥ तद्दक्षिणाग्नेयपदार्द्धे दक्षिणप्रबाहौ आकाशम् ॥ तत्पश्चिमार्द्धे दक्षिणप्रबाहौ वायुम् ॥ तत्पश्चिमसार्द्धपदे दक्षिणमणिबन्धे पूषणम् ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथम् ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे गृहक्षतम् ॥ तत्पश्चिमपदद्वये दक्षिणोरौ यमम् ॥ तत्पश्चिमपदद्वये दक्षिणजानौ गन्धर्वम् ॥ तत्पश्चिमसार्द्धपदे दक्षिणजङ्घायाम् भृङ्गराजम् ॥ तत्पश्चिमनैर्ऋत्यपदार्द्धे दक्षिणस्फिचि मृगम् ॥ तदुत्तरनैर्ऋत्यपदार्द्धे पादयोः पितॄन् ॥ तदुत्तरसार्द्धपदे वामस्फिचि दौवारिकम् ॥ तदुत्तरपदद्वये वामजङ्घायां सुग्रीवम् ॥ तदुत्तरपदद्वये वामजानौ पुष्पदन्तम् ॥ तदुत्तरपदद्वये वामोरौ वरुणम् ॥ तदुत्तरपदद्वये वामपार्श्वे असुरम् ॥ तदुत्तरसार्द्धपदे वामपार्श्वे शोषम् ॥ तदुत्तरवायव्यपदार्द्धे वाममणिबन्धे पापम् ॥ तत्प्राग्वायव्यपदार्द्धे वामप्रबाहौ रोगम् ॥ तत्प्राक्सार्धपदे वामप्रबाहावेव अहिम् ॥ तत्प्राक्पदद्वये वामकूर्परे मुख्यम् ॥ तत्प्राक्पदद्वये वामबाहौ भल्लाटम् ॥ तत्प्राक्पदद्वये वामबाहौ सोमम् ॥ तत्प्राक्पदद्वये वामांसे सर्पम् ॥ तत्प्राक्सार्द्धपदे वामश्रोत्रे अदितिम् ॥ तत्प्रागर्धपदे वामनेत्रे दितिम् ॥ (तत उत्तरे वास्तोष्पत० इति वास्तुम् ॥) ततो ईशानादिविदिक्षु चरकीं विदारीं पूतनां पापराक्षसीम् ॥ पूर्वादिदिक्षु स्कन्दम् अर्यमणं जृम्भकं पिलिपिच्छम् (दिग्विदिक्षु च इन्द्रादीन् दश) । एतत्सर्वं शारदातिलके प्रसिद्धम् इति दिक् ॥

दादिभिः पदैः पञ्चचत्वारिंशत्पदानि निर्माय मध्यचतुःकोष्टकादारभ्य ब्रह्मादिदेवतानाम् आवाहनं कुर्यात् ॥ तत्रादौ सपत्नीको यजमानो वास्तुपीठस्य समीपे पश्चिमाभिमुख उपविश्य आचम्य प्राणायामं कुर्यात् ॥ ततो हस्ते जलं गृहीत्वा अद्यपूर्वोच्चारित एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ प्रारब्धस्य श्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अस्मिञ्चतुःषष्टिकोष्टात्मके वास्तुपीठे ब्रह्मादिवास्तुमण्डलदेवतानाम् आवाहनं पूजनञ्च करिष्ये ॥ तत्रादौ वास्तुपीठस्य आग्नेयादिकोणक्रमेण शङ्कुरोपणम् ॥ आग्नेय्याम् । ॐ विशन्तु भूतले नागा लोकपालाश्च सर्वतः । मण्डलेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा ॥ १ ॥ ततो नैर्ऋत्याम् । विशन्तु भूतले नागा लोकपालाश्च सर्वतः । मण्डलेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा ॥ २ ॥ ततो वायव्याम् । विशन्तु भूतले नागा लोकपालाश्च सर्वतः । मण्डलेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा ॥ ३ ॥ तत ऐशान्याम् । विशन्तु भूतले नागा लोकपालाश्च सर्वतः । मण्डलेऽत्रावतिष्ठन्तु ह्यायुर्बलकराः सदा ॥ ४ ॥ एवमाग्नेयादिषु चतुष्कोणेषु शङ्कूनारोप्याग्नेयादिक्रमेणैव माषभक्तं दध्योदनं वा बलिं दद्यात् ॥ आग्नेय्यां शङ्कुसमीपे बलिं निधाय हस्ते जलं गृहीत्वा । ॐ अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तान्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ १ ॥ इति जलमुत्सृजेत् ॥ एवं नैर्ऋत्यां शङ्कुसमीपे बलिं निधाय हस्ते जलं गृहीत्वा । ॐ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ २ ॥ इति जलमुत्सृजेत् ॥ ततो वायव्यां शङ्कुसमीपे बलिं निधाय हस्ते जलं गृहीत्वा । ॐ नमो वै वायुरक्षेभ्यो ये चान्ये तान्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ ३ ॥ इति जलमुत्सृजेत् ॥ तत ऐशान्यां शङ्कुसमीपे बलिं निधाय हस्ते जलमादाय । ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तान्समाश्रिताः ॥ बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमम् ॥ ४ ॥ इति जलमुत्सृजेत् ॥ तत आग्नेय्यादिक्रमेण शङ्कुदेवताभ्यो नमः गन्धं पुष्पं धूपं दीपं नैवेद्यं समर्पयामि ॥ सर्वोपचारार्थे नमस्कारान् स० ॥ अनेन शङ्कुरोपणपूर्वकं बलिदानेन चतस्र आग्नेय्यादिविदिग्देवताः प्रीयन्तां न मम ॥

अथ रेखाकरणं पूजनञ्च ॥ वास्तुपीठे श्वेतं वस्त्रं प्रसार्य तदुपरि सुवर्णशलाकया कुशशलाकया वा पश्चिमत आरभ्य प्रागायता उदक्संस्था दक्षिणत आरभ्य उदगायता प्राक्संस्थाः समचतुरस्रा नव नव रेखा विदध्यात् ॥ पूर्वं पश्चिमत आरभ्य प्रागायता उदक्संस्था नवरेखाः कार्याः ॥ ॐ शान्तायै नमः ॥ १ ॥ ॐ यशोवत्यै नमः ॥२॥ ॐ कान्तायै नमः ॥ ३ ॥ ॐ विशालायै नमः ॥४॥ ॐ प्राणवाहिन्यै नमः ॥५॥

ॐसत्यै नमः ॥ ६ ॥ ॐ सुमनायै नमः ॥ ७ ॥ ॐ नन्दायै नमः ॥ ८ ॥ ॐ सुभद्रायै नमः ॥ ९ ॥ ततो दक्षिणत आरभ्य उदगायताः पूर्वदिक्संस्था नव रेखाः कार्याः ॥ ॐ हिरण्यायै नमः ॥ १ ॥ ॐ सुव्रतायै नमः ॥ २ ॥ ॐ लक्ष्म्यै नमः ॥ ३ ॥ ॐ विभूत्यै नमः ॥ ४ ॥ ॐ विमलायै नमः ॥ ५ ॥ ॐ प्रियायै नमः ॥ ६ ॥ ॐ जयायै नमः ॥ ७ ॥ ॐ कालायै नमः ॥ ८ ॥ ॐ विशोकायै नमः ॥ ९ ॥ हस्तेऽक्षतान्गृहीत्वा ॥ ॐ मनोजूतिर्जुषता० ॥ ³⁄₃ ॥ रेखादेवताः सुप्रतिष्ठिता वरदा भवत । ॐ रेखादेवताभ्यो नमः गन्धं पुष्पं धूपं दीपं नैवेद्यं समर्पयामि ॥ सर्वोपचारार्थे नमस्कारान् समर्पयामि ॥ अनेन रेखादेवतानां पञ्चोपचारैः कृतेन पूजनेन रेखादेवताः प्रीयन्तां न मम ॥

## ॥ अथ वास्तुपीठस्य चतुःषष्टिकोष्टात्मकं मण्डलम् ॥

ई० पू० आ०
६१ ईशानम् । ६२ ब्रह्माणम् । ५४ इन्द्रम् । ५५ अग्निम् ।
४६ चरकीम् । ५० स्कन्दम् । ४७ विदारीम् ।
शिखिन १४ । १५ पर्जन्यम् । १६ जयन्तम् । १७ कुलिशम् । १८ सूर्यम् । १९ सत्यम् । २० भृशम् । आका २१
२२ पूषणम् ।
आपव १२ । २ अर्यमणम् । सावि ६ । ७ सावित्रम् । २४ वितथम् ।
१ ब्रह्माणम् । २५ गृहक्षतम् । २६ यमम् ।
उ० ६० कुबेरम् । ५३ पिलिपिच्छम् । ५ पृथ्वीधरम् । दि०
४ मित्रम् । २७ गन्धर्वम् ।
२८ भृङ्गराजम् ।
४९ पापराक्षसीम् । ५२ जृम्भकम् । ४८ पूतनाम् ।
६० पशुम् । ५८ वरुणम् । ६१ अनन्तम् । ५७ निर्ऋतिम् ।
वा० प० नै०

## ॥ अथ वास्तुमण्डलदेवतास्थापनम् ॥

...स्तो चतुःकोष्टके वास्तोर्हृदये ॥ ॐ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो

वेनऽआवः ॥ सबुध्न्याऽउपमाऽ अस्य विष्ठाः सतश्चयोनिमसतश्चविवः ॥ १३/१ ॥ ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ॥ भो ब्रह्मन् इहागच्छ इहतिष्ठ ॥ १ ॥ ततो मध्यचतुःकोष्टकस्य पूर्वपदद्वये दक्षिणस्तने ॥ ॐअर्य्यमणम्बृहस्पतिमिन्द्रन्दानाय चोदय ॥ वाचं विष्णुः सरस्वतीं सवितारञ्च वाजिनं स्वाहा ॥ २७ ॥ ॐ भूर्भुवः स्वः अर्यम्णे नमः अर्यमणम् आ० स्था० ॥ भो अर्यमन् इहागच्छ इह तिष्ठ ॥ २ ॥ मध्यचतुःकोष्टकस्य दक्षिणपदद्वये जठरदक्षिणे । ॐ असिं सुमोऽअस्यादित्योऽअर्वन्नसिं त्रितो गुह्येन व्रतेन ॥ असि सोमेन समया विपृक्तऽआहुस्ते त्रीणि दिवि बन्धनानि ॥ २९/१४ ॥ ॐ भूर्भुवः स्वः विवस्वते नमः विवस्वन्तम् आ० स्था० ॥ भो विवस्वन् इहागच्छ इह तिष्ठ ॥ ३ ॥ पश्चिमे पदद्वये जठरवामभागे ॥ ॐ मित्रस्य चर्षणीधृतोवो देवस्य सानसि । द्युम्नञ्चित्रश्रवस्तमम् ॥ ११/६२ ॥ ॐभूर्भुवः स्व० मित्राय नमः मित्रम् आवा० स्था० ॥ भो मित्र इहागच्छ इह तिष्ठ ॥ ४ ॥ उत्तरे पदद्वये वामस्तने ॥ ॐ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ॥ यदेनश्चकृमा वयमिदन्तदवयजामहे स्वाहा ॥ ३/४५ ॥ ॐ भूर्भुवः स्वः पृथ्वीधराय नमः पृथ्वीधरम् आ० स्था० ॥ भो पृथ्वीधर इहा गच्छ इह तिष्ठ ॥ ५ ॥ आग्नेय्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने उत्तरार्द्धे दक्षिणहस्ते ॥ ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वाकामधुक्षः ॥ १/३ ॥ ॐ भूर्भुवः स्वः सावित्राय नमः सावित्रम् आ० स्था० ॥ भो सावित्र इहागच्छ इह तिष्ठ ॥६॥ आग्नेय्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने दक्षिणार्द्धे दक्षिणहस्ते ॥ ॐउदुत्यञ्जातवेदसन्देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्य्यम् ॥ ३३/३१ ॥ ॐभूर्भुवः स्वः सवित्रे नमः सवितारम् आ० स्था० ॥ भो सवितः इहागच्छ इह तिष्ठ ॥ ७ ॥ नैर्ऋत्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने दक्षिणार्द्धे वृषणयोः ॥ ॐ संबोधि सूरिर्म्मघवा वसुपते वसुदावन् ॥ युयोध्युस्मद्द्वेषांसि विश्वकर्म्मणे स्वाहा ॥ ८/३१ ॥ ॐ भूर्भुवः स्वः विबुधाधिपाय नमः विबुधाधिपम् आ० स्था० ॥ भो विबुधाधिप इहागच्छ इह तिष्ठ ॥ ८ ॥ नैर्ऋत्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने उत्तरार्द्धे मेढ्रे ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ २९/१२ ॥ ॐ भूर्भुवः स्वः जयाय नमः जयम् आ० स्था० ॥ भो जय इहागच्छ इह तिष्ठ ॥ ९ ॥ वायव्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने वायव्यपददक्षिणार्द्धे वामहस्ते ॥

ॐ नाशयित्री बलासस्याशैसऽउपचितामसि ॥ अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ॥ १९ ॥ ॐ भूर्भुवः स्वः राजयक्ष्मणे नमः राजयक्ष्माणम् आ० स्था० ॥ भो राजयक्ष्मन् इहागच्छ इह तिष्ठ ॥ १० ॥ वायव्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने वायव्यपदोत्तरार्द्धे वामहस्ते ॥ ॐ यातें रुद्रशिवा तनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमया गिरिशन्ताभिचाकशीहि ॥ १६ ॥ ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रम् आ० स्था० ॥ भो रुद्र इहागच्छ इह तिष्ठ ॥ ११ ॥ ईशान्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने ईशानपदोत्तरार्द्धे उरसि ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्जे दधातन ॥ महेरणाय चक्षसे ॥ ५१ ॥ ॐ भूर्भुवः स्वः अद्भ्यो नमः अपः आ० स्था० ॥ भो आप इहागच्छ इह तिष्ठ ॥ १२ ॥ ईशान्यां सूत्रेण द्विधाकृते ब्रह्मपदसंलग्ने ईशानपददक्षिणार्द्धे मुखे ॥ ॐ इमम्मे वरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ २१ ॥ ॐ भूर्भुवः स्वः आपवत्साय नमः आपवत्सम् आ० स्था० ॥ भो आपवत्स इहागच्छ इह तिष्ठ ॥ १३ ॥ वास्तुमंडलस्थान्त्यपंक्तिगतेशान्याम् ईशानपददक्षिणार्द्धे शिरसि ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहेवयम् ॥ पूषानो यथावेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥ १८ ॥ ॐ भूर्भुवः स्वः शिखिने नमः शिखिनम् आ० स्था० ॥ भो शिखिन् इहागच्छ इह तिष्ठ ॥ १४ ॥ तद्दक्षिणे सार्धपदे दक्षिणनेत्रे ॥ ॐ महाँ२ऽइन्द्रोयऽओजसापर्जन्यो वृष्टिमाँ २ इव ॥ स्तोमैर्वत्सस्य वावृधे ॥ उपयामगृहीतोसि महेन्द्राय त्वैषते योनिर्म्महेन्द्रायत्वा ॥ ७ ॥ ॐ भूर्भुवः स्वः पर्जन्याय नमः पर्जन्यम् आ० स्था० ॥ भो पर्जन्य इहागच्छ इह तिष्ठ ॥ १५ ॥ तद्दक्षिणे पदद्वये दक्षिणश्रोत्रे ॥ ॐउदुत्यञ्जातवेदसन्देवं वहन्तिकेतवः ॥ दृशेविश्वायसूर्य्यम् ॥ ३१ ॥ ॐ भूर्भुवः स्वः जयन्ताय नमः जयन्तम् आ० स्था० ॥ भो जयन्त इहागच्छ इह तिष्ठ ॥ १६ ॥ तद्दक्षिणपदद्वये दक्षिणांसे ॥ ॐइन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्रम् ॥ १७ ॥ ॐ भूर्भुवः स्वः कुलिशायुधाय नमः कुलिशायुधम् आ० स्था० ॥ भो कुलिशायुध इहागच्छ इह तिष्ठ ॥ १७ ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ ॥ ॐ सूर्य्यरश्मिर्हरिकेशः पुरस्तात्सविताज्योतिरुदयाँ२ऽअजस्रम् ॥ तस्य पूषाप्प्रसवेयाति विद्वान्सम्पश्यन्विश्वाभुवनानिगोपाः ॥ ५८ ॥ ॐ भूर्भुवः स्वः सूर्याय नमः सूर्यम् आवा० स्था० ॥ भो सूर्य इहागच्छ इह तिष्ठ ॥ १८ ॥ तद्दक्षिणपदद्वये दक्षिणबाहौ ॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ ३० ॥ ॐ भूर्भुवः स्वः

सत्याय नमः सत्यम् आ० स्था० ॥ भो सत्य इहागच्छ इह तिष्ठ ॥ १९ ॥ तद्दक्षिणे सार्द्धपदे दक्षिणकूर्परे ॥ ॐ भायैदार्वाहारम्प्रभायाऽअग्न्येधम्ब्रध्नस्यंविष्टपायाभिप्रेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारन्देवलोकाय पेशितारम्मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्यऽउपसेक्तारमवऽऋत्यैवधायोपमन्थितारम्मेधायवासः पल्पूलीम्प्रकामाय रजयित्रीम् ॥ ३२/३० ॥ ॐ भूर्भुवः स्वः भृशाय नमः भृशम् आ० स्था० ॥ भो भृश इहागच्छ इह तिष्ठ ॥ २० ॥ तद्दक्षिणाग्नेयपदोत्तरार्द्धे दक्षिणप्रवाहौ ॥ ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ २४/१० ॥ ॐ भूर्भुवः स्वः आकाशाय नमः आकाशम् आ० स्था० ॥ भो आकाश इहागच्छ इह तिष्ठ ॥ २१ ॥ तदाग्नेयपददक्षिणार्द्धे दक्षिणप्रवाहौ ॥ ॐ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे ॥ गर्भे सञ्जायसे पुनः ॥ ३६/१२ ॥ ॐ भूर्भुवः स्वः वायवे नमः वायुम् आ० स्था० ॥ भो वायो इहागच्छ इह तिष्ठ ॥ २२ ॥ तत्पश्चिमे सार्धपदे दक्षिणमणिबन्धे ॥ ॐ पूषापञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेषꣳसविताषडक्षरेण षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेणसप्तग्राम्यान्पशूनुदजयंस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम् ॥ ३/९ ॥ ॐ भूर्भुवः स्वः पूष्णे नमः पूषणम् आ० स्था० ॥ भो पूषन् इहागच्छ इह तिष्ठ ॥ २३ ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे ॥ ॐ सविताप्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे ॥ मित्रो नवमे वरुणो दशमऽइन्द्रऽएकादशे विश्वेदेवा द्वादशे ॥ ३/६ ॥ ॐ भूर्भुवः स्वः वितथाय नमः वितथम् आ० स्था० ॥ भो वितथ इहागच्छ इह तिष्ठ ॥ २४ ॥ तत्पश्चिमपदद्वये दक्षिणपार्श्वे ॥ ॐ गृहामाबिभीतमावेपध्वमूर्ज्जम्बिभ्रतऽएमसि ॥ ऊर्ज्जम्बिभ्रद्वꣳसुमनाः सुमेधागृहानैमिमनसामोदमानः ॥ ४/१ ॥ ॐ भूर्भुवः स्वः गृहक्षताय नमः गृहक्षतम् आ० स्था० ॥ भो गृहक्षत इहागच्छ इह तिष्ठ ॥ २५ ॥ तत्पश्चिमपदद्वये दक्षिणोरुभागे ॥ ॐ असि यमोऽअस्यादित्योऽअर्वन्नसित्रितो गुह्येन व्रतेन ॥ असिसोमेन समयाविपृक्तऽआहुस्तेत्रीणि दिवि बन्धनानि ॥ ३/१ ॥ ॐ भूर्भुवः स्वः यमाय नमः यमम् आवा० स्था० ॥ भो यम इहागच्छ इह तिष्ठ ॥ २६ ॥ तत्पश्चिमपदद्वये दक्षिणजानौ ॥ ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातुविश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ इन्द्रस्य बाहुरसि दक्षिणोविश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ मित्रावरुणौ

स्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणाविश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ ३/२ ॥ ॐ भूर्भुवः स्वः गन्धर्वाय नमः गन्धर्वम् आ० स्था० ॥ भो गन्धर्व इहागच्छ इह तिष्ठ ॥२७॥ तत्पश्चिमे सार्धपदे दक्षिणजङ्घायाम् ॥ ॐ कस्त्वा युनक्ति सत्त्वा युनक्ति कस्मैत्वा युनक्ति तस्मैत्वा युनक्ति॥ कर्म्मणे वां वेषाय वाम् ॥ ६/१ ॥ ॐ भूर्भुवः स्वः भृङ्गराजाय नमः भृङ्गराजम् आ० स्था० ॥ भो भृङ्गराज इहागच्छ इह तिष्ठ ॥ २८ ॥ तत्पश्चिमे नैर्ऋत्यदक्षिणपदार्द्धे दक्षिणस्फिचि ॥ ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ ३१/१२ ॥ ॐ भूर्भुवः स्वः मृगाय नमः मृगम् आ० स्था० ॥ भो मृग इहागच्छ इह तिष्ठ ॥२९॥ तदुत्तरे नैर्ऋत्यपदोत्तरार्द्धपदे पादयोः॥ ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोऽमीमदन्त पितरोतीतृपन्तपितरः पितरः शुन्धध्वम् ॥ १९/३६ ॥ ॐ भूर्भुवः स्वः पितृभ्यो नमः पितॄन् आ० स्था०॥ भो पितरः इहागच्छत इह तिष्ठत ॥ ३० ॥ नैर्ऋत्यपदोत्तरे सार्द्धपदे वामस्फिचि ॥ ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढा नड्वानाशुः सप्तिः पुरन्धिर्योषाजिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामेनः पर्ज्जन्यो वर्षतु फलवत्योनऽओषधयः पच्यन्ताँय्योगक्षेमोनः कल्पताम् ॥ २२/२२ ॥ ॐ भूर्भुवः स्वः दौवारिकाय नमः दौवारिकम् आ० स्था० ॥ भो दौवारिक इहागच्छ इह तिष्ठ ॥ ३१ ॥ तदुत्तरे पदद्वये वामजङ्घायाम् ॥ ॐ सुसमिद्धायशोचिषे घृतन्तीव्रञ्जुहोतन॥ अग्नये जातवेदसे ॥ ३/२ ॥ ॐ भूर्भुवः स्वः सुग्रीवाय नमः सुग्रीवम् आ० स्था० ॥ भो सुग्रीव इहागच्छ इह तिष्ठ ॥ ३२ ॥ तदुत्तरे पदद्वये वामजानौ ॥ ॐनक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहऽऋतुभ्यः स्वाहार्त्तवेभ्यः स्वाहा संवत्सराय स्वाहा द्यावापृथिवीभ्याᳪं स्वाहा चन्द्राय स्वाहा सूर्य्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥३/६॥ ॐभूर्भुवः स्वः पुष्पदन्ताय नमः पुष्पदन्तम् आ० स्था० ॥ भो पुष्पदन्त इहागच्छ इह तिष्ठ ॥ ३३ ॥ तदुत्तरे पदद्वये वामोरौ ॥ ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्ज्जनीस्थो वरु-

णस्यऽऋतसदंन्यसि वरुणस्यऽऋतसंदनमसि वरुणस्यऽऋतसदनमासींद ॥ ३६ ॥
ॐ भूर्भुवः स्वः वरुणाय नमः वरुणम् आ० स्था० ॥ भो वरुण इहा-
गच्छ इह तिष्ठ ॥ ३४ ॥ तदुत्तरे पदद्वये वामपार्श्वे ॥ ॐ ये रूपाणि प्रतिमुञ्च-
मानाऽअसुराः सन्तं॑ स्वधया चरन्ति ॥ परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लो-
कात्प्रणुदात्यस्मात् ॥ २ ॥ ॐ भूर्भुवः स्वः असुराय नमः असुरम् आ० स्था० ॥
भो असुर इहागच्छ इह तिष्ठ ॥ ३५ ॥ तदुत्तरे सार्द्धपदे वामपार्श्वे ॥
ॐ असंवे स्वाहा वसंवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रिये स्वाहा
गणपतये स्वाहाभिभुवे स्वाहाधिपतये स्वाहा शूषाय स्वाहा सꣳसर्पाय स्वाहा
चन्द्राय स्वाहा ज्योतिषे स्वाहा मलिम्लुचाय स्वाहा दिवापतयंते स्वाहा ॥ २२ ॥
ॐ भूर्भुवः स्वः शोषाय नमः शोषम् आ० स्था० ॥ भो शोष इहागच्छ इह तिष्ठ
॥ ३६ ॥ तदुत्तरे वायव्यपददक्षिणार्द्धे वाममणिबन्धे ॥ ॐ अग्नेपुक्ष्वाहि ये तवा-
श्वासो देवसाधवं॑ ॥ अरंवहन्ति मन्यवे ॥ ३६ ॥ ॐ भूर्भुवः स्वः पापाय नमः
पापम् आ० स्था० ॥ भो पाप इहागच्छ इह तिष्ठ ॥ ३७ ॥ तदुत्तरे वायव्यां
वायव्यपदोत्तरार्द्धे वामबाहौ॥ॐ शिरोमे श्रीर्य्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि ॥
राजा मे प्राणोऽअमृतꣳसम्राट् चक्षुर्विराट् श्रोत्रम् ॥ २० ॥ ॐ भूर्भुवः स्वः
रोगाय नमः रोगम् आ० स्था० ॥ भो रोग इहागच्छ इह तिष्ठ ॥ ३८ ॥ वाय-
व्यपदोत्तरार्द्धस्य प्राक्सार्धपदे वामकूर्परे ॥ ॐ नमोऽस्तु सर्प्पेभ्यो ये के च पृथि-
वीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यं॑ सर्प्पेभ्यो नमः ॥ १३ ॥ ॐ भूर्भुवः स्वः अहये
नमः अहिम् आ० स्था० ॥ भो अहे इहागच्छ इह तिष्ठ ॥ ३९ ॥ तत्प्राक्पद-
द्वये वामकूर्परे ॥ ॐ इषेत्वोर्जेत्त्वा वायवस्थ देवो वं॑ सविता प्रार्प्पयतु श्रेष्ठ-
तमाय कर्मणऽ आप्प्यायद्ध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मा-
मावस्तेनऽईशत माघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्य्यजमानस्य पशू-
न्पाहि ॥ १ ॥ ॐ भूर्भुवः स्वः मुख्याय नमः मुख्यम् आ० स्था० ॥ भो मुख्य
इहागच्छ इह तिष्ठ ॥ ४० ॥ तत्प्राक्पदद्वये वामबाहौ ॥ ॐ घृताच्यसि जुहूर्न्ना-
म्नासेदम्प्रियेण धाम्नाप्रियꣳ सदऽआसीद घृताच्यस्युपभृन्नाम्नासेदम्प्रियेण धाम्ना
प्रियꣳ सदऽआसीद घृताच्यसि ध्रुवानाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सदऽआ-
सीद प्रियेण धाम्ना प्रियꣳ सदऽआसीद ॥ ध्रुवाऽअसदन्नृतस्ययोनौ ता विष्णो
पाहि पाहि यज्ञम्पाहि यज्ञपतिम्पाहिमाँय्यज्ञन्यम् ॥ ३ ॥ ॐ भूर्भुवः स्वः भल्लाटाय
नमः भल्लाटम् आ० स्था० ॥ भो भल्लाट इहागच्छ इह तिष्ठ ॥ ४१ ॥ तत्प्राक्पद-

द्वये वामबाहौ ॥ ॐ वयꣳ सोमव्रते तवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ३६/५ ॥ ॐ भूर्भुवः स्वः सोमाय नमः सोमम् आ० स्था० ॥ भो सोम इहागच्छ इह तिष्ठ ॥ ४२ ॥ तत्प्राक्पदद्वये वामांसे ॥ विष्णोर्नुकं वीर्य्याणि प्रवोचँय्यः पार्थिवानि विममे रजाꣳसि ॥ योऽअस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायोविष्णवे त्वा ॥ ५/१८ ॥ ॐ भूर्भुवः स्वः सर्पाय नमः सर्पम् आ० स्था० ॥ भो सर्प इहागच्छ इह तिष्ठ ॥ ४३ ॥ तत्प्राक्सार्धपदे वामश्रोत्रे॥ ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता स पिता स पुत्रः ॥ विश्वे देवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्जनित्त्वम् ॥ २३/२५ ॥ ॐ भूर्भुवः स्वः अदितये नमः अदितिम् आ० स्था० ॥ भो अदिते इहागच्छ इह तिष्ठ ॥ ४४ ॥ तत्प्रागर्धपदे वामनेत्रे ॥ ॐ ये देवा देवेष्वधि देवत्त्वमायन्ये ब्रह्मणः पुरएतारोऽअस्य ॥ येभ्यो नऽऋते पवते धामकिञ्चन न ते दिवो न पृथिव्याऽअधिस्नुषु ॥ १७/१४ ॥ ॐ भूर्भुवः स्वः दित्यै नमः दितिम् आ० स्था० ॥ भो दिते इहागच्छ इह तिष्ठ ॥ ४५ ॥ मंडलाद्बहिः ईशानकोणे ॥ इन्धानास्त्वाशतꣳहिमाद्युमन्तꣳ समिधीमहि॥ वयस्वन्तो वयस्कृतꣳ सहस्वन्तः सहस्कृतम् ॥ ३/१८ ॥ ॐ भूर्भुवः स्वः चरक्यै नमः चरकीम् आ० स्था० ॥ भो चरकि इहागच्छ इह तिष्ठ ॥ ४६ ॥ मण्डलाद्बहिः आग्नेयकोणे ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ १२/६२ ॥ ॐ भूर्भुवः स्वः विदार्यै नमः विदारीम् आ० स्था० ॥ भो विदारि इहागच्छ इह तिष्ठ ॥ ४७ ॥ वास्तुमण्डलाद्बहिर्नैर्ऋत्यकोणे॥ ॐ कया नश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कया शचिष्ठया वृता ॥ ३६/४ ॥ ॐ भूर्भुवः स्वः पूतनायै नमः पूतनाम् आ० स्था० ॥ भो पूतने इहागच्छ इह तिष्ठ ॥ ४८ ॥ वास्तुमण्डलाद्बहिः वायव्यकोणे ॥ ॐ इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतुसोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ १७/४० ॥ ॐ भूर्भुव स्वः पापराक्षस्यै नमः पापराक्षसीम् आ० स्था० ॥ भो पापराक्षसि इहागच्छ इह तिष्ठ॥ ४९ ॥ पुनर्वास्तुमंडलाद्बहिः पूर्वस्याम् ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ २१/३ ॥ ॐ भूर्भुवः स्वः स्कन्दाय नमः स्कन्दम् आ० स्था० ॥ भो स्कन्द इहागच्छ इह तिष्ठ ॥ ५० ॥ मण्डलाद्बहिरुत्तरस्याम् ॥ ॐ यदुच सूरऽउदितेनागामित्रोऽअर्य्यमा ॥ सुवातिसविताभगः ॥ ३३/२० ॥ ॐ भूर्भुवः स्वः

अर्यम्णे नमः अर्यमणम् आ० स्था० ॥ भो अर्यमन् इहागच्छ इह तिष्ठ ॥ ५१ ॥
मंडलाद्बहिः पश्चिमस्याम् ॥ ॐसरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो
बैन्दं नड्वलाभ्यः शौष्कलम्पाराय मार्गारमवाराय केवर्त्तन्तीर्थेभ्यऽआन्दं विषमे-
भ्यो मैनालᳪ स्वनेभ्यः पर्णकं गुहाभ्यः किरातᳪ सानुभ्यो जम्भकं पर्वतेभ्यः
किम्पूरुषम् ॥ ३६ ॥ ॐ भूर्भुवः स्वः जृम्भकाय नमः जृम्भकम् आ० स्था० ॥
भो जृम्भक इहागच्छ इह तिष्ठ ॥ ५२ ॥ मण्डलाद्बहिः उत्तरस्याम् ॥ ॐरक्षोहणं
बलगहनं वैष्णवीमिदमहन्तं बलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखाने-
दमहन्तं बलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं बलगमु-
त्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं बलगमुत्किरामि यम्मे सजातो
यमसजातो निचखानोत्कृत्याङ्किरामि ॥ ३२ ॥ ॐ भूर्भुवः स्वः पिलिपिच्छाय
नमः पिलिपिच्छम् आ० स्था० ॥ भो पिलिपिच्छ इहागच्छ इह तिष्ठ ॥ ५३ ॥
अथ वास्तुमंडलाद्बहिः पूर्वस्याम् ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रᳪ हवे हवे सुहवᳪ
शूरमिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूतमिन्द्रᳪ स्वस्ति नो मघवा धात्विन्द्रः ॥ ३६ ॥ ॐ
भूर्भुवः स्वः इन्द्राय नमः इन्द्रम् आ० स्था० ॥ भो इन्द्र इहागच्छ इह तिष्ठ
॥ ५४ ॥ मण्डलाद्बहिः आग्नेय्याम् ॥ ॐ त्वन्नोऽअग्ने तव देव पायुभिर्म्मघोनो
रक्ष तन्वश्च वन्द्य ॥ त्रातातोकस्य तनये गवामस्यनिमेषᳪ रक्षमाणस्तवव्रते
॥ ३३ ॥ ॐ भूर्भुवः स्वः अग्नये नमः अग्निम् आ० स्था० ॥ भो अग्ने इहागच्छ
इह तिष्ठ ॥ ५५ ॥ मण्डलाद्बहिः दक्षिणस्याम् ॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते
स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ३८ ॥ ॐ भूर्भुवः स्वः यमाय नमः यमम्
आ० स्था० ॥ भो यम इहागच्छ इह तिष्ठ ॥ ५६ ॥ मण्डलाद्बहिः नैर्ऋत्याम् ॥
ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छ-
सातऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु ॥ ६२ ॥ ॐ भूर्भुवः स्वः निर्ऋतये नमः
निर्ऋतिम् आ० स्था० ॥ भो निर्ऋते इहागच्छ इह तिष्ठ ॥ ५७ ॥ मण्डलाद्बहिः
पश्चिमस्याम् ॥ ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ॥
अहेडमानो वरुणेह बोध्युरुशᳪ समानऽआयुः प्रमोषीः ॥ ३१ ॥ ॐ भूर्भुवः
स्वः वरुणाय नमः वरुणम् आ० स्था० ॥ भो वरुण इहागच्छ इह तिष्ठ ॥ ५८ ॥
मण्डलाद्बहिः वायव्याम् ॥ ॐ आनो नियुद्भिः शतिनीभिरध्वरᳪ सहस्रिणीभि-
रुपयाहि यज्ञम् ॥ वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदानः
॥ ३६ ॥ ॐ भूर्भुवः स्वः वायवे नमः वायुम् आ० स्था० ॥ भो वायो इहागच्छ

इह तिष्ठ ॥ ५९ ॥ मण्डलाद्बहिः उत्तरस्याम् ॥ ॐ व्वयꣳ सोमव्व्रते तवमनस्तनूषु विब्भ्रतꣳ ॥ प्रजावन्तꣳ सचेमहि ॥ ५९ ॥ ॐ भूर्भुवः स्वः सोमाय नमः सोमम् आ० स्था० ॥ भो सोम इहागच्छ इह तिष्ठ ॥ ६० ॥ मण्डलाद्बहिः ईशान्याम् । ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे व्वयम् ॥ पूषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धꣳ स्वस्तये ॥ ३६ ॥ ॐ भूर्भुवः स्वः ईशानाय नमः ईशानम् आ० स्था० ॥ भो ईशान इहागच्छ इह तिष्ठ ॥ ६१ ॥ मण्डलाद्बहिः ईशानपूर्वयोर्मध्ये ॥ ॐ अस्म्मे रुद्रा मेहनापर्वतासो व्वृत्रहत्त्ये भरहूतौ सजोषाꣳ ॥ यश्शꣳसते स्तुवते धायि पज्ज्रऽइन्द्रज्ज्येष्ठाऽअस्म्माँ २ ऽअवन्तु देवाः ॥ ५१ ॥ ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ ६२ ॥ मंडलाद्बहिः निर्ऋतिवरुणयोर्मध्ये । ॐ स्योनापृथिविनो भवानृक्षरा-निवेशनी ॥ यच्छानꣳ शर्म्मसप्प्रथाꣳ ॥ ३६ ॥ ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तम् आ० स्था० ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥ ६३ ॥ ॐ मनोजू-तिर्जुषता माज्ज्यस्य बृहस्पतिर्य्यज्ञ० ॥ १२ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमंड-लदेवताः सुप्रतिष्ठिता वरदा भवत ॥ हस्ते गन्धाक्षतपुष्पाण्यादाय ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥

तदुपरि ताम्रादिपूर्णपात्रसहितं कलशं संस्थाप्य स्वस्य समीपे वास्त्वादिमूर्तीनामभ्यु-त्तारणादिकं कुर्यात् हस्ते जलं गृहीत्वा । अद्यपूर्वोच्चरित० एवं गुणविशेषणविशिष्टायां शुभपुण्यतिथौ आसां सुवर्णनिर्मितानां वास्तुयोगिनीक्षेत्रपालसूर्यगायत्र्यादिसर्वासां मूर्तीनां निर्माणविधौ अग्निप्रतपनताडनावघातादिदोषपरिहारार्थम् अभ्युत्तारणपूर्वकं तत्तद्देवतानां सान्निध्यार्थं तत्तद्देवतानां प्राणप्रतिष्ठां करिष्ये ॥ पात्रे मूर्तीः निधाय ता घृतेनाभ्यज्य तदुपरि जलधारां कुर्यात् ॥ तत्र मन्त्राः ॥ समुद्रस्यत्त्वावकयाग्ने परिव्ययामसि ॥ पावकोऽअस्म्मब्भ्यꣳ शिवोभव ॥ ६ ॥ हिमस्यत्त्वा जरायुणाग्ने परिव्ययामसि ॥ पावकोऽअस्म्मब्भ्यꣳ शिवोभव ॥ ६ ॥ उपज्ज्मन्नुपवेतसेऽवतर नदीष्व्वा ॥ अग्ने पित्तमपामसिमण्डूकिताभिरागहि सेमन्नो यज्ञम्पावकवर्ण्णꣳ शिव-ङ्कृधि ॥ ६ ॥ अपामिदन्न्ययनꣳ समुद्रस्य निवेशनम् ॥ अन्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअस्म्मब्भ्यꣳ शिवोभव ॥ ६ ॥ अग्ने पावकरोचिषा मन्द्रया देव जिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ६ ॥ सनः पावकदीदिवोग्ने देवाँ २ ऽइहावह ॥ उपयज्ञꣳ हविश्च नꣳ ॥ ६ ॥ पावकया यश्चितयन्त्या कृपा क्षामन्नुरुचऽउषसो न भानुना ॥ तूर्वन्नयामन्नेतशस्य नूरणऽआ यो घृणे न ततृषाणोऽअजरः ॥ ६ ॥ नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्म्मत्तपन्तु हेतयः पावकोऽअ-

स्म्मभ्यंᳬ शिवोभव ॥ ११/१४ ॥ नृपदेवेडप्सुषदेवेड् बर्हिषदेवेड्वनसदेवेट् स्वर्विदेवेट् ॥ १२/१७ ॥ ये देवा देवानॉम्यज्ञियां यज्ञियांनाᳬ संवत्सरीणमुपभागमासते ॥ अहुतादौ हविषौ यज्ञेऽअस्मिन्स्वयं पिबन्तु मधुनो घृतस्य ॥ १३/१७ ॥ ये देवा देवेष्वधिदेवत्त्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्यो नऽऋते पवते धामकिञ्चन न ते दिवो न पृथिव्याऽअधिस्नुषु ॥ १४/१७ ॥ प्राणदाऽअपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यंᳬ शिवोभव ॥ १५/१७ ॥ एवं जलधारां कृत्वा प्राणप्रतिष्ठापनं कुर्यात् ॥ हस्ते जलं गृहीत्वा ॥ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ॥ ऋग्यजुःसामानि छन्दांसि ॥ पराशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रौं कीलकम् । आसु वास्त्वादिसर्वासु मूर्तिषु प्राणप्रतिष्ठापने विनियोगः ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रौं आसां मूर्तीनां प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रौं आसां मूर्तीनां जीव इह स्थितः ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हों ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रौं आसां मूर्तीनां सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ गर्भाधानादिपञ्चदशसंस्कारार्थं पञ्चदश प्रणवावृत्तिं कुर्यात् ॥ अनया आसां मूर्तीनां पञ्चदश संस्काराः संपद्यन्ताम् ॥ हस्तेऽक्षतान्गृहीत्वा ॥ ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टँय्यज्ञᳬ समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ म्प्रतिष्ठ ॥ ॥ २/२ ॥ ॐ एष वै प्रतिष्ठानामयज्ञोयत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति ॥ वास्तोष्पतिप्रभृतयः सर्वे देवाः सुप्रतिष्ठिता वरदा भवत ॥ ततो वास्तुमूर्तिम् एकस्मिन्पात्रे स्थापयित्वा हस्तेऽक्षतान् गृहीत्वा ध्यानं कुर्यात् ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः ॥ यत्त्वे महे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ ॐ नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वदेवाधिवासाश्रितशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादिसन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वम्भराय परमपुरुषाय शक्रवरदाय वास्तोष्पते नमस्ते नमस्ते ॥ एह्येहि भगवन्वास्तो सर्वदेवैरधिष्ठितः ॥ भगवन्कुरु कल्याणं यज्ञेऽस्मिन्सर्वसिद्धये ॥ १ ॥ जानुनी कूर्परीकृत्य दिशि यातुधानाश्रयोः ॥ आगच्छ भगवन्वास्तो सर्वदेवैरधिष्ठितः ॥ भगवन्कुरु कल्याणं यज्ञेऽस्मिन्सन्निधो भव ॥ २ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमंडलदेवतासहिताय वास्तुपुरुषाय नमः वास्तुपुरु-

पम् आ० स्थाप० ॥१॥ ॐपुरुषऽ एवे० ॥२/३१॥ ॐभूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः आसनार्थे अक्षतान्सम० ॥ ॐएतावानस्य० ॥ ३/३१ ॥ ॐ भूर्भुवः स्वः ब्र० वा० मं० दे० स० वा० पु० नमः पादयोः पाद्यं सम० ॥ २ ॥ ॐ त्रिपादूर्ध्वऽउ० ॥ ४/३१ ॥ ॐ भूर्भुवः स्वः ब्र० वा० मं० दे० स० वास्तुपुरुषाय नमः हस्तयोरर्घ्यं सम० ॥ ३ ॥ ॐ ततो विरा० ॥५/३१॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः आचमनीयं सम० ॥ ४ ॥ ॐ तस्माद्यज्ञात्स० ॥ ६/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः स्नानं सम० ॥ ५ ॥ ततः पञ्चामृतस्नानम् ॥ ॐपञ्चनद्यः० ॥ ११/३४ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपु० नमः मिलितपञ्चामृतस्नानं सम० ॥ ६ ॥ ततः शुद्धोदकस्नानम् ॥ ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० ॥ ७/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः शुद्धोदकस्नानं सम० ॥७॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥ ततो वास्तुमूर्तिं वास्तुमण्डलस्य मध्ये स्थापिते कलशे ताम्रादिपूर्णपात्रे निधाय ॥ अथ वस्त्रम् ॥ ॐ तस्मादश्वा० ॥ ८/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः वस्त्रोपवस्त्रे सम० ॥८॥ यज्ञोपवीतम् ॥ ॐयज्ञोपवीतं परमं० ॥ ॐभूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः यज्ञोपवीतं सम० ॥ ९ ॥ गन्धम् ॥ ॐतँयज्ञं० ॥ ९/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः गन्धं सम०॥१०॥अक्षतान्॥ ॐअक्षन्नमीमद० ॥ ५१/३ ॥ ॐभूर्भुवःस्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः अक्षतान्सम० ॥११॥ पुष्पाणि॥ ॐ यत्पुरुषं व्यदधुः०॥ १०/३१ ॥ ॐभूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः ऋतुकालोद्भवानि पुष्पाणि सम० ॥१२॥ पुष्पमालाम् ॥ ॐ द्यां मा लेखीरन्त० ॥ ४३/५ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः पुष्पमालां सम० ॥१३॥ सौभाग्यद्रव्यम् ॥ ॐ अहिरिव भोगैः० ॥५१/२९॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः सौभाग्यपरिमलद्रव्याणि सम० ॥१४॥ धूपम् ॥ ॐ ब्राह्मणोऽस्य० ॥ ११/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः धूपमाघ्रापयामि ॥ १५ ॥ दीपम् ॥ ॐ चन्द्रमा मनसो० ॥ १२/३१ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः दीपं दर्शयामि ॥ १६ ॥ नैवेद्यम् ॥ ॐ अन्नपतेऽन्न० ॥८३/११॥ ॐभूर्भुवः स्वः

ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः नैवेद्यं निवेदयामि ॥ देवतासमीपे नैवेद्यं निधाय गायत्रीमन्त्रेण संप्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्रया पञ्च प्राणाहुतीर्दद्यात् । ॐप्राणाय स्वाहा । ॐ अपानाय स्वाहा । ॐव्यानाय स्वाहा । ॐउदानायस्वाहा । ॐसमानाय स्वाहा । मध्ये पानीयं सम० । उत्तरापोशनं स० हस्तप्रक्षालनं स० । मुखप्रक्षालनं स० । करोद्वर्त्तनार्थे गन्धं स० । ततः फलम् । ॐयाः फुलिनीर्या० ॥ ६६ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः मुखवासार्थे पूगीफलं सम० ॥ ताम्बूलम् । ॐउतस्मास्य० ॥ ६८ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः ताम्बूलं सम० ॥ दक्षिणाम् ॥ हिरण्यगर्भः० ॥ ७३ ॥ ॐभूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः यथाशक्ति हिरण्यगर्भदक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य गन्धपुष्पैरभ्यर्च्य देवं नीराजयेत् ॥ ॐयेदेवासो० ॥ ७८ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः नीराजनं सम० ॥ जलेन प्रदक्षिणां कृत्वा पुष्पैर्देववन्दनं हस्तेनात्मवन्दनम् ॥ हस्तं प्रक्षाल्य । ततो मन्त्रपुष्पाञ्जलिं कुर्यात् । हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा ॥ ॐ यज्ञेन यज्ञ० ॥ ३६ ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवोभवानः ॥ यत्त्वे महे प्रतिपन्नो जुषस्व शन्नोभवद्विपदे शं चतुष्पदे ॥ पा० गृ० ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः मन्त्रपुष्पाञ्जलिं सम० ॥ प्रदक्षिणाम् ॥ ॐ सप्तास्या० ॥ ३५ ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः प्रदक्षिणां सम०॥ विशेषार्घः॥ एकस्मिन् ताम्रादिपात्रे गन्धाक्षतफलपुष्पसहितं जलं गृहीत्वा तत्र यथाशक्ति हिरण्यञ्च प्रक्षिप्य तदर्घपात्रं स्वाञ्जलौ आदाय अर्घं दद्यात् ॥ वास्तुदेव नमस्तेऽस्तु भूशय्यानिरत प्रभो ॥ मद्गृहे धनधान्यादिसमृद्धिं कुरु सर्वदा ॥ रूपं देहि जयं देहि भाग्यं भगवन्देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ यथा मेरुगिरेः शृङ्गे देवानामालयं सदा ॥ तथा ब्रह्मादिदेवानां मम यज्ञे सदा भवेत् ॥ वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफलार्घेण फलदोऽस्तु सदा मम ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः विशेषार्घं सम० ॥ ततः प्रार्थनाम् ॥ ॐ देवेश वास्तुपुरुष सर्वविघ्नविदारण॥ शान्तिं कुरु सुखं देहि यज्ञेऽस्मिन्मम सर्वदा ॥ ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः प्रार्थनापूर्वकं नमस्कारान्सम० ॥ पूजानिवेदनम् ॥ हस्ते जलं गृहीत्वा । अनेन यथाशक्ति ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च

कृतेनानेन पूजनेन ॐ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहितो वास्तुपुरुषः प्रीयतां न मम॥ ततो वास्तुमण्डलसमीपे एकस्मिन्पत्रावल्यां वास्तुमण्डलं निर्माय स्थापितक्रमेण ब्रह्मादिवास्तुमण्डलदेवताभ्यः पायसेन तदभावे दध्यक्षतैः कुशपुष्पघृताक्षतैः दुग्धमिश्रिततण्डुलैर्वा मध्यचतुःकोष्टकादारभ्य बलिदानं दद्यात्॥

॥ अथ स्थापनक्रमेण ब्रह्मादीनां पायसबलिदानम् ॥

| | |
|---|---|
| १ ॐ ब्रह्मणे नमः पायसबलिं सम० । | १४ ॐ शिखिने नमः पायसबलिं सम० । |
| २ ॐ अर्यम्णे नमः पायसबलिं सम० । | १५ ॐ पर्जन्याय नमः पायसबलिं सम० । |
| ३ ॐ विवस्वते नमः पायसबलिं सम० । | १६ ॐ जयन्ताय नमः पायसबलिं सम० । |
| ४ ॐ मित्राय नमः पायसबलिं सम० । | १७ ॐ कुलिशाय नमः पायसबलिं सम० । |
| ५ ॐ पृथ्वीधराय नमः पायसबलिं सम० । | १८ ॐ सूर्याय नमः पायसबलिं सम० । |
| ६ ॐ सावित्राय नमः पायसबलिं सम० । | १९ ॐ सत्याय नमः पायसबलिं सम० । |
| ७ ॐ सवित्रे नमः पायसबलिं सम० । | २० ॐ भृशाय नमः पायसबलिं सम० । |
| ८ ॐ विबुधाधिपाय नमः पायसबलिं स० । | २१ ॐ आकाशाय नमः पायसबलिं सम० । |
| ९ ॐ जयाय नमः पायसबलिं सम० । | २२ ॐ वायवे नमः पायसबलिं सम० । |
| १० ॐ राजयक्ष्मणे नमः पायसबलिं सम० । | २३ ॐ पूष्णे नमः पायसबलिं सम० । |
| ११ ॐ रुद्राय नमः पायसबलिं सम० । | २४ ॐ वितथाय नमः पायसबलिं सम० । |
| १२ ॐ अद्भ्यो नमः पायसबलिं सम० । | २५ ॐ गृहक्षताय नमः पायसबलिं सम० । |
| १३ ॐ आपवत्साय नमः पायसबलिं स० । | २६ ॐ यमाय नमः पायसबलिं सम० । |

१ वास्तुपीठदेवतानां बलिदाने विशेष उक्तः। यथा ईशकोणे घृतान्नं तु शिखिने विनिवेदयेत्॥ होमान्ते भक्ष्यभोज्यैश्च वास्तुदेहे बलिं हरेत्॥ तथैव-शिखिप्रभृतिदेवताना भिन्नं भिन्नं बलिदानार्थमन्नमुक्तम् । तत्सम्भवे तदेव देयम्। असम्भवे पायसान्नेनैव बलिर्देयः॥ तदुक्तम्॥ पायसं वापि दातव्यं स्वनाम्ना सर्वतः क्रमात्॥ स्वनाम्ना-शिख्यादिनाम्ना इत्यर्थः॥ अथवा शिवविष्णुप्रतिष्ठापद्धतौ-पायसान्नाभावे दध्यक्षतैः कुशपुष्पघृताक्षतैर्वा बलिं दद्यात्॥ वास्तुदेहे इति पदेन वास्तुमण्डलं विरच्य तत्र बलिदानं ज्ञेयम्॥ अत्र केचन शिष्टाः पूर्वोक्तरीत्या मंडपस्य नैर्ऋत्यभागे वास्तुपीठे वास्तुपूजनं विधाय बलिञ्च दत्वा वास्तुमंडलस्य पश्चिमदिशि स्वतंत्रकुण्डे स्थण्डिले वा अग्निं प्रतिष्ठाप्य ब्रह्मोपवेशनादि आज्यभागान्तं कर्म विधाय ॐ भूर्भुवः स्वः ब्रह्मणे नमः, स्वाहा इति नाममंत्रैः औदुम्बरतिलाज्यद्रव्यैः मंडलदेवताभ्यः प्रत्येकं अष्टाविंशति अष्टौ वा आहुतीर्हुत्वा ततो वास्तोष्पते इति चतुर्भिर्मंत्रैश्च घृताहुतीश्च दत्वा। ॐ वास्तोष्पते ध्रुवास्थूणां सत्रं सौम्यानाम्॥ द्रप्सो भेत्तापुरां शश्वतीनामिन्द्रो मुनीनां सखा स्वाहा॥ इति मंत्रेण च पञ्च बिल्वफलानि तद्बीजानि वा हुत्वा उत्तरपूजनं विधाय स्विष्टकृते स्वाहा इत्यारभ्य पूर्णाहुत्यन्तं सर्वं कर्म समाप्य गृहवत् त्रिसूत्र्या यागमण्डपं संवेष्ट्य 'कृणुष्व पाजः' इति रक्षोघ्नमंत्रैः मण्डपस्य रक्षां विधाय वास्तुकलशोदकेन सपत्नीकं यजमानमभिषिच्य पुनर्वास्तुमण्डलदेवतानामुत्तरपूजनं विधाय तासां विसर्जनं कुर्वन्ति। अयं मुख्यः पक्षः॥ परञ्च शारदातिलके तु यज्ञमण्डपस्य नैर्ऋत्यभागे वास्तुमण्डलदेवतानां स्थापनमुक्तं होमो नोक्तः॥ अतः सर्वत्र सर्वे मंडपस्यान्तः नैर्ऋत्यभागे वास्तुपीठं विधाय तस्य पूजनमेव आचरन्ति॥ होमादिकं तु यत्र स्वातंत्र्येण वास्तुपूजनं तत्रैवेति दक्षस्यद्रुमधराणामपि मतम्॥ अतोऽस्माभिरपि तथैव वास्तुपूजनमेवाङ्गीकृतम्॥ होमस्तु गायत्रीपुरश्चरणस्य चरमेऽह्नि प्रधानहोमानन्तरं तत्रैव कर्तव्यः॥

२७ ॐ गन्धर्वाय नमः पायसबलिं सम० ।
२८ ॐ भृङ्गराजाय नमः पायसबलिं सम० ।
२९ ॐ मृगाय नमः पायसबलिं सम० ।
३० ॐ पितृभ्यो नमः पायसबलिं सम० ।
३१ ॐ दौवारिकाय नमः पायसबलिं सम० ।
३२ ॐ सुग्रीवाय नमः पायसबलिं सम० ।
३३ ॐ पुष्पदन्ताय नमः पायसबलिं सम० ।
३४ ॐ वरुणाय नमः पायसबलिं सम० ।
३५ ॐ असुराय नमः पायसबलिं सम० ।
३६ ॐ शोषाय नमः पायसबलिं सम० ।
३७ ॐ पापाय नमः पायसबलिं सम० ।
३८ ॐ रोगाय नमः पायसबलिं सम० ।
३९ ॐ अहये नमः पायसबलिं सम० ।
४० ॐ मुख्याय नमः पायसबलिं सम० ।
४१ ॐ भल्लाटाय नमः पायसबलिं सम० ।
४२ ॐ सोमाय नमः पायसबलिं सम० ।
४३ ॐ सर्पाय नमः पायसबलिं सम० ।
४४ ॐ अदित्यै नमः पायसबलिं सम० ।
४५ ॐ दित्यै नमः पायसबलिं सम० ।
४६ ॐ चरक्यै नमः पायसबलिं सम० ।
४७ ॐ विदार्यै नमः पायसबलिं सम० ।
४८ ॐ पूतनायै नमः पायसबलिं सम० ।
४९ ॐ पापराक्षस्यै नमः पायसबलिं सम० ।
५० ॐ स्कन्दाय नमः पायसबलिं सम० ।
५१ ॐ अर्यम्णे नमः पायसबलिं सम० ।
५२ ॐ जृम्भकाय नमः पायसबलिं सम० ।
५३ ॐ पिलिपिच्छाय नमः पायसबलिं सम० ।
५४ ॐ इन्द्राय नमः पायसबलिं सम० ।
५५ ॐ अग्नये नमः पायसबलिं सम० ।
५६ ॐ यमाय नमः पायसबलिं सम० ।
५७ ॐ निर्ऋतये नमः पायसबलिं सम० ।
५८ ॐ वरुणाय नमः पायसबलिं सम० ।
५९ ॐ वायवे नमः पायसबलिं सम० ।
६० ॐ कुबेराय नमः पायसबलिं सम० ।
६१ ॐ ईश्वराय नमः पायसबलिं सम० ।
६२ ॐ ब्रह्मणे नमः पायसबलिं सम० ।
६३ ॐ अनन्ताय नमः पायसबलिं सम० ।

हस्ते जलं गृहीत्वा अनेन बलिदानेन ब्रह्मादिवास्तुमण्डलदेवतासहितः श्रीवास्तुपुरुषः प्रीयतां न मम ॥

॥ इति वास्तुमण्डलदेवतापूजनप्रयोगः ॥

---

१ पायसबलिदानेन दध्यक्षतबलिदानेन दुग्धमिश्रिततण्डुलबलिदानेन वा ॥ एतेषां मध्ये येन बलिदानं कृतं तस्य द्रव्यस्योहः कार्यः ॥

२ मण्डपवास्तुपीठं नवरेखात्मकं चतुःषष्टिकोष्ठात्मकम् ॥ गृहवास्तुपीठं दशरेखात्मकम् एकाशीतिपदात्मकम् ॥ अस्माकं वास्तुपीठस्य निर्माणविधौ अनेके भेदा उपलब्धाः परन्तु तेषां मध्ये प्रायः एकं नवरेखाभिः चतुःषष्टिकोष्ठात्मकं द्वितीयं दश रेखाभिः एकाशीतिकोष्ठात्मकं वास्तुपीठं विशेषतया प्रसिद्धं दृश्यते ॥ एवं द्वाभ्यां मध्ये शिष्टैरपि गृहवास्तुकर्मणि एकाशीतिकोष्ठात्मकं मंडपादौ चतुःषष्टिकोष्ठात्मकं वास्तुपीठं निर्माय चतुःषष्टिकोष्ठात्मके मध्यचतुःकोष्टकादारभ्य ब्रह्मादिवास्तुमंडलदेवतानां तथाचेशानकोणतः आरभ्य शिख्यादीनां वा आवाहनं क्रियते । शिख्यादीनामावाहनमप्यनुपदमेव ९८ तमे पृष्ठे वयं दास्यामः ॥ तथैव एकाशीतिपदे वास्तुमण्डले ईशानकोणादारभ्य शिख्यादिवास्तुमंडलदेवतानामेव आवाहनं क्रियते न ब्रह्मादीनाम् ॥

## ॥ शिख्यादिवास्तुमण्डलदेवतापूजनप्रयोगः ॥

शिख्यादिक्रमेणावाहनादि चिकीर्षुभिर्निम्नकोष्टकस्थदेवतात्क्रमेणावाहनादिप्रकारो ज्ञेयः ॥

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य शिख्यादिवास्तुमण्डलदेवतानामावाहन पूजन च करिष्ये इति सङ्कल्प्य ( ८३ पृष्ठस्थक्रमेण शङ्कुरोपणं बलिदान च तथा रेखादेवतानामावाहनपूजनं च विधाय ततो ) निम्नक्रमेण शिख्यादिवास्तुमण्डलदेवताना स्थापन कुर्यात् ॥

चतुषष्टिपदंवास्तुमंडलं




ॐ शिखिने नमः शिखिनम् आ० स्था० ॥ १ ॥ ॐ पर्जन्याय नमः पर्जन्यम् आ० स्था० ॥ २ ॥ ॐ जयन्ताय नमः जयन्तम् आ० स्था० ॥ ३ ॥ ॐ कुलिशायुधाय नमः कुलिशायुधम् आ० स्था० ॥ ४ ॥ ॐ सूर्याय नमः सूर्यम् आ० स्था० ॥ ५ ॥ ॐ सत्याय नमः सत्यम् आ० स्था० ॥ ६ ॥ ॐ भृशाय नमः भृशम् आ० स्था० ॥ ७ ॥ ॐ आकाशाय नमः आकाशम् आ० स्था० ॥ ८ ॥ ॐ वायवे नमः वायुम् आ० स्था० ॥ ९ ॥ ॐ पूष्णे नमः पूषणम् आ० स्था० ॥ १० ॥ ॐ वितथाय नमः वितथम् आ० स्था० ॥ ११ ॥ ॐ गृहक्षताय नमः गृहक्षतम् आ० स्था० ॥ १२ ॥ ॐ यमाय नमः यमम् आवा० स्था० ॥ १३ ॥ ॐ गन्धर्वाय नमः गन्धर्वम् आ० स्था० ॥ १४ ॥ ॐ भृङ्गराजाय नमः भृङ्गराजम् आ० स्था० ॥ १५ ॥ ॐ मृगाय नमः मृगम् आ० स्था० ॥ १६ ॥ ॐ पितृभ्यो नमः पितॄन् आ० स्था० ॥ १७ ॥ ॐ दौवारिकाय नमः दौवारिकम् आ० स्था० ॥ १८ ॥ ॐ सुग्रीवाय नमः सुग्रीवम् आ० स्था० ॥ १९ ॥ ॐ पुष्पदन्ताय नमः पुष्पदन्तम् आ० स्था० ॥ २० ॥ ॐ वरुणाय नमः वरुणम् आ०

स्वा० ॥ २१ ॥ ॐ असुराय नमः असुरम् आ० स्वा० ॥ २२ ॥ ॐ शोषाय नमः शोषम् आ० स्वा० ॥ २३ ॥ ॐ पापाय नमः पापम् आ० स्वा० ॥ २४ ॥ ॐ रोगाय नमः रोगम् आ० स्वा० ॥ २५ ॥ ॐ अहये नमः अहिम् आ० स्वा० ॥ २६ ॥ ॐ मुख्याय नमः मुख्यम् आ० स्वा० ॥ २७ ॥ ॐ भल्लाटाय नमः भल्लाटम् आ० स्वा० ॥ २८ ॥ ॐ सोमाय नमः सोमम् आ० स्वा० ॥ २९ ॥ ॐ सर्पाय नमः सर्पम् आ० स्वा० ॥ ३० ॥ ॐ अदितये नमः अदितिम् आ० स्वा० ॥ ३१ ॥ ॐ दित्यै नमः दितिम् आ० स्वा० ॥ ३२ ॥ ॐ अद्भ्यो नमः अपः आ० स्वा० ॥ ३३ ॥ ॐ सावित्राय नमः सावित्रम् आ० स्वा० ॥ ३४ ॥ ॐ जयाय नमः जयम् आ० स्वा० ॥३५॥ ॐ रुद्राय नमः रुद्रम् आ० स्वा० ॥ ३६ ॥ ॐ अर्यम्णे नमः अर्यमणम् आ० स्वा० ॥ ३७ ॥ ॐ सवित्रे नमः सवितारम् आ० स्वा० ॥ ३८ ॥ ॐ विवस्वते नमः विवस्वन्तम् आ० स्वा० ॥ ३९ ॥ ॐ विबुधाधिपाय नमः विबुधाधिपम् आ० स्वा० ॥ ४० ॥ ॐ मित्राय नमः मित्रम् आवा० स्वा० ॥ ४१ ॥ ॐ राजयक्ष्मणे नमः राजयक्ष्माणम् आ० स्वा० ॥ ४२ ॥ ॐ पृथ्वीधराय नमः पृथ्वीधरम् आ० स्वा० ॥ ४३ ॥ ॐ आपवत्साय नमः आपवत्सम् आ० स्वा० ॥ ४४ ॥ ॐ ब्रह्मणे नमः ब्रह्माणम् आ० स्वा० ॥ ४५ ॥ ॐ चरक्यै नमः चरकीम् आ० स्वा० ॥ ४६ ॥ ॐ विदार्यै नमः विदारीम् आ० स्वा० ॥ ४७ ॥ ॐ पूतनायै नमः पूतनाम् आ० स्वा० ॥ ४८ ॥ ॐ पापराक्षस्यै नमः पापराक्षसीम् आ० स्वा० ॥ ४९ ॥ ॐ स्कन्दाय नमः स्कन्दम् आ० स्वा० ॥ ५० ॥ ॐ अर्यम्णे नमः अर्यमणम् आ० स्वा० ॥ ५१ ॥ ॐ जृम्भकाय नम जृम्भकम् आ० स्वा० ॥ ५२ ॥ ॐ पिलिपिच्छाय नमः पिलिपिच्छम् आ० स्वा० ॥ ५३ ॥ ॐ इन्द्राय नमः इन्द्रम् आ० स्वा० ॥ ५४ ॥ ॐ अग्नये नमः अग्निम् आ० स्वा० ॥ ५५ ॥ ॐ यमाय नमः यमम् आ० स्वा० ॥ ५६ ॥ ॐ निर्ऋतये नमः निर्ऋतिम् आ० स्वा० ॥ ५७ ॥ ॐ वरुणाय नमः वरुणम् आ० स्वा० ॥ ५८ ॥ ॐ वायवे नमः वायुम् आ० स्वा० ॥ ५९ ॥ ॐ सोमाय नमः सोमम् आ० स्वा० ॥ ६० ॥ ॐ ईशानाय नमः ईशानम् आ० स्वा० ॥ ६१ ॥ ॐ ब्रह्मणे नमः ब्रह्माणम् आ० स्वा० ॥ ६२ ॥ ॐ अनन्ताय नमः अनन्तम् आ० स्वा० ॥ ६३ ॥

ततो मनोजूतिरिति प्रतिष्ठाप्य तदनन्तरं "शिख्यादिवास्तुमण्डलदेवताभ्यो नमः" इति पंचोपचारैः संपूज्य वास्त्वादिमूर्तीनां ९२–९३ पृष्ठस्थरीत्या प्राणप्रतिष्ठां कृत्वा प्रतिष्ठापनं च विधाय संप्रार्थ्य ९४ पृष्ठक्रमेण "शिख्यादिवास्तुमण्डलदेवतासहिताय वास्तुपुरुषाय नमः" इति समन्त्रं नाममन्त्रेण वा पूजनं विधाय संकल्प्य नाममन्त्रेणैव "शिखिने नमः पायसबलिं समर्पयामि" इति बलिं दत्त्वा ॥ अनेन बलिदानेन शिख्यादिवास्तुमण्डलदेवतासहितः वास्तुपुरुषः प्रीयतां नमम इति संकल्पयेत् ॥

॥ इति शिख्यादिवास्तुमण्डलदेवतापूजनप्रयोगः ॥

## ॥ अथ योगिनीदेवतापूजनप्रयोगः ॥

### ॥ अथ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहितं स्कान्दकाशीखण्डोक्तं गजाननादिचतुःषष्टियोगिनीनां समन्त्रकपूजनम् ॥

आग्नेय्यां श्वेतवस्त्राच्छादिते योगिनीपीठे कुंकुमाक्तेन सूत्रेण नवकोष्टात्मकं योगिनीमण्डलं विरच्य तत्र पूर्वादितः ईशानपर्यन्तं प्रतिकोष्टकम् ईशानतो दिक्-विदिक्षु सूत्रपातेनाष्टौ कोष्टकानि कृत्वा पूर्वकोष्टतः ईशानपर्यन्तं प्रतिकोष्टकम् अष्टौ अष्टौ गजाननादिचतुःषष्टियोगिनीः स्थापयेत् ॥ सपत्नीको यजमानो योगिनीपीठ-समीपे पूर्वमुख उपविश्य आचमनं प्राणायामं च कुर्यात् ॥ ततो हस्ते जलं गृहीत्वा अद्यपूर्वोच्चा० शुभपुण्यतिथौ अस्मिन्सग्रहमखगायत्रीपुरश्चरणकर्मणि श्रीमहाकाली-श्रीमहालक्ष्मीश्रीमहासरस्वतीनामावाहनपूर्वकं गजाननादिचतुःषष्टियोगिनीनामा-वाहनं प्रतिष्ठां पूजनं च करिष्ये ॥ इति सङ्कल्प्य । ततो मण्डलमध्ये त्रीन्कलशान् एकं वा संस्थाप्य तत्र सुवर्णनिर्मिताः कृताग्न्युत्तारणाः तिस्रः प्रतिमाः संस्थाप्य तासु प्रति-मासु स्ववामतः क्रमेण श्रीमहाकाल्यादीः स्थापयेत् ॥ हस्तेऽक्षतानादाय आवाहयेत् ॥

---

१ योगिनीना स्थापनार्थं तस्याः पीठं रुद्रकल्पद्रुमकारेणाग्नेय्यां कथितम् ॥ अन्यै ताराभक्तितरं-गिण्यादिग्रन्थकर्तृभिरपि देव्यग्रे श्रीमहाकाल्यादीनाम् आवरणदेवताना पूजनानन्तरं तासां परित प्राद-क्षिण्येनापि केवलं पूजनमुक्तम् ॥ तथैव कमलाकरादिभिस्तु योगिनीनां वायव्यां पीठं कथितं परश्च प्राय सर्वे आग्नेय्यामेव पीठं कुर्वन्ति ॥ अस्माभिरपि तथैवाग्नेय्यां पीठं कृत्वाऽऽवाहन पूजनञ्च क्रियते ॥ तद्यथा ॥ चतु षष्टियोगिनीना स्थापनार्थम् आग्नेय्यां चतुरस्रात्मकं योगिनीपीठ कृत्वा तत्र श्वेत वस्त्रं प्रसार्य कुंकुमाक्तेन रक्तसूत्रेण दक्षिणत आरभ्य उदगन्ताः प्राक्संस्था. चतस्रो रेखाः कार्याः ॥ तथैव अन्या अपि चतस्रो रेखा. पश्चिमत आरभ्य प्रागन्ता उदक्संस्थाः कृत्वा नवकोष्टात्मकं मण्डलं विरच्य पूर्वे चतुरस्रकोष्टके दिक्विदिक्षु सूत्रपातेन अष्टकोष्टात्मक मण्डलं विधेयम् ॥ एवमाग्नेयदक्षिणनैर्ऋत्यपश्चिमवायव्योत्तरेशान-चतुरस्रेषु कोष्टकेष्वपि तथैव सूत्रपातेन अष्टकोष्टात्मकेषु मण्डलेषु कृतेषु चतु षष्टिकोष्टात्मक योगिनीमण्डलं स्यात् ॥ तत्र प्रमाणम् ॥ अष्टरेखासमायुक्तं मण्डलं तत्र कारयेत् ॥ अष्टौ ते युगरेखायाश्चतुःकोण तु कोणयो (?) ॥ ( एवं नवसु कोष्टेषु दिग्विदिक्षु समास्तथा ॥ कृत्वा रेखाश्चतस्रश्च ह्यष्टौ कोष्टानि पूर्वत । स्थाप्या ईशानतस्तत्र योगिन्य· प्रतिकोष्टकम् ॥ ) स्थापनं तत्र कर्तव्यं योगिनीनां तु पूर्वत. ॥ तत्र पूर्वे अष्टकोष्टकेषु ईशानत प्रादक्षिण्येन अष्टौ देवी. स्थापयेत् । एवमेव आग्नेयादीशानकोणपर्यन्तं प्रतिकोष्टम् ईशानत. आरभ्य अष्टानां देवीनां स्थापनेचतु षष्टिदेवीना स्थापनं स्यात् ॥ ततो मध्ये चतुरस्रे कोष्टे श्रीमहाकालीमहालक्ष्मीमहासरस्वतीना स्थापनार्थं त्रयाणां कलशाना स्थापनं कृत्वा क्रमश तत्र ता तिस्रः स्थापयेत् ॥ अथवा मध्ये एकं कलश स्थाप-यित्वा तत्र तिसृणां श्रीमहाकाल्यादीनां स्थापनं विधेयम् ॥ परञ्च रुद्रकल्पद्रुमे तु आग्नेय्यां रक्तं वस्त्रं प्रसार्य पीठे पूर्वभागे त्रीणि त्र्यस्राणि विलिख्य तेषु त्र्यस्रेषु कलशस्थापनविधिना त्रीन्कलशान्स्थापयित्वा क्रमेण तेषु श्रीमहाकाल्यादीनां तिसृणां देवीनां सुवर्णमयीः कृताग्न्युत्तारणा. तिस्रो मूर्तीः स्थापयित्वा तत्र श्रीमहाकालीमहा-लक्ष्मीमहासरस्वतीनामावाहनं कृत्वा तासामग्रे एकस्यां पंक्तौ अष्टौ त्र्यस्राणि विधाय तदुत्तरे तदुत्तरे प्रतिपंक्ति अष्टौ एवम् अष्टसु त्र्यस्रेषु तेषु चतु षष्टिकोष्टानि स्युः । तत्र दक्षिणत आरभ्य उदगन्ताः प्राक्संस्थाः पश्चिमतः आरभ्य प्रागन्ता उदक्संस्था वा गजाननादियोगिनी. स्थापयेदिति कथितम् । अतः विद्वद्भिरुभयो. पक्ष-योर्मध्ये यथारुचि स्थापनं विधेयम् ॥

## ॥ अथ चतुःषष्टियोगिनीमण्डलम् ॥

॥ अथ योगिनीमण्डलस्य मध्यकोष्टके श्रीमहाकालीश्रीमहालक्ष्मी-
श्रीमहासरस्वतीनां स्थापनम् ॥

स्ववामतः प्रथमंकलशपूर्णपात्रे ॥ ॐ अम्बेऽअम्बिकेम्बालिकेनमानयति कश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ ३६ ॥ ॐ भूर्भुवः स्वः महाकाल्यै नमः महाकालीम् आ० स्था० ॥ भो महाकालि । इहागच्छ इह तिष्ठ ॥ १ ॥ प्रथमकलशाद्दक्षिणतः द्वितीयकलशपूर्णपात्रे ॥ ॐ श्रीश्चं ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाणसर्वलोकम्मऽइषाण ॥ ३६ ॥ ॐ भूर्भुवः स्वः महालक्ष्म्यै नमः महालक्ष्मीमावाहयामि स्थापयामि ॥ भो महालक्ष्मि इहागच्छ इह तिष्ठ ॥ २ ॥ द्वितीयकलशाद्दक्षिणतः तृती-

---

१ इत्थमावाहनं स्ववामहस्ततः दक्षिणसंस्थं कार्यमुत्तरसंस्थे तु महालक्ष्म्याः दक्षिणे महाकाल्या आवाहनं न घटिष्यते च दक्षिण एव ॥ महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती ॥ दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुन-द्वयमिति सप्तशतीरहस्ये उक्तत्वात् । तेन न दक्षिणसंस्थापने कश्चिद्विरोधः ॥ पूज्यपूजकयोर्मध्ये प्राची इति पक्षमनुसृत्येदं ताभ्यां पश्चिमाभिमुखमावाहनम् ॥

यैकलशपूर्णपात्रे—ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञं वष्टु धियावसुः ॥ ८४/२० ॥ ॐ भूर्भुवः स्वः महासरस्वत्यै नमः महासरस्वतीम् आवा० स्था० ॥ भो महासरस्वति इहागच्छ इह तिष्ठ ॥ ३ ॥

॥ अथ पूर्वकोष्टस्येशानतः अष्टसु प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्—ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् ॥ पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ १८/२५ ॥ ॐ भूर्भुवः स्वः गजाननायै नमः गजाननामा० स्था० । भो गजानने इहागच्छ इह तिष्ठ॥ १॥ तद्दक्षिणे—ॐआ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽ इषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽ ओषधयः पच्यन्ताँय्योगक्षेमो नः कल्पताम् ॥ २२/२२ ॥ ॐ भूर्भुवः

---

॥ अथ नाममन्त्रैः महाकालीमहालक्ष्मीमहासरस्वतीनां स्थापनम् ॥

१ स्ववामत आरभ्य प्रथमकलशपूर्णपात्रोपरि—ॐ भूर्भुव स्व महाकाल्यै नम महाकालीमावाहयामि स्थापयामि ॥ भो महाकालि इहागच्छ इह तिष्ठ ॥ १ ॥

२ तद्दक्षिणे द्वितीयकलशपूर्णपात्रोपरि-ॐ भूर्भुव स्व. महालक्ष्म्यै नम महालक्ष्मीमावाहयामि स्थापयामि ॥ भो महालक्ष्मि इहागच्छ इह तिष्ठ ॥ २ ॥

३ तद्दक्षिणे तृतीयकलशपूर्णपात्रोपरि—ॐ भूर्भुवः स्व महासरस्वत्यै नम महासरस्वतीमावाहयामि स्थापयामि ॥ भो महासरस्वति इहागच्छ इह तिष्ठ ॥ ३ ॥

॥ अथ नाममन्त्रैः पूर्वे प्रथमकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

१ ॐ भूर्भुव स्व गजाननायै नम गजाननामावाहयामि स्था० ॥ भो गजानने इहागच्छ इह तिष्ठ ॥
२ ॐ भूर्भुव स्व सिंहमुख्यै नम सिंहमुखीमावाहयामि स्था० ॥ भो सिंहमुखि इहागच्छ इह तिष्ठ ॥
३ ॐ भूर्भुव स्व गृध्रास्यायै नम गृध्रास्यामावाहयामि स्था० ॥ भो गृध्रास्ये इहागच्छ इह तिष्ठ ॥
४ ॐ भूर्भुव स्व काकतुण्डिकायै नम काकतुण्डिकामावाहयामि स्था० ॥ भोका० के इहागच्छ इह तिष्ठ ॥
५ ॐ भूर्भुव स्व उष्ट्रग्रीवायै नम उष्ट्रग्रीवामावाहयामि स्था० ॥ भो उष्ट्रग्रीवे इहागच्छ इह तिष्ठ ॥
६ ॐ भूर्भुव स्व हयग्रीवायै नम हयग्रीवामावाहयामि स्थापयामि ॥ भो हयग्रीवे इहागच्छ इह तिष्ठ ॥
७ ॐ भूर्भुव स्व वाराह्यै नम वाराहीमावाहयामि स्थापयामि ॥ भो वाराहि इहागच्छ इह तिष्ठ ॥
८ ॐ भूर्भुव स्व शरभाननायै नम शरभाननामावाहयामि स्था० ॥ भो शरभानने इहागच्छ इह तिष्ठ ॥

॥ अथ आग्नेय्यां द्वितीयकोष्टकस्येशानत. प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

९ ॐ भूर्भुव स्व उलूकिकायै नम उलूकिकामावाहयामि स्था० ॥ भो उलूकिके इहागच्छ इह तिष्ठ ॥
१० ॐ भूर्भुव स्व शिवारावायै नम शिवारावामावाहयामि स्था० ॥ भो शिवारावे इहागच्छ इह तिष्ठ ॥
११ ॐ भूर्भुव स्व मयूर्यै नम मयूरीमावाहयामि स्थापयामि ॥ भो मयूरि इहागच्छ इह तिष्ठ ॥
१२ ॐ भूर्भुव स्व विकटाननायै नम विकटाननामावा० स्था० ॥ भो विकटानने इहागच्छ इह तिष्ठ ॥
१३ ॐ भूर्भुव स्व अष्टवक्रायै नम अष्टवक्रामावाहयामि स्था० ॥ भो अष्टवक्रे इहागच्छ इह तिष्ठ ॥
१४ ॐ भूर्भुव. स्व कोटराक्ष्यै नम कोटराक्षीमावाहयामि स्था० ॥ भो कोटराक्षि इहागच्छ इह तिष्ठ ॥

स्वः सिंहमुख्यै नमः सिंहमुखीमावा० स्था०॥ भो सिंहमुखि इहागच्छ इह तिष्ठ॥२॥तत्पश्चिमे-ॐमुहाँ२ऽ इन्द्रोयऽ ओजसा पुर्जन्यो वृष्टिमाँ२ऽ इव॥ स्तोमैर्वुत्सस्य॑वावृधे ॥४०/७॥ ॐभूर्भुवः स्वः गृध्रास्यायै नमः गृध्रास्यामावाह० स्था०। भो गृध्रास्ये इहागच्छ इह तिष्ठ ॥ ३ ॥ तत्पश्चिमे-ॐसुद्योजातो॑व्यमिमीतयुज्ञमुग्निर्देवानामभवत्पुरोगाः॥ अुस्यहोतुः॒प्रदिश्यृतस्यवाचिस्वाहाकृत॑हुविरदन्तुदेवाः ॥ ३६/२९ ॥ ॐ भूर्भुवः स्वः काकतुण्डिकायै नमः काकतुण्डिकामा० स्था० । भो काकतुण्डिके इहागच्छ इह तिष्ठ ॥ ४ ॥ तदुत्तरे-ॐ आदित्यङ्गर्भम्पयसासमङ्ग्धिसहस्रस्यप्रतिमांविश्वरूपम्॥ परिवृङ्धिहरसामाभिमंस्थाः शतायुषङ्कृणुहिचीयमानः ॥ ४१/१३ ॥ ॐ भूर्भुवः स्वः उष्ट्रग्रीवायै नमः उष्ट्रग्रीवाम् आ० स्था० ॥ भो उष्ट्रग्रीवे इहागच्छ इह तिष्ठ ॥ ५ ॥ तदुत्तरे-ॐ स्वुर्णघर्मःस्वाहास्वुर्णार्कःस्वाहा स्वुर्णशुक्रः स्वाहास्वुर्णज्योतिः स्वाहास्वुर्णसूर्य्यः स्वाहा ॥ ५०/१८ ॥ ॐ भूर्भुवः स्वः हयग्रीवायै नमः हयग्रीवामावाह० स्था० । भो हयग्रीवे इहागच्छ इह तिष्ठ ॥ ६ ॥ तत्पूर्वे-ॐ सुत्यञ्चमे श्रुद्धाचमेजर्गच्चमेधनञ्चमेविश्वञ्चमेमहश्चमेक्रीडाचमेमोदश्चमेजातञ्चमेजनिुष्यमाणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयुज्ञेनकल्पन्ताम्॥५/१८॥ ॐ भूर्भुवः स्वः वारायै नमः वारा-

१५ ॐ भूर्भुवः स्वः कुब्जायै नमः कुब्जामावाहयामि स्थापयामि ॥ भो कुब्जे इहागच्छ इह तिष्ठ ॥
१६ ॐ भूर्भुवः स्वः विकटलोचनायै नमः विकटलोचनामावा० स्था० ॥ भो विकटलोचने इहागच्छ इह तिष्ठ ॥

॥ अथ दक्षिणे तृतीयकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

१७ ॐ भूर्भुवः स्वः शुष्कोदर्यै नमः शुष्कोदरीमावाहयामि स्था० ॥ भो शुष्कोदरि इहागच्छ इह तिष्ठ ॥
१८ ॐ भूर्भुवः स्वः ललजिह्वायै नमः ललजिह्वामावाह० स्था० ॥ भो ललजिह्वे इहागच्छ इह तिष्ठ ॥
१९ ॐ भूर्भुवः स्वः श्वदंष्ट्रायै नमः श्वदंष्ट्रामावाहयामि स्थाप० ॥ भो श्वदंष्ट्रे इहागच्छ इह तिष्ठ ॥
२० ॐ भूर्भुवः स्वः वानराननायै नमः वानराननामावाह० स्था० ॥ भो वानरानने इहागच्छ इह तिष्ठ ॥
२१ ॐ भूर्भुवः स्वः ऋक्षाक्ष्यै नमः ऋक्षाक्षीमावाहयामि स्थापयामि ॥ भो ऋक्षाक्षि इहागच्छ इह तिष्ठ ॥
२२ ॐ भूर्भुवः स्वः केकराक्ष्यै नमः केकराक्षीमावाहयामि स्था० ॥ भो केकराक्षि इहागच्छ इह तिष्ठ ॥
२३ ॐ भूर्भुवः स्वः बृहत्तुण्डायै नमः बृहत्तुण्डामावाहयामि स्था० ॥ भो बृहत्तुण्डे इहागच्छ इह तिष्ठ ॥
२४ ॐ भूर्भुवः स्वः सुराप्रियायै नमः सुराप्रियामावाहयामि स्थाप० ॥ भो सुराप्रिये इहागच्छ इह तिष्ठ ॥

॥ अथ नैर्ऋते चतुर्थकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

२५ ॐ भूर्भुवः स्वः कपालहस्तायै नमः कपालहस्तामावाह० स्था० ॥ भो कपालहस्ते इहागच्छ इह तिष्ठ ॥
२६ ॐ भूर्भुवः स्वः रक्ताक्ष्यै नमः रक्ताक्षीमावाहयामि स्थापयामि ॥ भो रक्ताक्षि इहागच्छ इह तिष्ठ ॥
२७ ॐ भूर्भुवः स्वः शुक्यै नमः शुकीमावाहयामि स्थापयामि ॥ भो शुकि इहागच्छ इह तिष्ठ ॥
२८ ॐ भूर्भुवः स्वः श्येन्यै नमः श्येनीमावाहयामि स्थापयामि ॥ भो श्येनि इहागच्छ इह तिष्ठ ॥
२९ ॐ भूर्भुवः स्वः कपोतिकायै नमः कपोतिकामावाहयामि स्था० ॥ भो कपोतिके इहागच्छ इह तिष्ठ ॥
३० ॐ भूर्भुवः स्वः पाशहस्तायै नमः पाशहस्तामावाहयामि स्था० ॥ भो पाशहस्ते इहागच्छ इह तिष्ठ ॥
३१ ॐ भूर्भुवः स्वः दण्डहस्तायै नमः दण्डहस्तामावाहयामि स्था० ॥ भो दण्डहस्ते इहागच्छ इह तिष्ठ ॥
३२ ॐ भूर्भुवः स्वः प्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि ॥ भो प्रचण्डे इहागच्छ इह तिष्ठ ॥

हीमा० स्था०। भो वाराहि इहागच्छ इह तिष्ठ॥७॥ तत्पूर्वे—ॐभार्यैदार्योहारम्भ्रभार्याऽ अद्ध्येधम्म्रध्नस्यविष्टपायाभिषेक्तारंपर्यष्टायनाकायपरिवेष्टारंन्देवलोकायपेशितारं म्मनुष्यलोकायप्रकरितारꣳ सर्वेभ्योलोकेभ्य्यऽउपसेक्तारमवऽऋत्यैवधायोपमन्थितारम्मेधायवासः पल्पूलीम्प्रकामायरजयित्रीम् ॥ ३० ॥ ॐ भूर्भुवः स्वः शरभाननायै नमः शरभानननामा० स्था०। भो शरभानने इहागच्छ इह तिष्ठ ॥ ८ ॥

॥ अथ आग्नेय्यां द्वितीयकोष्टस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

आग्नेय्याम् ईशाने-ॐ जिह्वामेभद्रंवाङ्महोमनोमन्युः स्वराड्भामः ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ २० ॥ ॐभूर्भुवः स्वः उलूकिकायै नमः उलूकिकामावाह० स्था० ॥ भो उलूकिके इहागच्छ इह तिष्ठ ॥ ९ ॥ तद्दक्षिणे ॐहिङ्काराय्स्वाहाहिङ्कृताय्स्वाहाक्रन्दतेस्वाहावक्रन्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्रोथायस्वाहागन्धायस्वाहाघ्रातायस्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहासीनाय स्वाहाशयानायस्वाहास्वपतेस्वाहाजाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहाविजृम्भमाणायस्वाहाविचृत्तायस्वाहासꣳहानायस्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा ॥ १२ ॥ ॐ भूर्भुवः स्वः

---

॥ अथ पश्चिमे पञ्चमकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

३३ ॐ भूर्भुवः स्वः चण्डविक्रमायै नमः चण्डविक्रमामावाहयामि स्था० ॥ भो चण्डविक्रमे इहागच्छ इह तिष्ठ ॥
३४ ॐ भूर्भुवः स्वः शिशुघ्न्यै नमः शिशुघ्नीमावाहयामि स्था० ॥ भो शिशुघ्नि इहागच्छ इह तिष्ठ ॥
३५ ॐ भूर्भुवः स्वः पापहन्त्र्यै नमः पापहन्त्रीमावाहयामि स्था० ॥ भो पापहन्त्रि इहागच्छ इह तिष्ठ ॥
३६ ॐ भूर्भुवः स्वः काल्यै नमः कालीमावाहयामि स्थापयामि ॥ भो कालि इहागच्छ इह तिष्ठ ॥
३७ ॐ भूर्भुवः स्वः रुधिरपायिन्यै नमः रुधिरपायिनीमावा० स्था० ॥ भो रुधिरपायिनि इहागच्छ इह तिष्ठ ॥
३८ ॐ भूर्भुवः स्वः वसाधयायै नमः वसाधयामावाहयामि स्थाप० ॥ भो वसाधये इहागच्छ इह तिष्ठ ॥
३९ ॐ भूर्भुवः स्वः गर्भभक्षायै नमः गर्भभक्षामावाहयामि स्थाप० ॥ भो गर्भभक्षे इहागच्छ इह तिष्ठ ॥
४० ॐ भूर्भुवः स्वः शवहस्तायै नमः शवहस्तामावाहयामि स्थाप० ॥ भो शवहस्ते इहागच्छ इह तिष्ठ ॥

॥ अथ वायव्ये षष्ठकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

४१ ॐ भूर्भुवः स्वः आन्त्रमालिन्यै नमः आन्त्रमालिनीमा० स्था० ॥ भो आन्त्रमालिनि इहागच्छ इह तिष्ठ ॥
४२ ॐ भूर्भुवः स्वः स्थूलकेश्यै नमः स्थूलकेशीमावाह० स्था० ॥ भो स्थूलकेशि इहागच्छ इह तिष्ठ ॥
४३ ॐ भूर्भुवः स्वः बृहत्कुक्ष्यै नमः बृहत्कुक्षीमा० स्था० ॥ भो बृहत्कुक्षि इहागच्छ इह तिष्ठ ॥
४४ ॐ भूर्भुवः स्वः सर्पास्यायै नमः सर्पास्यामावा० स्थापयामि ॥ भो सर्पास्ये इहागच्छ इह तिष्ठ ॥
४५ ॐ भूर्भुवः स्वः प्रेतवाहनायै नमः प्रेतवाहनामावा० स्था० ॥ भो प्रेतवाहने इहागच्छ इह तिष्ठ ॥
४६ ॐ भूर्भुवः स्वः दन्दशूककरायै नमः दन्दशूककरामा० स्था० ॥ भो दन्दशूककरे इहागच्छ इह तिष्ठ ॥
४७ ॐ भूर्भुवः स्वः क्रौञ्च्यै नमः क्रौञ्चीमावाहयामि स्थापयामि ॥ भो क्रौञ्चि इहागच्छ इह तिष्ठ ॥
४८ ॐ भूर्भुवः स्वः मृगशीर्षायै नमः मृगशीर्षामा० स्थाप० ॥ भो मृगशीर्षे इहागच्छ इह तिष्ठ ॥

शिवारावायै नमः शिवारावामावा० स्था० । भो शिवारावे इहागच्छ इह तिष्ठ ॥१०॥ तत्पश्चिमे-ॐ अग्निश्च मऽआपश्च मे वीरुधश्च मऽओषधयश्च मे कृष्टपच्याश्च मे कृष्टपच्याश्च मे ग्राम्याश्च मे पशवऽ आरण्याश्च मे वित्तञ्च मे वित्तिश्च मे भूतञ्च मे भूतिश्च मे यज्ञेन कल्पन्ताम् ॥ १९/१८ ॥ ॐ भूर्भुवः स्वः मयूर्यै नमः मयूरीमावाह० स्था० ॥ भो मयूरि इहागच्छ इह तिष्ठ ॥ ११ ॥ तत्पश्चिमे-ॐ पूषन्तव व्रते वयन्न रिष्येम कदाचन ॥ स्तोतारस्तऽइह स्मसि ॥४३/२४॥ ॐ भूर्भुवः स्वः विकटाननायै नमः विकटाननामावा० स्था० ॥ भो विकटानने इहागच्छ इह तिष्ठ ॥१२॥ तदुत्तरे-ॐ वेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम् ॥ यूपेन यूपऽ आप्यते प्रणीतोऽ अग्निरग्निना ॥ १७/१९ ॥ ॐ भूर्भुवः स्वः अष्टवक्रायै नमः अष्टवक्रामावाहयामि स्थापयामि ॥ भो अष्टवक्रे इहागच्छ इह तिष्ठ ॥१३॥ तदुत्तरे-ॐ अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः ॥ मूर्द्धा कवी रयीणाम् ॥ २१/६५ ॥ ॐ भूर्भुवः स्वः कोटराक्ष्यै नमः कोटराक्षीमावा० स्था० ॥ भो कोटराक्षि इहागच्छ इह तिष्ठ ॥ १४ ॥ तत्पूर्वे-ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ २१/१ ॥ ॐ भूर्भुवः स्वः कुब्जायै नमः कुब्जामावा० स्था० ॥ भो कुब्जे इहागच्छ इह तिष्ठ ॥१५॥ तत्पूर्वे-ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ३८/९ ॥ ॐ भूर्भुवः स्वः विकटलोचनायै नमः विकटलोचनामावाहयामि स्थापयामि ॥ भो विकटलोचने इहागच्छ इह तिष्ठ ॥ १६ ॥

॥ दक्षिणस्यां तृतीयकोष्ठकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्-ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः ॥ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः ॥ मित्रावरुणौ त्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽ ईडितः ॥ २/३ ॥ ॐ भूर्भुवः स्वः शुष्कोदर्यै नमः

---

॥ अथ उत्तरे सप्तमकोष्ठके ईशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

४९ ॐ भूर्भुवः स्वः श्वाननायै नमः श्वाननामा० स्थाप० ॥ भो श्वानने इहागच्छ इह तिष्ठ ॥
५० ॐ भूर्भुवः स्वः व्यात्तास्यायै नमः व्यात्तास्यामावाह० स्था० ॥ भो व्यात्तास्ये इहागच्छ इह तिष्ठ ॥
५१ ॐ भूर्भुवः स्वः धूम्रनिःश्वासायै नमः धूम्रनिःश्वासामावा० स्था० ॥ भो धूम्रनिःश्वासे इहागच्छ इह तिष्ठ ॥
५२ ॐ भूर्भुवः स्वः व्योमैकचरणोर्ध्वदृशे नमः व्यो० दृशमा० स्था० ॥ भो व्योमैकदृक् इहागच्छ इह तिष्ठ ॥
५३ ॐ भूर्भुवः स्वः तापिन्यै नमः तापिनीमावाहयामि स्था० ॥ भो तापिनि इहागच्छ इह तिष्ठ ॥
५४ ॐ भूर्भुवः स्वः शोषणीदृष्ट्यै नमः शोषणीदृष्टिमावा० स्था० ॥ भो शोषणीदृष्टे इहागच्छ इह तिष्ठ ॥
५५ ॐ भूर्भुवः स्वः कोटर्यै नमः कोटरीमावाहयामि स्थापयामि ॥ भो कोटरि इहागच्छ इह तिष्ठ ॥
५६ ॐ भूर्भुवः स्वः स्थूलनासिकायै नमः स्थूलनासिकामा० स्था० ॥ भो स्थूलनासिके इहागच्छ इह तिष्ठ ॥

शुष्कोदरीमावाह० स्था० ॥ भो शुष्कोदरि इहागच्छ इह तिष्ठ ॥१७॥ तद्दक्षिणे-ॐ मित्रस्य चर्षणीधृतोवो देवस्य सानसि ॥ द्युम्नञ्चित्रश्रवस्तमम् ॥ ६३/११ ॥ ॐ भूर्भुवः स्वः ललजिह्वायै नमः ललजिह्वामावाहयामि स्थापयामि ॥ भो ललजिह्वे इहागच्छ इह तिष्ठ ॥१८॥ तत्पश्चिमे-ॐ अग्नेर्ब्रह्मंगृभ्णीष्वधुरुणमस्यन्तरिक्षन्दृ६ह ब्रह्मवनिंत्वाक्षत्रवनिंसजातवन्युपदधामिभ्रातृव्यस्यवधाय ॥ धर्त्रमसिदिवन्दृ६ह ब्रह्मवनिंत्वाक्षत्रवनिंसजातवन्युपदधामिभ्रातृव्यस्य वधाय॥ विश्वाभ्यस्त्वाशाभ्य-ऽउपदधामि चितस्थोर्ध्वचितो भृगूणामङ्गिरसान्तपसा तप्यध्वम् ॥ १/१८ ॥ ॐ भूर्भुवः स्वः श्वदंष्ट्रायै नमः श्वदंष्ट्रामावा० स्था० ॥ भो श्वदंष्ट्रे इ० इ० ॥ १९ ॥ तत्पश्चिमे-ॐ भगप्रणेतर्भगसत्यराधोभगेमान्धियमुदवाददन्नः ॥ भगप्रनो जनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तः स्याम ॥ ३६/३४ ॥ ॐ भूर्भुवः स्वः वानराननायै नमः वानराननामा० स्था० ॥ भो वान०ने इ० इ० ॥ २०॥ तदुत्तरे-ॐसुपर्णोसिगरुत्मान्पृष्ठेपृथिव्याः सीद ॥ भासान्तरिक्षमापृणज्ज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृ६ह ॥ ७२/१७ ॥ ॐ भूर्भुवः स्वः रुक्षाक्ष्यै नमः रुक्षाक्षीमावाह० स्थाप० ॥ भो रुक्षाक्षि इहागच्छ इह तिष्ठ ॥ २१ ॥ तदुत्तरे-ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाः पितरः सोम्यासः । असुंयऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरोहवेषु ॥ ४९/१९ ॥ ॐ भूर्भुवः स्वः केकराक्ष्यै नमः केकराक्षीमावाह० स्था० ॥ भो केकराक्षि इहागच्छ इह तिष्ठ ॥ २२ ॥ तत्पूर्वे-ॐ वरुणस्योत्तम्भनमसि वरुणस्यस्कम्भसर्जनीस्थो वरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ ३६/४ ॥ ॐ भूर्भुवः स्वः बृहत्तुण्डायै० बृह० आ० स्थाप० ॥ भो बृहत्तुण्डे इ० इ० ॥ २३ ॥ तत्पूर्वे-ॐ वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ॥ करतान्नः सुराधसः ॥ ४६/३३ ॥ ॐ भूर्भुवः स्वः सुराप्रियायै नमः सुराप्रियामावाहयामि स्थापयामि ॥ भो सुराप्रिये इहागच्छ इह तिष्ठ ॥ २४ ॥

---

॥ अथ ईशान्यामष्टमकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

५७ ॐ भूर्भुव स्व विद्युत्प्रभायै नम विद्युत्प्रभामा० स्था० ॥ भो विद्युत्प्रभे इहागच्छ इह तिष्ठ ॥
५८ ॐ भूर्भुव स्व बलाकास्यै नम बलाकास्यामा० स्था० ॥ भो बलाकास्ये इहागच्छ इह तिष्ठ ॥
५९ ॐ भूर्भुव० स्व मार्जार्यै नम मार्जारीमावाहयामि स्थाप० ॥ भो मार्जारि इहागच्छ इह तिष्ठ ॥
६० ॐ भूर्भुवः स्व कटपूतनायै नमः कटपूतनामावाहयामि स्था० ॥ भो कटपूतने इहागच्छ इह तिष्ठ ॥
६१ ॐ भूर्भुव स्व अट्टहासायै नम अट्टहासामा० स्था० ॥ भो अट्टहासे इहागच्छ इह तिष्ठ ॥
६२ ॐ भूर्भुव स्व कामाक्ष्यै नम कामाक्षीमावा० स्थाप० ॥ भो कामाक्षि इहागच्छ इह तिष्ठ ॥
६३ ॐ भूर्भुव स्व मृगाक्ष्यै नमः मृगाक्षीमावाहयामि स्था० ॥ भो मृगाक्षि इहागच्छ इह तिष्ठ ॥
६४ ॐ भूर्भुव स्व मृगलोचनायै नम मृगलोचनामावाह० स्था० ॥ भो मृगलोचने इहागच्छ इह तिष्ठ ॥

॥ नैर्ऋत्यां चतुर्थकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्—ॐ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ ... ॥ ॐ भूर्भुवः स्वः कपालहस्तायै नमः कपालहस्तामावा० स्थाप० ॥ भोक०स्ते इ०इ० ॥ २५ ॥ तद्दक्षिणे—ॐ सुसन्दृशन्त्वावयम्मघवन्वन्दिषीमहि ॥ प्रनूनम्पूर्णबन्धुरस्तुतोयासिवशाँ२ऽअनुयोजान्विन्द्रतेहरी ॥ ... ॥ ॐ भूर्भुवः स्वः रक्ताक्ष्यै नमः रक्ताक्षीमावाह० स्था० ॥ भो रक्ताक्षि इहागच्छ इह तिष्ठ ॥२६॥ तत्पश्चिमे—ॐ प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे त्वा ॥...॥ ॐ भूर्भुवः स्वः शुक्यै नमः शुकीमावाह० स्था० ॥ भो शुकि इहागच्छ इह तिष्ठ ॥ २७ ॥ तत्पश्चिमे—ॐ देवीर्द्वारोऽअश्विनाभिषजेन्द्रेसरस्वती ॥ प्राणन्नवीर्य्यन्नसि द्वारो दधुरिन्द्रियं वसुवने वसुधेयस्य व्यन्तु यज ॥ ... ॥ ॐ भूर्भुवः स्वः श्येन्यै नमः श्येनीमावाह० स्था० ॥ भो श्येनि इहागच्छ इह तिष्ठ ॥ २८ ॥ तदुत्तरे—ॐ देवस्यत्त्वासवितुः प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ... ॥ ॐ भूर्भुवः स्वः कपोतिकायै नमः कपो० आ० स्था० ॥ भो क०के इहागच्छ इह तिष्ठ ॥ २९ ॥ तदुत्तरे—ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यै वाचो यन्तुर्य्यन्त्रेणाग्नेःसाम्राज्येनाभिषिञ्चामि ॥...॥ ॐ भूर्भुवः स्वः पाशहस्तायै नमः पाशहस्तामावाह० स्थाप० ॥ भो पाशहस्ते इहागच्छ इह तिष्ठ ॥ ३० ॥ तत्पूर्वे—ॐ भुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिः सचसेशिवाभिः ॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्नेचकृषेहव्यवाहम् ॥ ... ॥ ॐ भूर्भुवः स्वः दण्डहस्तायै नमः दण्डहस्तामावाह० स्थाप० ॥ भो दण्डहस्ते इहागच्छ इह तिष्ठ ॥ ३१ ॥ तत्पूर्वे—ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽ इन्नु ते दानन्देवस्य पृच्यते ॥ ... ॥ ॐ भूर्भुवः स्वः प्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि ॥ भो प्रचण्डे इहागच्छ इह तिष्ठ ॥ ३२ ॥

॥ पश्चिमायां पञ्चमकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्—ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँय्यदायुः ॥...॥ ॐ भूर्भुवः स्वः चण्डविक्रमायै नमः चण्डविक्रमामावाह० स्थाप० ॥ भो चण्डविक्रमे इहागच्छ इह तिष्ठ ॥ ३३ ॥ तद्दक्षिणे—ॐ इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविताप्रार्प्पयतु

श्रेष्ठतमाय कर्म्मणऽ आप्यायद्ध्वमघ्न्याऽ इन्द्राय भागम्प्रजावतीरनमीवाऽ अयक्ष्मा मा वस्तेनऽ ईशतमाघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह्वीर्य्यजे मानस्य पशून्पाहि ॥१॥ ॐभूर्भुवः स्वः शिशुघ्न्यै नमः शिशुघ्नीमावाह० स्थाप० ॥ भो शिशुघ्नि इहागच्छ इह तिष्ठ ॥ ३४ ॥ तत्पश्चिमे—ॐ देवीं द्यावापृथिवी मखस्य वामद्य शिरो राध्यासन्देवयजने पृथिव्याः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ३७ ॥ ॐ भूर्भुवः स्वः पापहन्त्र्यै नमः पापहन्त्रीमावाहयामि स्था० ॥ भो पापहन्त्रि इहागच्छ इह तिष्ठ ॥ ३५ ॥ तत्पश्चिमे—ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातेऽइत्यानमोदेविनिर्ऋते तुब्भ्यमस्तु ॥ ६३/१२ ॥ ॐ भूर्भुवः स्वः काल्यै नमः कालीमावाह० स्थाप० ॥ भो कालि इहागच्छ इह तिष्ठ ॥३६॥ तदुत्तरे—ॐविश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ३/३० ॥ ॐ भूर्भुवः स्वः रुधिरपायिन्यै नमः रुधिरपायिनीमावाह० स्थाप० ॥ भो रुधिरपायिनि इहागच्छ इह तिष्ठ ॥ ३७ ॥ तदुत्तरे—ॐ अग्निश्चमेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्राणश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयः शक्करयोदिशश्चमे यज्ञेन कल्पन्ताम् ॥ २२/१८ ॥ ॐ भूर्भुवः स्वः वसाधयायै० वसाधयामा० स्था० ॥ भो वसाधये इहागच्छ इह तिष्ठ ॥३८॥ तत्पूर्वे—ॐबह्वीनाम्पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य ॥ इषुधिःसङ्काः पृतनाश्चसर्वाः पृष्टेनिनद्धोजयतिप्प्रसूतः ॥ २९/१ ॥ ॐ भूर्भुवः स्वः गर्भभक्षायै नमः गर्भभक्षामावा० स्था० ॥ भो गर्भभक्षे इहागच्छ इह तिष्ठ ॥३९॥ तत्पूर्वे—ॐ नमस्ते रुद्रमन्यवऽउतो तऽइषवेनमः ॥ बाहुब्भ्यामुतते नमः ॥१६॥ ॐभूर्भुवः स्वः शवहस्तायै नमः शवहस्तामावाहयामि स्थापयामि ॥ भो शवहस्ते इहागच्छ इह तिष्ठ ॥ ४० ॥

॥ वायव्यां षष्ठकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्—ॐ ऋतवस्तेयज्ञंवितन्वन्तुमासारक्षन्तुतेहविः ॥ सँवत्सरस्तेयज्ञन्दधातुनःप्प्रजाम्परिपातुनः ॥ २१/१ ॥ ॐभूर्भुवः स्वः आन्त्रमालिन्यै नमः आन्त्रमालिनीमा० स्था० ॥ भो आन्त्रमालिनि इहागच्छ इह तिष्ठ ॥४१॥ तद्दक्षिणे—ॐतेऽआचरन्तीसमनेवयोषामातेवपुत्रम्बिभृतामुपस्थे ॥ अपशत्रून्विद्ध्यताꣳ सँविदानेऽआर्त्नीऽइमेविष्फुरन्तीऽअमित्रान् ॥ २९/१ ॥ ॐ भूर्भुवः स्वः स्थूलकेश्यै नमः स्थूलकेशीमा० स्था० ॥ भो स्थूलकेशि इहागच्छ इह तिष्ठ ॥ ४२ ॥ तत्पश्चिमे—ॐवेद्या वेदिःसमाप्प्यतेबर्हिषाबर्हिरिन्द्रियम् ॥ यूपेनयूपऽआप्प्यतेप्प्रणीतोऽअग्निरग्निना ॥ १९/१ ॥ ॐ भूर्भुवः स्वः बृहत्कुक्ष्यै नमः बृहत्कुक्षीमावाह० स्थाप० ॥

भो बृहत्कुक्षि इहागच्छ इह तिष्ठ ॥ ४३ ॥ तत्पश्चिमे—ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञं वष्टु धियावसुः ॥ ६१ ॥ ॐ भूर्भुवः स्वः सर्पास्यायै नमः सर्पास्यामावाह० स्थाप० ॥ भो सर्पास्ये इहागच्छ इह तिष्ठ ॥४४॥ तदुत्तरे—ॐ अस्कन्नमद्य देवेभ्यऽ आज्यꣳ सम्भ्रियासमङ्घ्रिणाविष्णोमात्वावक्रमिषं वसुमतीमग्नेतेच्छायामुपस्थेषंविष्णोस्थानमसीतऽइन्द्रो वीर्य्यमकृणोदूर्ध्वोऽध्वरऽआस्थात् ॥६॥ ॐ भूर्भुवः स्वः प्रेतवाहनायै नमः प्रेतवाहनामावाह० स्थाप० ॥ भो प्रेतवाहने इहागच्छ इह तिष्ठ ॥४५॥ तदुत्तरे—ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ ३६ ॥ ॐ भूर्भुवः स्वः दन्दशूककरायै नमः दन्दशूककरामावाह० स्थाप० ॥ भो दन्दशूककरे इहागच्छ इह तिष्ठ ॥ ४६ ॥ तत्पूर्वे—ॐ मही द्यौः पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ३२ ॥ ॐ भूर्भुवः स्वः क्रौञ्च्यै नमः क्रौञ्चीमावाहयामि स्थापयामि ॥ भो क्रौञ्चि इहागच्छ इह तिष्ठ ॥ ४७ ॥ तत्पूर्वे—ॐ उपयाम गृहीतोसि हरिरसिहारियोजनोहरिभ्यान्त्वा ॥ हर्य्योर्द्धानास्त्थसहसोमाऽइन्द्राय ॥ ३२ ॥ ॐ भूर्भुवः स्वः मृगशीर्षायै नमः मृगशीर्षामावाहयामि स्थापयामि ॥ भो मृगशीर्षे इहागच्छ इह तिष्ठ ॥ ४८ ॥

॥ उत्तरस्यां सप्तमकोष्टकस्येशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ईशान्याम्—ॐ आप्यायस्वसमेतुतेविश्श्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ ११२ ॥ ॐ भूर्भुवः स्वः वृषाननायै नमः वृषाननामावाह० स्थाप० ॥ भो वृषानने इहागच्छ इह तिष्ठ ॥४९॥ तद्दक्षिणे—ॐकार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ २८ ॥ ॐ भूर्भुवः स्वः व्यात्तास्यायै नमः व्यात्तास्यामावाहयामि स्था० ॥ भो व्यात्तास्ये इहागच्छ इह तिष्ठ ॥५०॥ तत्पश्चिमे—ॐत्र्यम्बकँयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ६० ॥ ॐ भूर्भुवः स्वः धूमनिःश्वासायै नमः धूमनिःश्वासामावाहयामि स्थापयामि ॥ भो धूमनिःश्वासे इहागच्छ इह तिष्ठ ॥५१॥ तत्पश्चिमे—ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणि रूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ २२ ॥ ॐ भूर्भुवः स्वः व्योमैकचरणोर्ध्वदृशे नमः व्योमैकचरणोर्ध्वदृशमावाहयामि स्थाप० ॥ भो व्योमैकचरणोर्ध्वदृक् इहागच्छ इह तिष्ठ ॥५२॥ तदुत्तरे—ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ २१ ॥ ॐ भूर्भुवः

स्वः तापिन्यै नमः तापिनीमावा० स्था० ॥ भो तापिनि इहागच्छ इह तिष्ठ ॥ ५३॥ तदुत्तरे—ॐ ब्राह्मणमद्य विदेयम्पितृमन्तम्पैतृमत्त्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ॥ अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ ७/६ ॥ ॐ भूर्भुवः स्वः शोषणी-दृष्ट्यै नमः शोषणीदृष्टिमावाहयामि स्थापयामि ॥ भो शोषणीदृष्टे इहागच्छ इह तिष्ठ ॥ ५४ ॥ तत्पूर्वे—ॐ या व्याघ्रं विषूचिकोभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ हꣳसः ॥ ३/६ ॥ ॐ भूर्भुवः स्वः कोटर्यै नमः कोटरीमावाहयामि स्थापयामि ॥ भो कोटरि इहागच्छ इह तिष्ठ ॥ ५५ ॥ तत्पूर्वे—ॐ एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च च मे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मऽ एकादश च मऽ एकादश च मे त्रयोदश च मे त्रयोदश च मे पञ्चदश च मे पञ्चदश च मे सप्तदश च मे सप्तदश च मे नवदश च मे नवदश च मऽ एकविꣳशतिश्च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे त्रयोविꣳशतिश्च च मे पञ्चविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च मे नवविꣳशतिश्च मऽ एकत्रिꣳशच्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च मे यज्ञेन कल्पन्ताम् ॥ ३/६ ॥ ॐ भूर्भुवः स्वः स्थूलनासिकायै नमः स्थूलनासिकामावाहयामि स्था० ॥ भो स्थूलनासिके इहागच्छ इह तिष्ठ ॥ ५६ ॥

॥ ईशान्यामष्टमकोष्टके ईशानतः प्रादक्षिण्येनाष्टयोगिनीदेवतास्थापनम् ॥

ॐ ईशान्याम्—ब्रह्माणिमेमतयꣳशꣳसुतासः शुष्म्मऽइयर्त्तिप्रभृतोमेऽअद्रिः ॥ आशासतेप्रतिहर्य्यन्त्युक्थेमाहरीवहतस्तानोऽअच्छ ॥ ३/६ ॥ ॐ भूर्भुवः स्वः विद्युत्प्रभायै नमः विद्युत्प्रभामा० स्था० ॥ भो विद्युत्प्रभे इहागच्छ इह तिष्ठ ॥ ५७ ॥ तद्दक्षिणे—ॐ अग्नेयुक्ष्वाहियेतवाश्वा सोदेवसाधवः ॥ अरं वहन्ति मन्यवे ॥ ३/३ ॥ ॐ भूर्भुवः स्वः वलाकास्यायै नमः वलाकास्यामावाहयामि स्थापयामि ॥ भो वलाकास्ये इहागच्छ इह तिष्ठ ॥ ५८ ॥ तत्पश्चिमे—ॐ सुपर्णोसिगरुत्मान्पृष्ठेपृथिव्याः सीद ॥ भासान्तरिक्षमापृणज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृꣳह ॥ ९/३ ॥ ॐ भूर्भुवः स्वः मार्जार्यै नमः मार्जारीमावाहयामि स्थापयामि ॥ भो मार्जारि इहागच्छ इह तिष्ठ ॥ ५९ ॥ तत्पश्चिमे—ॐ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि ॥ १/२ ॥ ॐ भूर्भुवः स्वः कटपूतनायै नमः कटपूतनामावाहयामि स्थापयामि ॥ भो कटपूतने इहागच्छ इह तिष्ठ ॥ ६० ॥ तदुत्तरे—ॐ देवीद्यावापृथिवीमखस्यवामद्यशिरोराद्ध्यासन्देवयजने पृथिव्याः ॥ मखायत्वा मखस्यत्वा शीर्ष्णे ॥ १/७ ॥ ॐ भूर्भुवः स्वः अट्टाट्टहासायै नमः अट्टाट्टहासा-

मा० स्था० ॥ भो अट्टाट्टहासे इहागच्छ इह तिष्ठ ॥६१॥ तदुत्तरे-ॐइदंविष्णुर्विच- क्रमेत्रेधा निदधे पदम्॥ समूढमस्य पाᳯसुरे स्वाहा ॥ ५/१५॥ ॐभूर्भुवः स्वः कामाक्ष्यै नमः कामाक्षीमावाहयामि स्थापयामि ॥ भो कामाक्षि इहागच्छ इह तिष्ठ ॥ ६२ ॥ तत्पूर्वे–ॐ वृष्ण्णऽऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहा वृष्ण्णऽऊर्म्मिरसिराष्ट्रदारा- ष्ट्रममुष्म्मै देहिवृषसेनोसि राष्ट्रदाराष्ट्रम्मे देहि स्वाहा वृषसेनोसिराष्ट्रदाराष्ट्रममुष्म्मै देहि॥ १०/३॥ॐभूर्भुवः स्वः मृगाक्ष्यै नमः मृगाक्षीमावाहयामि स्थापयामिभो॥ मृगाक्षि इहागच्छ इह तिष्ठ ॥ ६३ ॥ तत्पूर्वे–ॐ भायैदार्वाहारम्प्रभायांऽअग्न्येधम्न्र- भस्यविष्टपायाभिषेक्तारंवर्षिष्ठायनाकायपरिवेष्टारन्देवलोकायपेशितारम्मनुष्यलोका- यप्रकरितारᳯसर्वेब्भ्यो लोकेब्भ्यऽ उपसेक्तारमवऽऋत्यैवधायोपमन्थितारम्मेधा- यवासᳯ पल्पूलीम्प्रकामायरजयित्रीम् ॥ ३०/१२ ॥ ॐ भूर्भुवः स्वः मृगलोचनायै नमः मृगलोचनामा० स्था० ॥ भो मृगलोचने इहागच्छ इह तिष्ठ ॥ ६४ ॥

ततः प्रतिष्ठापनम् ॥ ॐमनोजूतिर्जु॰ ॥ श्रीमहाकालीमहालक्ष्मीमहा- सरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिन्यः सुप्रतिष्ठिता वरदा भवत ॥ पुनर्हस्ते- ऽक्षतानादाय ॥ आसनम् ॥ ॐ पुरुषऽएवे० ॥ ३१/२ ॥ ॐ भूर्भुवः स्वः श्रीम- हाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः आस- नार्थे अक्षतान् सम० ॥ ततः पाद्यम् ॥ ॐ एतावा० ॥ ३१/३ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः पादयोः पाद्यं सम० ॥ ततः अर्घ्यम् ॥ एकस्मिन्नर्घपात्रे गन्धाक्षतपुष्पसहितं जलं गृहीत्वा तत्र पूगीफलं हिरण्यञ्च प्रक्षिप्य हस्ते गृहीत्वा ॥ ॐ त्रिपादू० ॥ ३१/४ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियो- गिनीभ्यो नमः हस्तयोरर्घ्यं सम० ॥ तत आचमनीयम् ॥ ॐ ततो वि० ॥ ३१/५ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियो- गिनीभ्यो नमः आचमनीयं सम० ॥ स्नानम् ॥ तस्माद्य० ॥ ३१/६ ॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः स्नानं सम० ॥ ततः पञ्चामृतस्नानम् ॥ एकतन्त्रेण पञ्चामृतं गृहीत्वा। ॐ पञ्च- नद्यᳯ० । श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगि- नीभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ ६ ॥ शुद्धोदकस्नानम् ॥ ॐ शुद्धवालᳯ सर्व० ॥ २४/४ ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियो- गिनीभ्यो नमः शुद्धोदकस्नानं समर्पयामि ॥ ७ ॥ ततो वस्त्रम् ॥ ॐ सुजातो- ज्यो० ॥ ११/१ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वक-

गजाननादिचतुःषष्टियोगिनीभ्यो नमः वस्त्रोपवस्त्रे समर्पयामि ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥ यज्ञोपवीतम् । ॐयज्ञोपवीतं० । ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः यज्ञोपवीतं सम० ॥ गन्धम् ॥ ॐ त्वाङ्गन्धर्वा० ॥१२/२६॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः गन्धं समर्पयामि ॥ कुङ्कुमम् ॥ ॐस्वस्तिन० ॥ २५/१९ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः कुङ्कुमं सम० ॥ अक्षतान् ॥ ॐ अक्षन्नमीम० ॥ ३/५२ ॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः अक्षतान् समर्पयामि ॥ पुष्पाणि ॥ ॐ ओषधीः प्रति० ॥१२/७७॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः ऋतुकालोद्भवानि यथालाभोपपन्नानि पुष्पाणि सम०॥ सौभाग्यपरिमलद्रव्यम् ॥ ॐ अहिरिवभोगैः० ॥२९/५१॥ ॐभूर्भुवःस्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः सौभाग्यपरिमलद्रव्याणि समर्पयामि ॥ धूपम् ॥ ॐ धूरसि धूर्वधूर्व० ॥१/८॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः धूपमाघ्रापयामि ॥ दीपम् ॥ ॐ अग्निर्ज्यो० ॥३/९॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐ अन्नपतेन्न० ॥ ११/८३॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः नैवेद्यं सम० ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य वामहस्तं पद्माकारं कृत्वा दक्षहस्तेन ग्रासमुद्राः प्रदर्शयेत् ॥ॐ प्राणाय स्वाहा ॥ॐ अपानाय स्वाहा ॥ ॐव्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ नैवेद्यमध्ये पानीयं समर्प० ॥ उत्तरापोशनं स० । हस्तप्रक्षालनं स० । मुखप्रक्षालनं स० । करोद्वर्तनार्थे गन्धं सम० । मुखवासार्थे पूगीफलम् ॥ ॐ याः फलिनीर्या० ॥ १२/८९ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः मुखवासार्थे पूगीफलं समर्पयामि ॥ ताम्बूलम् ॥ ॐउतस्मा० ॥ २३/३२॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः ताम्बूलं सम० ॥ दक्षिणाम् ॥ ॐ हिरण्यगर्भः० ॥ १३/४ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगि-

नीभ्यो नमः यथाशक्ति दक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य गन्धाक्षतपुष्पैः संपूज्य आरार्तिक्यं कुर्यात् ॥ ॐ अग्निर्देवता० ॥ २० ॥ ॐ ये देवासो० ॥ ६ ॥ सर्वमङ्गल० ॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः आरार्तिक्यं सम० ॥ जलेन प्रदक्षिणां समर्प० ॥ पुष्पैर्देववन्दनम् । हस्तेनात्मवन्दनं कृत्वा हस्तं प्रक्षाल्य ॥ मन्त्रपुष्पाञ्जलिम् ॥ ॐ अम्बेऽअम्बिके० ॥ २६ ॥ ॐ यज्ञेन० ॥ ३६ ॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्प० ॥ प्रदक्षिणाम् ॥ ॐ सप्तास्या० ॥ ३५ ॥ ॐ भूर्भुवः स्वः महाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः प्रदक्षिणां सम० ॥ विशेषार्घः ॥ एकस्मिन्पात्रे जलं गन्धाक्षतपुष्पाणि पूगीफलं हिरण्यञ्च प्रक्षिप्य तदुपरि नारिकेलादिकं निधाय हस्तयोर्गृहीत्वा ॥ इदं फलं मया देवि स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ रूपं देहि जयं देहि भाग्यं भगवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः विशेषार्घं समर्पयामि ॥ स्तुतिपाठः ॥ ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ १ ॥ रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ॥ ज्योत्स्नायै चेन्दुरूपिण्यै शिवायै सततं नमः ॥ कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः ॥ नैर्ऋत्यै भूभृतां लक्ष्म्यै सर्वाण्यै ते नमो नमः ॥ दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ॥ ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ अतिसौम्यातिरुद्रायै नतास्तस्यै नमो नमः ॥ नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः स्तुतिपाठं समर्पयामि ॥ प्रार्थयेत् ॥ यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः ॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ हस्ते जलं गृहीत्वा ॥ अनेन यथाशक्ति ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च कृतेन पूजनेन ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिन्यः प्रीयन्तां न मम ॥

॥ इति योगिनीदेवतापूजनप्रयोगः समाप्तः ॥



गजाननादिचतुःषष्टियोगिनीभ्यो नमः वस्त्रोपवस्त्रे समर्पयामि ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥ यज्ञोपवीतम् । ॐयज्ञोपवीतं० । ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः यज्ञोपवीतं सम० ॥ गन्धम् ॥ ॐ त्वाङ्गन्धर्वा० ॥ १६ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः गन्धं समर्पयामि ॥ कुङ्कुमम् ॥ ॐस्वस्तिन० ॥ २५ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः कुङ्कुमं सम० ॥ अक्षतान् ॥ ॐ अक्षन्नमीम० ॥ ३ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः अक्षतान् समर्पयामि ॥ पुष्पाणि ॥ ॐ ओषधीः प्रति० ॥ १२ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः ऋतुकालोद्भवानि यथालाभोपपन्नानि पुष्पाणि सम० ॥ सौभाग्यपरिमलद्रव्यम् ॥ ॐ अहिरिवभोगैः० ॥ २९ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः सौभाग्यपरिमलद्रव्याणि समर्पयामि ॥ धूपम् ॥ ॐ धूरसि धूर्वधूर्व० ॥ १ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः धूपमाघ्रापयामि ॥ दीपम् ॥ ॐ अग्निर्ज्योति० ॥ ३ ॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐ अन्नपतेन्न० ॥ ११ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः नैवेद्यं सम० ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य वामहस्ते पद्माकारं कृत्वा दक्षहस्तेन ग्रासमुद्राः प्रदर्शयेत् ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐव्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ नैवेद्यमध्ये पानीयं समर्प० ॥ उत्तरापोशनं स० । हस्तप्रक्षालनं स० । मुखप्रक्षालनं स० । करोद्वर्तनार्थे गन्धं सम० । मुखवासार्थं पूगीफलम् ॥ ॐ याः फलिनीर्या० ॥ १२ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः मुखवासार्थे पूगीफलं समर्पयामि ॥ ताम्बूलम् ॥ ॐ उतस्मा० ॥ १ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः ताम्बूलं सम० ॥ दक्षिणाम् ॥ ॐ हिरण्यगर्भः० ॥ ४ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगि-

नीभ्यो नमः यथाशक्ति दक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य गन्धाक्षतपुष्पैः संपूज्य आरार्तिक्यं कुर्यात् ॥ ॐ अग्निर्देवता० ॥ २०/१४ ॥ ॐ ये देवासो० ॥ १/७ ॥ सर्वमङ्गल० ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः आरार्तिक्यं सम० ॥ जलेन प्रदक्षिणां समर्प० ॥ पुष्पैर्देववन्दनम् । हस्तेनात्मवन्दनं कृत्वा हस्तं प्रक्षाल्य ॥ मन्त्रपुष्पाञ्जलिम् ॥ ॐ अम्बेऽअम्बिके० ॥ ३/२३ ॥ ॐ यज्ञेन० ॥ ३१/१६ ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्प० ॥ प्रदक्षिणाम् ॥ ॐ सप्तास्या० ॥ ३१/१५ ॥ ॐ भूर्भुवः स्वः महाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः प्रदक्षिणां सम० ॥ विशेषार्घः ॥ एकस्मिन्पात्रे जलं गन्धाक्षतपुष्पाणि पूगीफलं हिरण्यञ्च प्रक्षिप्य तदुपरि नारिकेलादिकं निधाय हस्तयोर्गृहीत्वा ॥ इदं फलं मया देवि स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ रूपं देहि जयं देहि भाग्यं भगवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः विशेषार्घं समर्पयामि ॥ स्तुतिपाठः ॥ ॐ नमो देव्यै महादेव्यै शिवायै सततं नमः ॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ १ ॥ रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः ॥ ज्योत्स्नायै चेन्दुरूपिण्यै शिवायै सततं नमः ॥ कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कूर्म्यै नमो नमः ॥ नैर्ऋत्यै भूभृतां लक्ष्म्यै सर्वाण्यै ते नमो नमः ॥ दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै ॥ ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः ॥ अतिसौम्यातिरुद्रायै नतास्तस्यै नमो नमः ॥ नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः ॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिनीभ्यो नमः स्तुतिपाठं समर्पयामि ॥ प्रार्थयेत् ॥ यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः ॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ हस्ते जलं गृहीत्वा ॥ अनेन यथाशक्ति ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च कृतेन पूजनेन ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीपूर्वकगजाननादिचतुःषष्टियोगिन्यः प्रीयन्तां न मम ॥

॥ इति योगिनीदेवतापूजनप्रयोगः समाप्तः ॥



॥ अथैकपञ्चाशत्क्षेत्रपालदेवतापूजनप्रयोगः ॥

वायव्यां द्वादशाङ्गुलोच्चे चतुर्विंशत्यङ्गुलसमचतुरस्रे क्षेत्रपालपीठे पश्चिमत आरभ्य प्रागन्ता उदक्संस्था दक्षिणत आरभ्य उदगन्ता प्राक्संस्थाश्चतस्रः सूत्रपातेन रेखाः कृत्वा नवकोष्टानि कारयेत्॥ तत्र मध्यचतुरस्रे कोष्टके शुक्लैस्तण्डुलैरष्टदलं विधाय पूर्वचतुरस्रे षड्दलं पद्मम् आग्नेये षड्दलं पद्मं दक्षिणे षड्दलं पद्मं नैर्ऋत्ये षड्दलं पद्मं पश्चिमे षड्दलं पद्मं वायव्ये षड्दलं पद्मम् उत्तरे सप्तदलं पद्मम् ईशाने सप्तदलं पद्मम् एवम् अष्टौ पद्मानि कृत्वा सर्वेषु पद्मेषु ईशानतः प्रादक्षिण्येन अजरादीन्स्थापयेत् ॥ तत्रादौ तेषु नवकोष्टकेषु मध्यकोष्टके कलशं संस्थाप्य तदुपरि क्षेत्रपालं स्थापयित्वा कोष्टान्तरेषु ततोऽजरादीन्स्थापयेत् ॥




ततः सपत्नीको यजमानः क्षेत्रपालस्य पीठसमीपे उदङ्मुखः पश्चिमाभिमुखो वा उपविश्य आचमनं प्राणायामं च कुर्यात्॥ ततो हस्ते जलं गृहीत्वा अद्यपूर्वोच्चारित० एवं शुभपुण्यतिथौ प्रारब्धस्य सग्रहमखगायत्रीपुरश्चरणकर्मणोऽङ्गतया

अस्मिन्क्षेत्रपालपीठे मध्यकोष्ठके क्षेत्रपालपूजनपूर्वकं कोष्ठान्तरेषु पञ्चाशत्क्षेत्रपालानां पूजनं करिष्ये ॥ क्षेत्रपालपीठे मध्यकोष्टके क्षेत्रपालस्य कृताग्युत्तारणां सुवर्णनिर्मितां क्षेत्रपालप्रतिमां निधाय तत्र क्षेत्रपालमावाहयेत् ॥ हस्तेऽक्षतान्गृहीत्वा ॥ ॐनमोऽस्तुसर्प्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः ॥ ॥ ॐभूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालम् आवाहयामि स्थापयामि ॥ भो क्षेत्रपाल इहागच्छ इह तिष्ठ ॥ १ ॥

॥ पूर्वदिक्चतुरस्रे षड्दले पद्मे ईशानतः प्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतास्थापनम् ॥

ॐपावकया यश्चितयन्त्या कृपा क्षामन्रुरुचऽउपसो नभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयो घृणेनततृषाणोऽअजरः ॥ ॥ ॐभूर्भुवः स्वः अजराय नमः अजरमावाहयामि स्था० ॥ भो अजर इहागच्छ इह तिष्ठ ॥१॥ ॐप्रथमा वांᳬसरथिनासुवर्णादेवौपश्यन्तौभुवनानि विश्वा ॥ अपिप्प्रयञ्चोदना वाम्मिमानाहोतारा ज्योतिः प्प्रदिशादिशन्ता ॥ ॥ ॐभूर्भुवः स्वः व्यापकाय नमः व्यापकमा० स्था० ॥ भो व्यापक इहागच्छ इह तिष्ठ ॥ २ ॥ ॐइन्द्रस्य वज्रो मरुतामनीकम्मित्रस्यगर्भोवरुणस्यनाभिः॥ सेमान्नोहव्यदातिञ्जुषाणोदेवरथप्प्रतिहव्यागृभाय ॥ ॥ ॐभूर्भुवः स्वः इन्द्रचौराय नमः इन्द्रचौरमावाहयामि स्थापयामि ॥ भो इन्द्रचौर इहागच्छ इह तिष्ठ ॥ ३ ॥ ॐ एवेदिन्द्रंवृषणंवज्रबाहुंवसिष्ठासोऽअभ्यर्चन्त्यर्कैः॥सनःस्तुतोवीरवद्धातुगोमद्यूयम्पातस्वस्तिभिः सदानः॥ ॥ ॐभूर्भुवः स्वः इन्द्रमूर्तये नमः इन्द्रमूर्तिमावाहयामि स्था० ॥ भो इन्द्रमूर्ते इहागच्छ इह तिष्ठ ॥ ४ ॥ ॐउक्षासमुद्रोऽअरुणः सुपर्णः पूर्वस्य योनिम्पितुराविवेश ॥ मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ ॥ ॥ ॐभूर्भुवः स्वः उक्षाय नमः उक्षमावाहयामि स्थापयामि ॥ भो उक्ष इहागच्छ इह तिष्ठ ॥ ५ ॥ ॐयद्देवादेवहेडनन्देवासश्चकृमावयम्॥ अग्निर्म्मातस्मादेनसोविश्वान्मुञ्चत्वᳬहसः

---

१ अथ मध्यचतुरस्रेऽष्टदलपद्मे क्षेत्रपालमूर्तिं निधाय क्षेत्रपालं स्थापयेत् ॥

१ ॐ भूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥ भो क्षेत्रपाल इहागच्छ इह तिष्ठ ॥

॥ पूर्वदिक्चतुरस्रे षड्दले पद्मे ईशानतः प्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतास्थापनम् ॥

१ ॐ भूर्भुवः स्वः अजराय नमः अजरमावाहयामि स्थापयामि ॥ भो अजर इहागच्छ इह तिष्ठ ॥

२ ॐ भूर्भुवः स्वः व्यापकाय नमः व्यापकमावाहयामि स्थापयामि ॥ भो व्यापक इहागच्छ इह तिष्ठ ॥

३ ॐ भूर्भुवः स्वः इन्द्रचौराय नमः इन्द्रचौरमावाहयामि स्थापयामि ॥ भो इन्द्रचौर इहागच्छ इह तिष्ठ ॥

४ ॐ भूर्भुवः स्वः इन्द्रमूर्तये नमः इन्द्रमूर्तिमावाहयामि स्थापयामि ॥ भो इन्द्रमूर्ते इहागच्छ इह तिष्ठ ॥

५ ॐ भूर्भुवः स्वः उक्षाय नमः उक्षमावाहयामि स्थापयामि ॥ भो उक्ष इहागच्छ इह तिष्ठ ॥

६ ॐ भूर्भुवः स्वः कूष्माण्डाय नमः कूष्माण्डमावाहयामि स्थापयामि ॥ भो कूष्माण्ड इहागच्छ इह तिष्ठ ॥

॥ १४/२० ॥ ॐभूर्भुवः स्वः कूष्माण्डाय नमः कूष्माण्डमावाहयामि स्थापयामि ॥ भो कूष्माण्ड इहागच्छ इह तिष्ठ ॥ ६ ॥

आग्नेयदिक्चतुरस्रे षड्दले पद्मे ईशानतः प्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतास्थापनम्॥

ॐइमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके ॥ १/२१ ॥ ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥७॥ ॐनहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽ एतारमग्नेः॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरङ्क्षैत्रजित्त्यायदेवाः॥ ६०/३३ ॥ ॐभूर्भुवः स्वः वटुकाय नमः वटुकमावाहयामि स्थापयामि ॥ भो वटुक इहागच्छ इह तिष्ठ ॥ ८ ॥ ॐमुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ॥ अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥ ९०/१२ ॥ ॐभूर्भुवः स्वः विमुक्ताय नमः विमुक्तमावाहयामि स्थापयामि ॥ भो विमुक्त इहागच्छ इह तिष्ठ ॥ ९ ॥ ॐकुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतꣳ समाः ॥ एवन्त्वयिनान्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥ २/४० ॥ ॐभूर्भुवः स्वः लिप्तकायाय नमः लिप्तकायमावा० स्थाप० ॥ भो लिप्तकाय इहागच्छ इह तिष्ठ ॥१०॥ ॐ अर्म्मेभ्योहस्तिपञ्जवायाश्वपम्पुष्ट्यैगोपालंवीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशंकीलालायसुराकारम्भद्रायगृहपꣳश्रेयसेवित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥ ११/३० ॥ ॐभूर्भुवः स्वः लीलाकाय नमः लीलाकमा० स्था० ॥ भो० लीलाक इहागच्छ इह तिष्ठ ॥ ११ ॥ ॐ सुपर्णंवस्तेमृगोऽअस्यादन्तोगोभिः सन्नद्धापतति प्रसूता ॥ यत्रानरः सञ्चविचद्रवन्तितत्रास्मभ्यमिषवः शर्म्मयꣳसन् ॥ ४८/२९ ॥ ॐ भूर्भुवः स्वः एकदंष्ट्राय नमः एकदंष्ट्रमावाहयामि स्थापयामि ॥ भो एकदंष्ट्र इहागच्छ इह तिष्ठ ॥ १२ ॥

दक्षिणदिक्चतुरस्रे षड्दले पद्मे ईशानतःप्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतास्थापनम्॥

ॐ प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णो मनुष्यराजाय मर्कटः शार्दूलाय रोहिदृषभाय गवयी क्षिप्रश्येनाय वर्तिका नीलङ्गोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती ॥ ३०/२४ ॥ ॐ भूर्भुवः स्वः ऐरावताय नमः

॥ आग्नेयदिक्चतुरस्रे षड्दले पद्मे ईशानतः प्रदक्षिणक्रमेण षट्क्षेत्रपालदेवतास्थापनम् ॥

७ ॐ भूर्भुव स्व वरुणाय नम वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥

८ ॐ भूर्भुव स्व वटुकाय नम वटुकमावाहयामि स्थापयामि ॥ भो वटुक इहागच्छ इह तिष्ठ ॥

९ ॐ भूर्भुव स्व विमुक्ताय नम विमुक्तमावाहयामि स्थापयामि ॥ भो विमुक्त इहागच्छ इह तिष्ठ ॥

१० ॐ भूर्भुव स्व लिप्तकायाय नम लिप्तकायमावाहयामि स्थापयामि ॥ भो लिप्तकाय इहागच्छ इह तिष्ठ ॥

११ ॐ भूर्भुव स्वः लीलकाय नमः लीलाकमावाहयामि स्थापयामि ॥ भो लीलाक इहागच्छ इह तिष्ठ ॥

१२ ॐ भूर्भुव स्व एकदंष्ट्राय नम एकदंष्ट्रमावाहयामि स्थापयामि ॥ भो एकदंष्ट्र इहागच्छ इह तिष्ठ ॥

ऐरावतमावाहयामि स्थापयामि ॥ भो ऐरावत इहागच्छ इह तिष्ठ ॥ १३ ॥ ॐ ओषधयुः समवदन्तसोमेनसुहराज्ञा ॥ यस्मैकृणोतिब्राह्मणस्तᳬ राजन्पारयामसि ॥ ९६ ॥ ॐ भूर्भुवः स्वः ओषधिघ्नाय नमः ओषधिघ्नमावाहयामि स्थापयामि ॥ भो ओषधिघ्न इहागच्छ इह तिष्ठ ॥ १४ ॥ ॐ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ६० ॥ ॐ भूर्भुवः स्वः बन्धनाय नमः बन्धनमावाहयामि स्थापयामि ॥ भो बन्धन इहागच्छ इह तिष्ठ ॥ १५ ॥ ॐ देवसवितः प्रसुवयज्ञम्प्रसुवयज्ञपतिम्भगाय ॥ दिव्योगन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्व्वाचन्नः स्वदतु ॥ ७१ ॥ ॐ भूर्भुवः स्वः दिव्यकाय नमः दिव्यकमावाहयामि स्था० ॥ भो दिव्यक इहागच्छ इह तिष्ठ ॥ १६ ॥ ॐ सीसेन तन्त्रम्मनसा मनीषिणऽ ऊर्णासूत्रेण कवयो वयन्ति ॥ अश्विना यज्ञᳬ सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषज्यन् ॥ ८९ ॥ ॐ भूर्भुवः स्वः कम्बलाय नमः कम्बलमावाहयामि स्थापयामि ॥ भो कम्बल इहागच्छ इह तिष्ठ ॥ १७ ॥ ॐ आशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शतᳬ सेनाऽअजयत्साकमिन्द्रः ॥ ३३/१७ ॥ ॐ भूर्भुवः स्वः भीषणाय नमः भीषणमा० स्था० ॥ भो भीषण इहागच्छ इह तिष्ठ ॥ १८ ॥

नैर्ऋत्यदिक्चतुरस्रे पङ्कदले पद्मे ईशानतः प्रदक्षिणक्रमेण पट्क्षेत्रपालदेवतास्थापनम्

ॐ इमᳬ साहस्रᳬ शतधारमुत्सं व्यच्यमानᳬसरिरस्य मद्ध्ये ॥ घृतन्दुहानामदितिञ्जनायाग्ने मा हिᳬसीः परमे व्योमन् ॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ गवयन्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४९/१३ ॥ ॐ भूर्भुवः स्वः गवयाय नमः गवयमावाहयामि स्थापयामि ॥ भो गवय इहागच्छ इह तिष्ठ ॥ १९ ॥ ॐ कुम्भोवनिष्ठुर्ज्जनिताशचीभिर्यस्मिन्नग्ग्रेयोन्याङ्गर्भोऽअन्तः ॥ प्लाशिर्व्यक्तः शतधारऽउत्सोदुहेनकुम्भीस्वधाम्पितृभ्यः ॥ ८७ ॥ ॐ भूर्भुवः स्वः

॥ दक्षिणदिक्चतुरस्रे पङ्कदले पद्मे ईशानतः प्रदक्षिणक्रमेण पट्क्षेत्रपालदेवतास्थापनम् ॥
१३ ॐ भूर्भुवः स्वः ऐरावताय नमः ऐरावतमावाहयामि स्थापयामि ॥ भो ऐरावत इहागच्छ इह तिष्ठ ॥
१४ ॐ भूर्भुवः स्वः ओषधिघ्नाय नमः ओषधिघ्नमावाहयामि स्थापयामि ॥ भो ओषधिघ्न इहागच्छ इह तिष्ठ ॥
१५ ॐ भूर्भुवः स्वः बन्धनाय नमः बन्धनमावाहयामि स्थापयामि ॥ भो बन्धन इहागच्छ इह तिष्ठ ॥
१६ ॐ भूर्भुवः स्वः दिव्यकाय नमः दिव्यकमावाहयामि स्थापयामि ॥ भो दिव्यक इहागच्छ इह तिष्ठ ॥
१७ ॐ भूर्भुवः स्वः कम्बलाय नमः कम्बलमावाहयामि स्थापयामि ॥ भो कम्बल इहागच्छ इह तिष्ठ ॥
१८ ॐ भूर्भुवः स्वः भीषणाय नमः भीषणमावाहयामि स्थापयामि ॥ भो भीषण इहागच्छ इह तिष्ठ ॥
॥ नैर्ऋत्यदिक्चतुरस्रे पङ्कदले पद्मे ईशानतः प्रदक्षिणक्रमेण पट्क्षेत्रपालदेवतास्थापनम् ॥
१९ ॐ भूर्भुवः स्वः गवयाय नमः गवयमावाहयामि स्थापयामि ॥ भो गवय इहागच्छ इह तिष्ठ ॥

घण्टाय नमः घण्टमावाहयामि स्थापयामि ॥ भो घण्ट इहागच्छ इह तिष्ठ ॥ २० ॥ ॐ आक्रन्दय बलमोजो नऽ आधा निष्टनिहि दुरिता बाधमानः ॥ अपप्रोथ दुन्दुभेदुच्छुनाऽइतऽइन्द्रस्य मुष्टिरसि वीडयस्व ॥ २९।५६ ॥ ॐ भूर्भुवः स्वः व्यालाय नमः व्यालमावा० स्था० ॥ भो व्याल इहागच्छ इह तिष्ठ ॥ २१ ॥ ॐ इन्द्रायाहि चित्रभानो सुताऽ इमे त्वायवः ॥ अण्वीभिस्तना पूतासः ॥ २०।८७ ॥ ॐ भूर्भुवः स्वः अणवे नमः अणुमावाहयामि स्थापयामि ॥ भो अणो इहागच्छ इह तिष्ठ ॥ २२ ॥ ॐ चन्द्रमाऽ अप्स्वन्तरा सुपर्णो धावते दिवि ॥ रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳ हरिरेति कनिक्रदत् ॥ ३३।९२ ॥ ॐ भूर्भुवः स्वः चन्द्रवारुणाय नमः चन्द्रवारुणमावाहयामि स्थापयामि ॥ भो चन्द्रवारुण इहागच्छ इह तिष्ठ ॥ २३ ॥ ॐ स्वाङ्कृतोसि विश्वेभ्यऽ इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वासुभवसूर्य्यायदेवेभ्यस्त्वामरीचिपेभ्यो देवाꣳशोयस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेनहतोसौफट्प्राणायत्वाव्यानायत्त्वा ॥ ७।३ ॥ ॐ भूर्भुवः स्वः पटाटोपाय नमः पटाटोपमावाहयामि स्थापयामि ॥ भो पटाटोप इहागच्छ इह तिष्ठ ॥ २४ ॥ पश्चिमदिक्चतुरस्रे पद्मदले पद्मे ईशानतः प्रदक्षिणक्रमेण पट्क्षेत्रपालदेवतास्थापनम्

ॐ उग्रꣳल्लोहितेनमित्रꣳ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेनमरुतो बलेन साध्यान्प्रमुदा ॥ भवस्य कण्ठ्यꣳ रुद्रस्यान्तः पार्श्व्यम्महादेवस्ययकृच्छर्वस्यवनिष्ठुः पशुपतेःपुरीतत् ॥ ३९।९ ॥ ॐ भूर्भुवः स्वः जटालाय नमः जटालमा० स्था० ॥ भो जटाल इहागच्छ इह तिष्ठ ॥ २५ ॥ ॐ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्त्वाक्रतूꣳ१ऽरनु ॥ १९।४० ॥ ॐ भूर्भुवः स्वः क्रतवे नमः क्रतुमावाहयामि स्थापयामि ॥ भो क्रतो इहागच्छ इह तिष्ठ ॥ २६ ॥ ॐ आजिघ्रकलशम्मह्यात्त्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्त्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ८।४२ ॥ ॐ भूर्भुवः स्वः घण्टेश्वराय नमः घण्टेश्वरमा०

२० ॐ भूर्भुव स्व घण्टाय नम घण्टमावाहयामि स्थापयामि ॥ भो घण्ट इहागच्छ इह तिष्ठ ॥
२१ ॐ भूर्भुव स्व व्यालाय नम व्यालमावाहयामि स्थापयामि ॥ भो व्याल इहागच्छ इह तिष्ठ ॥
२२ ॐ भूर्भुव स्व अणवे नम अणुमावाहयामि स्थापयामि ॥ भो अणो इहागच्छ इह तिष्ठ ॥
२३ ॐ भूर्भुव स्व चन्द्रवारुणाय नम चन्द्रवारुणमावाहयामि स्थापयामि ॥ भो चन्द्रवारुण इहागच्छ इह तिष्ठ ॥
२४ ॐ भूर्भुव स्व पटाटोपाय नम पटाटोपमावाहयामि स्थापयामि ॥ भो पटाटोप इहागच्छ इह तिष्ठ ॥
॥ पश्चिमदिक्चतुरस्रे पद्मदले पद्मे ईशानत प्रदक्षिणक्रमेण पट्क्षेत्रपालदेवतास्थापनम् ॥
२५ ॐ भूर्भुव स्व जटालाय नम जटालमावाहयामि स्थापयामि ॥ भो जटाल इहागच्छ इह तिष्ठ ॥
२६ ॐ भूर्भुव स्व क्रतवे नम क्रतुमावाहयामि स्थापयामि ॥ भो क्रतो इहागच्छ इह तिष्ठ ॥
२७ ॐ भूर्भुव स्व घण्टेश्वराय नम घण्टेश्वरमावाहयामि स्थापयामि ॥ भो घण्टेश्वर इहागच्छ इह तिष्ठ ॥

स्थापयामि ॥ भो घण्टेश्वर इहागच्छ इह तिष्ठ ॥ २७ ॥ ॐ वायोंशुक्रोऽअया-मितेमद्ध्रोऽअग्रन्दिविंष्टिषु ॥ आयांहिसोमंपीतयेस्प्पार्हीदेवनियुत्त्वता ॥ ॥ ॐ भूर्भुवः स्वः विटङ्काय नमः विटङ्कमावाहयामि स्थापयामि ॥ भो विटङ्क इहागच्छ इह तिष्ठ ॥ २८ ॥ ॐ दैव्याहोतांराभिषजेन्द्रेणसयुजांयुजा ॥ जगंती-च्छन्दंऽइन्द्रियमंनड्वान्गौर्वयोंदधुः ॥ ॥ ॐ भूर्भुवः स्वः मणिमानाय नमः मणिमानमावाहयामि स्थापयामि ॥ भो मणिमान इहागच्छ इह तिष्ठ ॥ २९ ॥ ॐत्रीणिंतऽआहुर्दिविबन्धनानित्रीण्ण्युप्प्सुत्रीण्ण्यन्तः समुद्रे॥उतेवंमेवरुणश्छन्त्स्य-र्व्यत्रांतऽआहुः परमञ्जनित्रम् ॥ ॐ भूर्भुवः स्वः गणबन्धवे नमः गणब-न्धुमा० स्था० ॥ भो गणबन्धो इहागच्छ इह तिष्ठ ॥ ३० ॥

वायव्यदिक्चतुरस्रे षड्दले पद्मेईशानतः प्रदक्षिणक्रमेण पद्क्षेत्रपालदेवतास्थापनम्॥

ॐ प्रतिश्रुत्कांयाऽ अर्त्तनङ्घोषांय भूषमन्तांय बहुवादिनंमनन्ताय मूकङ्क शब्दांयाडम्बराघातम्महंसे वीणावादङ्क्रोशांय तूणवद्ध्मममंबरस्प्पराय शङ्खद्ध्मंबनांय वनंपमन्यतोरण्ण्याय दावपम् ॥ ॥ ॐ भूर्भुवः स्वः डामराय नमः डामरमा-वाहयामि स्थापयामि ॥ भो डामर इहागच्छ इह तिष्ठ ॥ ३१ ॥ ॐ शुद्धवालः सर्वशुद्धवालोमणिवालस्तऽ आश्विनाः श्येतंः श्येताक्षोरुणस्ते रुद्राय पशुपतये कर्णा यामाऽ अवलिप्ता रौद्रा नभोरूपाः पार्ज्जन्याः ॥ ॥ ॐ भूर्भुवः स्वः ढुण्ढिकर्णाय नमः ढुण्ढिकर्णमावाहयामि स्थापयामि ॥ भो ढुण्ढिकर्ण इहागच्छ इह तिष्ठ ॥ ३२ ॥ ॐ बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमानऽ उग्रः ॥ अभिवीरोऽ अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ॥ ॐ भूर्भुवः स्वः स्थविराय नमः स्थविरमावाहयामि स्थापयामि ॥ भो स्थविर इहागच्छ इह तिष्ठ ॥ ३३ ॥ ॐ सुपर्णं वस्ते मृगोऽ अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ॥ यत्रा नरः सञ्च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म्म यंसन् ॥ ॥ ॐ भूर्भुवः स्वः दन्तुराय नमः दन्तुरमावाहयामि

२८ ॐ भूर्भुवः स्वः विटङ्काय नमः विटङ्कमावाहयामि स्थापयामि ॥ भो विटङ्क इहागच्छ इह तिष्ठ ॥
२९ ॐ भूर्भुवः स्वः मणिमानाय नमः मणिमानमावाहयामि स्थापयामि ॥ भो मणिमान इहागच्छ इह तिष्ठ ॥
३० ॐ भूर्भुवः स्वः गणबन्धवे नमः गणबन्धुमावाहयामि स्थापयामि ॥ भो गणबन्धो इहागच्छ इह तिष्ठ ॥
॥वायव्यदिक्चतुरस्रे षड्दले पद्मे ईशानतः प्रदक्षिणक्रमेण षड्क्षेत्रपालदेवतास्थापनम्॥
३१ ॐ भूर्भुवः स्वः डामराय नमः डामरमावाहयामि स्थापयामि ॥ भो डामर इहागच्छ इह तिष्ठ ॥
३२ ॐ भूर्भुवः स्वः ढुण्ढिकर्णाय नमः ढुण्ढिकर्णमावाहयामि स्थापयामि ॥ भो ढुण्ढिकर्ण इहागच्छ इह तिष्ठ ॥
३३ ॐ भूर्भुवः स्वः स्थविराय नमः स्थविरमावाहयामि स्थापयामि ॥ भो स्थविर इहागच्छ इह तिष्ठ ॥
३४ ॐ भूर्भुवः स्वः दन्तुराय नमः दन्तुरमावाहयामि स्थापयामि ॥ भो दन्तुर इहागच्छ इह तिष्ठ ॥

स्थापयामि ॥ भो दन्तुर इहागच्छ इह तिष्ठ ॥ ३४ ॥ ॐ अग्नेऽ अच्छावदेहनः प्रतिं नः सुमनाभव ॥ प्रनो यच्छ सहस्रजित्वः हि धनदाऽ असि स्वाहा ॥ ३५ ॥ ॐ भूर्भुवः स्वः धनदाय नमः धनदमावाहयामि स्थापयामि ॥ भो धनद इहागच्छ इह तिष्ठ ॥ ३५ ॥ ॐ भद्रङ्कर्णेभिः शृणुयाम देवाभद्रम्पश्येमाक्षभिर्य्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाꣳ सस्तनूभिर्व्यशेमहि देवहितँय्यदायुः ॥ ३६ ॥ ॐ भूर्भुवः स्वः नागकर्णाय नमः नागकर्णमावाहयामि स्थापयामि ॥ भो नागकर्ण इहागच्छ इह तिष्ठ ॥ ३६ ॥

उत्तरदिक्चतुरस्रे सप्तदले पद्मे ईशानतः प्रदक्षिणक्रमेण सप्तक्षेत्रपालदेवतास्थापनम् ॥

ॐ बाहूमे बलमिन्द्रियꣳ हस्तौ मे कर्म्मवीर्य्यम् ॥ आत्त्मा क्षत्रमुरो मम ॥ ३७ ॥ ॐ भूर्भुवः स्वः महाबलाय नमः महाबलमावाहयामि स्थापयामि ॥ भो महाबल इहागच्छ इह तिष्ठ ॥ ३७ ॥ ॐ अपाम्फेनेन नमुचेः शिरऽ इन्द्रोदवर्त्तयः ॥ विश्वा यदजयस्पृधः ॥ ३८ ॥ ॐ भूर्भुवः स्वः फेत्काराय नमः फेत्कारमावाहयामि स्थापयामि ॥ भो फेत्कार इहागच्छ इह तिष्ठ ॥ ३८ ॥ ॐ इदꣳ हविः प्प्रजननम्मेऽ अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ॥ आत्त्मसनि प्प्रजासनि पशुसनि लोकसन्यभयसनि ॥ अग्निः प्प्रजाम्बहुलाम्मे करोत्त्वन्नम्पयो रेतोऽ अस्मासु धत्त ॥ ३९ ॥ ॐ भूर्भुवः स्वः चीकराय नमः चीकरमावाहयामि स्थापयामि ॥ भो चीकर इहागच्छ इह तिष्ठ ॥ ३९ ॥ ॐ सा व्याघ्रं विषूचिकोभौ वृकञ्च रक्षति ॥ श्येनम्पतत्रिणꣳ सिꣳहꣳ सेमम्पात्त्वꣳहसः ॥ ४० ॥ ॐ भूर्भुवः स्वः सिंहाय नमः सिंहमावाहयामि स्थापयामि ॥ भो सिंह इहागच्छ इह तिष्ठ ॥ ४० ॥ ॐ मृगो नभीमः कुचरोगिरिष्ठाः परावतऽआजगन्थापरस्याः ॥ सृकꣳसꣳशायपविमिन्द्र तिग्मंविशत्रून्ताढिविमृधोनुदस्व ॥ ४१ ॥ ॐ भूर्भुवः स्वः मृगाय नमः मृगमावाहयामि स्थापयामि ॥ भो मृग इहागच्छ इह तिष्ठ ॥ ४१ ॥ ॐ देवहूर्य्यज्ञऽ

३५ ॐ भूर्भुव स्व धनदाय नम धनदमावाहयामि स्थापयामि ॥ भो धनद इहागच्छ इह तिष्ठ ॥
३६ ॐ भूर्भुव स्व नागकर्णाय नम नागकर्णमावाहयामि स्थापयामि ॥ भो नागकर्ण इहागच्छ इह तिष्ठ ॥

॥ उत्तरदिक्चतुरस्रे सप्तदले पद्मे ईशानत. प्रदक्षिणक्रमेण सप्तक्षेत्रपालदेवतास्थापनम् ॥

३७ ॐ भूर्भुव स्व महाबलाय नम महाबलमावाहयामि स्थापयामि ॥ भो महाबल इहागच्छ इह तिष्ठ ॥
३८ ॐ भूर्भुवः स्व फेत्काराय नम फेत्कारमावाहयामि स्थापयामि ॥ भो फेत्कार इहागच्छ इह तिष्ठ ॥
३९ ॐ भूर्भुव स्व चीकराय नम चीकरमावाहयामि स्थापयामि ॥ भो चीकर इहागच्छ इह तिष्ठ ॥
४० ॐ भूर्भुव स्व सिंहाय नम सिंहमावाहयामि स्थापयामि ॥ भो सिंह इहागच्छ इह तिष्ठ ॥
४१ ॐ भूर्भुव स्व मृगाय नमः मृगमावाहयामि स्थापयामि ॥ भो मृग इहागच्छ इह तिष्ठ ॥
४२ ॐ भूर्भुव स्व यक्षाय नम यक्षमावाहयामि स्थापयामि ॥ भो यक्ष इहागच्छ इह तिष्ठ ॥

आर्चयक्षत्सुम्नहूर्य्यज्ञऽआर्चयक्षत् ॥ यक्षदुग्निर्हेवोदेवाँ२ऽ आर्चयक्षत् ॥ ६३/१७ ॥ ॐ भूर्भुवः स्वः यक्षाय नमः यक्षमावाहयामि स्थापयामि ॥ भो यक्ष इहागच्छ इह तिष्ठ ॥४२॥ ॐ जीमूतस्येव भवति प्रतीकं यद्वर्म्मी याति समदामुपस्थे ॥ अनाविद्धया तन्वा जय त्वᳬ स त्वा वर्म्मणो महिमापिपर्त्तु ॥ ३/६ ॥ ॐ भूर्भुवः स्वः मेघवाहनाय नमः मेघवाहनमावाहयामि स्थापयामि ॥ भो मेघवाहन इहागच्छ इह तिष्ठ ॥ ४३ ॥ ईशानदिक्चतुरस्त्रे सप्तदलपद्मे ईशानतःप्रदक्षिणक्रमेण सप्तक्षेत्रपालदेवतास्थापनम्॥

ॐ तीव्रान्घोषान्कृण्वते वृषपाणयोश्वारथेभिᳬ सह वाजयन्तᳬ ॥ अवक्रामन्तᳬ प्रपदैरमित्रान्क्षिणन्ति शत्रूँ१ऽ रनपव्ययन्तᳬ ॥ ४/४ ॥ ॐ भूर्भुवः स्वः तीक्ष्णोष्ठाय नमः तीक्ष्णोष्ठमावाहयामि स्थापयामि ॥ भो तीक्ष्णोष्ठ इहागच्छ इह तिष्ठ ॥४४॥ ॐ वायुष्ट्वा पचतैरवत्वसितग्रीवश्छागैर्न्यग्रोधश्चमसैः शल्मलिर्वृद्ध्या ॥ एष स्य राथ्यो वृषा पड्भिश्चतुर्भिरेदगन्ब्रह्मा कृष्णश्च नोवतु नमोग्नये ॥ ३/३ ॥ ॐ भूर्भुवः स्वः अनलाय नमः अनलमावाहयामि स्थापयामि ॥ भो अनल इहागच्छ इह तिष्ठ ॥ ४५ ॥ ॐ अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्री विष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सोऽ अपामसि विश्वकर्म्मा तऽ ऋषिरश्विनाध्वर्य्यू सादयतामिह त्वा ॥ १/७ ॥ ॐ भूर्भुवः स्वः शुक्रतुण्डाय नमः शुक्रतुण्डमावाहयामि स्थापयामि ॥ भो शुक्रतुण्ड इहागच्छ इह तिष्ठ ॥ ४६ ॥ ॐ द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रम्पृणातु ते ॥ सूर्य्यस्ते नक्षत्रैᳬ सह लोकङ्कृणोतु साधुया ॥ ४३/३ ॥ ॐ भूर्भुवः स्वः सुधालापाय नमः सुधालापमावाहयामि स्थापयामि ॥ भो सुधालाप इहागच्छ इह तिष्ठ ॥ ४७ ॥ ॐ सम्बर्हिरङ्क्ताᳬ हविषा घृतेन समादित्यैर्वसुभिᳬ सम्मरुद्भिः ॥ समिन्द्रो विश्वदेवेभिरङ्क्तान्दिव्यन्नभो गच्छतु यत्स्वाहा ॥ २/२ ॥ ॐ भूर्भुवः स्वः बर्बरकाय नमः बर्बरकमावाहयामि स्थापयामि ॥ भो बर्बरक इहागच्छ इह तिष्ठ ॥ ४८ ॥ ॐ पवमानᳬ सोऽ अद्यनᳬ पवित्रेण विचर्षणिᳬ ॥ यᳬ पोता स पुनातु मा ॥४/३॥ ॐ भूर्भुवः स्वः पवनाय नमः पवनमावाहयामि स्थापयामि ॥ भो पवन इहागच्छ इह

४३ ॐ भूर्भुवः स्वः मेघवाहनाय नमः मेघवाहनमावाहयामि स्थापयामि ॥ भो मेघवाहन इहागच्छ इह तिष्ठ ॥
ईशानदिक्चतुरस्त्रे सप्तदले पद्मे पूर्वतः प्रदक्षिणक्रमेण सप्तक्षेत्रपालदेवतास्थापनम् ॥
४४ ॐ भूर्भुवः स्वः तीक्ष्णोष्ठाय नमः तीक्ष्णोष्ठमावाहयामि स्थापयामि ॥ भो तीक्ष्णोष्ठ इहागच्छ इह तिष्ठ ॥
४५ ॐ भूर्भुवः स्वः अनलाय नमः अनलमावाहयामि स्थापयामि ॥ भो अनल इहागच्छ इह तिष्ठ ॥
४६ ॐ भूर्भुवः स्वः शुक्रतुण्डाय नमः शुक्रतुण्डमावाहयामि स्थापयामि ॥ भो शुक्रतुण्ड इहागच्छ इह तिष्ठ ॥
४७ ॐ भूर्भुवः स्वः सुधालापाय नमः सुधालापमावाहयामि स्थापयामि ॥ भो सुधालाप इहागच्छ इह तिष्ठ ॥
४८ ॐ भूर्भुवः स्वः बर्बरकाय नमः बर्बरकमावाहयामि स्थापयामि ॥ भो बर्बरक इहागच्छ इह तिष्ठ ॥

तिष्ठ ॥ ४९ ॥ ॐ अभ्भ्यर्षत सुष्टुतिङ्गव्व्यमाजिमस्म्मासु भुद्राद्द्रविणानि धत्त ॥ इमँय्यज्ज्ञन्नयत देवता नो घृतस्य धारा मधुमत्पवन्ते ॥ १७/६८ ॥ ॐ भूर्भुवः स्वः पावनाय नमः पावनमावाहयामि स्थापयामि ॥ भो पावन इहागच्छ इह तिष्ठ ॥५०॥

ततः प्रतिष्ठापनम् ॥ ॐ मनोजूतिर्जु० ॥ २/१३ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहिताः अजरादिक्षेत्रपालदेवाः सुप्रतिष्ठिता वरदा भवत ॥ पुनर्हस्तेऽक्षतानादाय ॥ आसनम् ॥ ॐ पुरुषऽएवे० ॥ ३१/२ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः आसनार्थे अक्षतान् सम० ॥ पाद्यम् ॥ ॐ एतावा० ॥ ३१/३ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यःअजरादिक्षेत्रपालदेवेभ्यो नमः पादयोः पाद्यं सम० ॥ अर्घ्यम् ॥ एकस्मिन्नर्घपात्रे गन्धाक्षतपुष्पसहितं जलं गृहीत्वा तत्र पूगीफलं हिरण्यञ्च प्रक्षिप्य हस्ते गृहीत्वा ॥ ॐ त्रिपादू० ॥ ३१/४ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः हस्तयोरर्घ्यं सम० ॥ आचमनीयम् ॥ ॐततो वि० ॥ ३१/५ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः आचमनीयं सम० ॥ स्नानम् ॥ तस्म्माद्य० ॥ ३१/६ ॥ ॐभूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः स्नानं सम० ॥ ततः पञ्चामृतस्नानम् ॥ एकतन्त्रेण पञ्चामृतं गृहीत्वा । ॐ पञ्चनद्यः० ॥ ३४/११ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः पञ्चामृतस्नानं समर्पयामि ॥ ६ ॥ शुद्धोदकस्नानम् ॥ ॐशुद्धवालः सर्व० ॥ २४/१ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः शुद्धोदकस्नानं समर्पयामि ॥ ७ ॥ ततो वस्त्रम् ॥ ॐ सुजातोज्यो० ॥ ११/४० ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः वस्त्रोपवस्त्रे समर्पयामि ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥ ८ ॥ यज्ञोपवीतम् । ॐयज्ञोपवीतं० । ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः यज्ञोपवीतं सम० ॥ गन्धम् ॥ ॐ त्वाङ्गन्धर्वा० ॥ १२/९८ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः गन्धं समर्पयामि ॥ अक्षतान् । ॐ अक्षन्नमीम० ॥ ३/५१ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः अक्षतान् समर्पयामि ॥ पुष्पाणि ॥ ॐओषधीः प्रति० ॥ १२/७७ । ॐभूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः ऋतुकालोद्भवानि यथालाभोपपन्नानि पुष्पाणि सम० ॥ सौभाग्यपरिमलद्रव्यम् ॥ ॐ अहिरिवभोगैः ॥ २९/५१ ॥ ॐभूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः सौभा

४९ ॐ भूर्भुवः स्वः पवनाय नमः पवनमावाहयामि स्थापयामि ॥ भो पवन इहागच्छ इह तिष्ठ ।
५० ॐ भूर्भुवः स्वः पावनाय नमः पावनमावाहयामि स्थापयामि ॥ भो पावन इहागच्छ इह तिष्ठ

न्धपरिमलद्रव्याणि समर्पयामि ॥ धूपम् ॥ ॐ धूरसि धूर्व धूर्वं० ॥ ६/१ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः धूपमाघ्रापयामि ॥ दीपम् ॥ ॐ अग्निर्ज्योति० ॥ ५ ०/१ २ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम् ॥ ॐ अन्नपतेऽन्न० ॥ ६ ३/१ २ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः नैवेद्यं सम० ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वाऽमृतीकृत्य वामहस्तं पद्माकारं कृत्वा दक्षहस्तेन ग्रासमुद्राः प्रदर्शयेत् । ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ नैवेद्यमध्ये पानीयं समर्प० ॥ उत्तरापोशनं स० । हस्तप्रक्षालनं स० । मुखप्रक्षालनं स० । करोद्वर्तनार्थे गन्धं सम० । मुखवासार्थे पूगीफलम् ॥ ॐ याः फलिनीर्या० ॥ ६ १/१ २ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः मुखवासार्थे पूगीफलं समर्पयामि ॥ ताम्बूलम् ॥ ॐ उत स्मा० ॥ ९/१ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः ताम्बूलं सम० ॥ दक्षिणाम् ॥ ॐ हिरण्यगर्भः स० ॥ ४/१ ३ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः यथाशक्ति दक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य गन्धाक्षतपुष्पैः संपूज्य आरार्तिक्यं कुर्यात् ॥ ॐ अग्निर्देवता० ॥ २/१ ४ ॥ ॐ ये देवासो० ॥ ७/१ ९ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपादेवेभ्यो नमः आरार्तिक्यं सम० ॥ जलेन प्रदक्षिणां समर्प० ॥ पुष्पैर्देववन्दनम् । हस्तेनात्मवन्दनं कृत्वा हस्तं प्रक्षाल्य ॥ मन्त्रपुष्पाञ्जलिम् ॥ ॐ नमोऽस्तु सर्पेभ्यो ॥ ६/१ ३ ॥ ॐ यज्ञेन० ॥ ३ ६/१ १ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्प० ॥ प्रदक्षिणाम् ॥ ॐ सृकास्या० ॥ ३ ५/१ १ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः प्रदक्षिणां सम० ॥ विशेषार्घः ॥ एकस्मिन्पात्रे जलं गन्धाक्षतपुष्पाणि पूगीफलं हिरण्यञ्च प्रक्षिप्य तदुपरि नारिकेलादिकं निधाय हस्तयोर्गृहीत्वा ॥ इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ रूपं देहि जयं देहि भाग्यं भगवन् देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्यः अजरादिक्षेत्रपालदेवेभ्यो नमः विशेषार्घं समर्पयामि ॥ ततो स्तुतिपाठः ॥ यं यं यंयक्षरूपं दशदिशिवदनं भूमिकम्पायमानं सं सं संहारमूर्तिं शिरमुकुटजटाशेखरं चन्द्रबिम्बम् ॥ दं दं दं दीर्घकायं विकृतनखमुखं चोर्ध्वरेखाकपालं पं पं पं पापनाशं प्रणतपशुपतिं क्षेत्रपालं नमामि ॥ प्रार्थयेत् ॥ यदक्रत्वेन भो देवाः

पूजिता विधिमार्गतः ॥ कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम् ॥ हस्ते जलं गृहीत्वा ॥ अनेन यथाशक्ति ध्यानावाहनादिषोडशोपचारैरन्योपचारैश्च कृतेन पूजनेन ॐभूर्भुवः स्वः क्षेत्रपालसहिता अजरादिक्षेत्रपालदेवाः प्रीयन्तां न मम ।

॥ इति क्षेत्रपालदेवतापूजनप्रयोगः समाप्तः ॥

## ॥ अथ जलयात्राप्रयोगः ॥

मण्डपे सपत्नीको यजमानः स्वासने उपविश्य आचमनं प्राणायामत्रयं कृत्वा हस्ते जलमादाय देशकालौ सङ्कीर्त्य प्रारब्धस्य सग्रहमखगायत्रीपुरश्चरणकर्माङ्गत्वेन जलयात्रां करिष्ये ॥ इति सङ्कल्पं विधाय । कुरुष्वेति आचार्यादिभिरनुज्ञातो जलयात्रार्थं पूजनसंभारानेकीकृत्य रौप्यमयान् ताम्रमयान् वा षोडश कलशान् तत्परिमितानि कौशेयवस्त्राणि नालीकेराणि पुष्पमालादींश्चादाय "आनोभद्राः" "आशुः शिशान" इत्यादि शान्तिसूक्तं पठद्भिराचार्यादिसमस्तर्त्विग्भिः परिवृतः स्वकीयपुत्रपौत्रज्ञातिपरिवारजनसुवासिनीभिश्च संयुतो मङ्गलवाद्यघोषपुरःसरं जलाशयं गच्छेत् ॥ ततस्तत्र सपत्नीको यजमानो हस्तौ पादौ प्रक्षाल्य जलाशयस्य समीपस्थतीरं पञ्चगव्येन ब्राह्मणद्वारा प्रोक्षयित्वाऽऽचार्यादिभिः परिवृतः पूर्वाभिमुख उदङ्मुखो वा उपविशेत् ॥ तत आचार्यो यजमानस्य समीपे तण्डुलैर्यवैर्वा नवकलशानां स्थापनार्थं नवकोष्टात्मकं मण्डलं विरच्य तत्कोष्टस्येशानाग्नेयनैर्ऋत्यवायव्यकोणेष्वपि प्रतिकोणमेकैककलशस्थापनार्थं चतुरो धान्यपुञ्जान्विधाय तथैव तन्मण्डलस्य दक्षिणपश्चिमोत्तरदिक्ष्वपि एकैककलशस्थापनार्थम् एकैकं धान्यपुञ्जं कृत्वा तदुत्तरे श्वेतं वस्त्रं प्रसार्य यवैस्तण्डुलैर्वा बृहच्चतुरस्रं मण्डलं विधाय तस्य मध्ये जलमातृकाणां स्थापनार्थं दक्षिणत आरभ्योदक्संस्थान् सप्त पुञ्जान्कृत्वा तत्पूर्वेऽपि तथैव स्थलमातृकाणां स्थापनार्थं सप्तपुञ्जान्कृत्वा तथैव तत्पूर्वेऽपि जीवमातृकाणामपि स्थापनार्थं सप्त पुञ्जान्कृत्वा तदुपरि च सप्तसागराणां स्थापनार्थमप्येकं पुञ्जं सप्त वा पुञ्जान् विदध्यात् ॥

---

१ अयं जलयात्राप्रयोगस्त्वस्माभिर्बहुधा रुद्रकल्पद्रुमानुसारेणैव लिखितः ॥

१ नवकोष्ठात्मके मण्डले प्रतिमण्डलम् एकैकमेवं नव कलशाः ॥ तत्स्येशानादिविदिक्षु एकैकमेवं चत्वारोऽन्ये कलशाः । तथैव तस्य मण्डलस्य दक्षिणपश्चिमोत्तरदिक्षु एकैकमेवं त्रयोऽप्यन्ये कलशाः । एवं षोडश कलशा ज्ञेयाः ॥ परन्तु प्रायः सर्वत्र याज्ञिका नव कलशानामेव स्थापनं कृत्वाऽऽवाहनं पूजनञ्च कुर्वन्ति ॥

रुद्रकल्पद्रुमकारैर्नवकलशानां पूजनानन्तरं दिक्षु त्रयाणां कलशानां विदिक्षु चतुर्णां कलशानां स्थापनं पूजनञ्चोक्तं परमस्माभिः सर्वेषां सौकर्यार्थं "कर्मणां युगपद्भावस्तन्त्रम्" इति वचनादेकतन्त्रेणैव नवकलशैः सह सप्तानां कलशानामपि स्थापनं पूजनञ्चोच्यते ॥

ततः सपत्नीको यजमानः आचमनं प्राणायामत्रयञ्च कुर्यात् ॥ ततं आचार्यो यजमानस्य भाले तिलकं कृत्वा शान्तिसूक्तं पठेत् ॥ ततः ॐ श्रीमन्म० इत्यारभ्य विष्णुर्विष्णुर्विष्णुः इत्यन्तं पठित्वा अत्राद्येति देशकालौ सङ्कीर्त्य प्रारब्धस्य सग्रहमखगायत्रीपुरश्चरणकर्मणोऽङ्गतया करिष्यमाणेऽस्मिञ्जलयात्राकर्मणि निर्विघ्नार्थं चतुर्दिक्षु रक्षाबन्धनपूर्वकं गणपतिपूजनं (स्मरणं वा) करिष्ये ॥ इति सङ्कल्पं विधाय ॥ वामहस्ते सर्षपान्गृहीत्वा दक्षकरेणाच्छाद्य पठेत् ॥ ॐ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्म्मा त्वादित्यैरुत्तरतः पात्विदमहं तप्तं वार्बहिर्द्धा यज्ञान्निःसृजामि ॥ ५ ॥ इति सर्षपान् चतुर्दिक्षु विकीर्य यथाशक्ति गणपतिपूजनं कुर्यात् ॥ एवं गणपतिपूजनं विधाय भूमिपूजनं कुर्यात् ॥

॥ अथ कलशस्थापनार्थं कृते मण्डले भूमिपूजनम्[1] ॥

भूमिपूजनम् ॥ भूमिं स्पृष्ट्वा—ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः ॥ १३/१८ ॥ आसनम्—ॐ मही द्यौः पृथिवी च नऽ इमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ ८/३२ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः आसनं समर्पयामि ॥ पाद्यम्—ॐ पृथिवी च मऽ इन्द्रश्च मेऽन्तरिक्षञ्च मऽ इन्द्रश्च मे द्यौश्च मऽ इन्द्रश्च मे समाश्च मऽ इन्द्रश्च मे नक्षत्राणि च मऽ इन्द्रश्च मे दिशश्च मऽ इन्द्रश्च मे यज्ञेन कल्पन्ताम् ॥ १८/१८ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः पाद्यं समर्पयामि ॥ अर्घ्यम्—ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥ ३६/१३ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः अर्घ्यं समर्पयामि ॥ आचमनीयम्—ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तु नः ॥ ३६/१२ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः आचमनीयं समर्पयामि ॥ पयःस्नानम्[2]—ॐ पयः पृथिव्याम्पयऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १८/३६ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः पयःस्नानं समर्पयामि ॥ शुद्धोदकस्नानम्—ॐ इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ॥ व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥ ५/१६ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः शुद्धोदकस्नानं समर्पयामि ॥ वस्त्रम्—ॐ यऽ इमे द्यावापृथिवी जनित्री रूपैरपिꣳ

१ केचन शिष्टाः कलशस्थापनानन्तरं भूमिपूजनमाचरन्ति । अत्र तु देशकालतो व्यवस्था बोध्या ॥

२ भूमिपूजने पञ्चामृतमध्येऽस्तु केवलं भूमेः पयःस्नानमेवोक्तम् । अतोऽस्माभिरपि पञ्चामृते दध्यादि नोक्तं ॥ इत्थं पञ्चामृते न काऽपि क्षतिरिति मन्यामहे ॥

शुन्धुर्वनानि विश्वा ॥ तमद्य होतरिषितो यजीयान्देवस्त्वष्टारमिह यक्षि विद्वान ॥ ३४ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः वस्त्रं समर्पयामि ॥ गन्धम्—ॐ यद्वं-वंद्धमुदरस्यापवाति यऽ आमस्य क्रविषो गन्धोऽ अस्ति ॥ सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकम्पचन्तु ॥३३॥ ॐभूर्भुवः स्वः भूम्यै नमः गन्धं समर्पयामि ॥ अक्षतान्—ॐ अक्षन्नमीमदन्त ह्यव प्रियाऽ अधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ ३ ॥ ॐभूर्भुवः स्वः भूम्यै नमः अक्षतान्समर्पयामि ॥ पुष्पाणि—ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽ इषाण सर्वलोकम्मऽ इषाण ॥ ३२ ॥ ॐभूर्भुवः स्वः भूम्यै नमः पुष्पाणि समर्पयामि॥सौभाग्यपरिमलद्रव्याणि—ॐ अहिरिवभोगैः ॥ ३६॥ ॐभूर्भुवः स्वः भूम्यै नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ धूपम्—ॐ धूरसि धूर्व धूर्वन्तन्धूर्व ते योस्म्मान्धूर्वति तन्धूर्व यं वयन्धूर्वामः ॥ देवानामसि वह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ ८ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः धूपमाघ्रापयामि ॥ दीपम्—ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्चोज्योतिर्वर्चः स्वाहा सूर्य्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ ९ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः दीपं दर्शयामि ॥ नैवेद्यम्—ॐ अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिषऽ ऊर्जन्नो धेहि द्विपदे चतुष्पदे॥८३॥ ॐ भूर्भुवः स्वः भूम्यै नमः नैवेद्यं निवेदयामि ॥ नैवेद्यान्ते आचमनीयम्—ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽ अस्तु मा मा हिꣳसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्याय प्प्रजननाय रायस्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः आचमनीयं समर्पयामि ॥ फलम्—ॐ याः फलिनीर्य्याऽअफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥८९॥ ॐ भूर्भुवः स्व भूम्यै नमः फलानि समर्पयामि ॥ ताम्बूलम्—ॐ उत स्मास्य द्रवतस्तुरण्यतः पर्णन्न वेरनुवातिप्प्रगर्द्धिनः ॥ श्येनस्येव ध्रजतोऽ अङ्कसम्परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥ १५ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः ताम्बूलं समर्पयामि ॥ दक्षिणाम्—ॐ यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्देवेषु नो दधत् ॥ ६४ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥ पुष्पाञ्जलिम्—ॐधामच्छदग्निरिन्द्रो ब्रह्मादेवो

---

१ नमः पर्णरेति ताम्बूलम् ॥ २ इत्यनन्तरमे नीराजनं बोध्यम् ॥

हुस्पतिः ॥ सचेतसो विश्वेदेवा यज्ञम्प्रावन्तु नः शुभे ॥ २६ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः पुष्पाञ्जलिं समर्पयामि ॥ नमस्कारः—ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मामा हिꣳसीः ॥ निर्वर्त्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥ ॐ भूर्भुवः स्वः भूम्यै नमः नमस्कारं समर्पयामि ॥ पूजासमर्पणम्—हस्ते जलमादाय अनया पूजया भगवती भूमिदेवता प्रीयताम् ॥

॥ अथ रुद्रकल्पद्रुमोक्तः षोडशकलशस्थापनपूजनप्रयोगः ॥

अथ जलजीवस्थलमातृकाणां स्थापनार्थं कोष्टकम् ॥

अथ सप्तसागरस्थापनम्

| ज. | द. | स. | ख. | सु. | ई. | ल. |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |

स्थलमातृकास्थापनम् ।

| गा. | नि. | वा. | पा. | म. | ल. | ऊ. |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |

जीवमातृकास्थापनम् ।

| प. | अ. | प. | वि. | न. | ध. | कु. |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |

जलमातृकास्थापनम् ।

| कौं. | गा. | म. | माः | वा. | कू. | म. |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |

॥ अथ षोडशकलशस्थापनार्थं कोष्टकम् ॥

| | ईशान | | पूर्व | | अग्नि | |
|---|---|---|---|---|---|---|
| | कलश १३ | ॥ अथ रुद्रकल्पद्रुमोक्तं षोडश- | कलश स्थापनकोष्टकम् ॥ | | कलश १४ | |
| | | कलश २ | कलश ३ | कलश ४ | | |
| उत्तर | कलश १२ | कलश ९ | कलश १ | कलश ५ | कलश १० | दक्षिण |
| | | कलश ८ | कलश ७ | कलश ६ | | |
| | कलश १६ | | कलश ११ | | कलश १५ | |
| | वायु | | पश्चिम | | नैर्ऋत्य | |

१ पूर्ववत् षोडशकलशाना स्थापनार्थं मण्डलं कृत्वा तत्र मध्यकोष्टके प्रथमं पुञ्जं कृत्वा तत ईशानतः प्रादक्षिण्येन नवकोष्टकेषु नवपुञ्जान्विधाय नवकोष्टकस्य दक्षिणपश्चिमोत्तरदिक्षु कोष्टकेषु च क्रमशः पुञ्जान्कृत्वा पुनर्नवकोष्टकस्येशानादिविदिक्ष्वपि प्रतिकोणं पुञ्जं कुर्यात् ॥ एवमेव कलशानपि स्थापयित्वा आवाहनादि सर्वे उपचाराः पूर्ववत् सर्वेषु कलशेषु स्थापनक्रमेण देयाः ॥

भूमिस्पर्शनम् ॥ ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः ॥ २६ ॥ तत्र षोडशकोष्टकेषु धान्यानां पुञ्जकरणम् ॥ ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ॥ यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ॥ ९३ ॥ ततः सप्तभिर्दर्भपवित्रैः कलशानां पवित्री-

करणम् ॥ ॐ चित्पतिर्म्मापुनातुवाक्पतिर्म्मापुनातु देवोमा सवितापुनात्वच्छि-द्रेण पवित्रेण सूर्य्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामः पुनेतच्छ-केयम् ॥ ॥ ततो मध्यकोष्टकादारभ्य मध्येशानादिक्रमेण धान्यपुञ्जोपरि कल-शस्थापनम् ॥ ॐ आजिघ्रकलशम्मह्यात्त्वा विशन्त्विन्दवः ॥ पुनरूर्जानिवर्त्तस्वसा नः सहस्रन्धुक्ष्वोरुधारा पयस्वतीपुनर्म्माविशताद्रयिः ॥ ॥ कलशानां स्थिरी-करणम्—ॐ स्थिरोभव वीड्वङ्गऽआशुर्भववाज्यर्वन्॥पृथुर्भव सुषदस्त्वमग्नेः पुरी-षवाहणः ॥ ॥ जलपूरणम् ॥ ॐ महीद्यौःपृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ॥ तेषु षोडशेषु पूर्ववत् सर्वोषधीप्रक्षेपः ॥ ॐ याऽओषधीः पूर्वाजातादेवेब्भ्यस्त्रियुगम्पुरा ॥ मनैनुवब्भ्रूणामहःशतंधामानिसप्तच ॥ ॥ तेषु धान्यप्रक्षेपः ॥ ॐ व्रीहयश्चमेयवाश्चमेमाषाश्चमेतिलाश्चमे मुद्गाश्चमे खल्वाश्चमे प्रियङ्गवश्चमेऽणवश्चमे श्यामाकाश्चमेनीवाराश्चमे गोधूमाश्चमे मसूराश्चमे यज्ञेन कल्पन्ताम् ॥ ॥ दूर्वाप्रक्षेपः ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवानोदूर्वे प्रतनु सहस्रेण शतेन च ॥ ॥ पञ्चपल्लवान् ॥ अश्वत्थेवो निषद-नम्पर्णेवोवसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथ पूरुषम् ॥ ॥ सप्तमृद्-प्रक्षेपः ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्म सप्प्रथाः ॥ ॥ फलप्रक्षेपः ॥ ॐयाः फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्चपुष्प्पिणीः ॥ बृहस्पतिप्र-सूतास्तानो मुञ्चन्त्वंहसः ॥ ॥ पञ्चरत्नप्रक्षेपः ॥ ॐ परिवाजपतिः कविर-ग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥ ॥ हिरण्यम् ॥ हिरण्यगर्भः सम-वर्त्तताग्रेभूतस्य जातः पतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषाविधेम ॥ ॥ कलशेषु रक्तसूत्रवेष्टनम् ॥ ॐ सुजातो ज्योतिषा सह शर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपंसंव्ययस्व विभावसो ॥ ॥ तेषु पूर्णपात्रं निधाय नालिकेरादीनां स्थापनम् ॥ ॐ पूर्णादर्विपरा पतसुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहाऽइषमूर्जं शतक्रतो ॥ ॥ ततो गङ्गादिनदी-नामावाहनम् ॥ ॐ इमम्मे वरुणश्रुधीहवमद्याच मृडय ॥ त्वामवस्युराचके ॥ ॥ ॐ पावकानः सरस्वतीवाजेभिर्वाजिनीवती ॥ यज्ञंवष्टुधियावसुः ॥ ॥ ॐ अश्वावतीर्गोमतीर्नऽउषासोवीरवतीः सदमुच्छन्तुभद्राः ॥ घृतन्दुहानाविश्वतः प्रपीता यूयम्पातस्वस्तिभिः सदा नः ॥ ॥ ॐपञ्चनद्यः सरस्वतीमपियन्ति-सस्रोतसः ॥ सरस्वती तु पञ्चधासोदेशेभवत्सरित् ॥ ॥ वरुणावाहनम्—ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो

वरुणेह बोद्ध्युरुशꣳस मा नऽ आयुःप्रमोषीः ॥ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥ गङ्गे त्वं सर्वतीर्थानामाश्रयासि यतस्ततः ॥ यजमानाभिषेकार्थमेहि पापं विनाशय ॥ सरस्वति नमस्तुभ्यं महेश्वरि हरिप्रिये ॥ यजमानाभिषेकार्थमेहि पापं विनाशय ॥ प्रपद्ये वरुणं देवं यादसां पतिमीश्वरम् ॥ याचितं देहि मे तीर्थं सर्वपापापनुत्तये ॥ इत्यावाह्य प्रतिष्ठापनम्—ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु॥ विश्वे देवासऽ इह मादयन्तामो३म्प्रतिष्ठ ॥ ॥ ॐ भूर्भुवः स्वः एषु कलशेषु वरुणः प्रतिष्ठितो वरदो भव ॥ गन्धम्—ॐ यदूवध्यमुदरस्यापवाति यऽ आमस्य क्रविषो गन्धोऽ अस्ति ॥ सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकम्पचन्तु ॥ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः गन्धं समर्पयामि ॥ अक्षतान्—ॐ अक्षन्नमीमदन्त ह्यव प्रियाऽ अधूषत ॥ अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः अक्षतान्समर्पयामि ॥ पुष्पाणि—ॐ ओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसूवरीः ॥ अश्वाऽइव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः पुष्पाणि पुष्पमालाश्च समर्पयामि ॥ सौभाग्यपरिमलद्रव्याणि ॥ ॐअहिरिव भोगैः ॥ ॥ ॐभूर्भुवः स्वः वरुणाय नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ धूपम्—ॐ धूरसि धूर्व्व धूर्वन्तन्धूर्व्व तँय्योऽस्मान्धूर्वति तन्धूर्व्व यं वयन्धूर्वामः ॥ देवानामसि वह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ॥ ॥ ॐभूर्भुवः स्वः वरुणाय नमः धूपमाघ्रापयामि ॥ दीपम्—ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ ॥ ॐभूर्भुवः स्वः वरुणाय नमः दीपं दर्शयामि ॥ नैवेद्यम्—ॐ अन्नात्परिस्रुतो रसम्ब्रह्मणा व्यपिवत्क्षत्रम्पयः सोमम्प्रजापतिः ॥ ऋतेन सत्यमिन्द्रियं विपानꣳ शुक्रमन्धसऽ इन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ॥ ॐभूर्भुवः स्वः वरुणाय नमः नैवेद्यं निवेदयामि ॥ ॐप्राणाय स्वाहेत्यादि गन्धं समर्पयामीत्यन्तं विधाय नैवेद्यान्ते आचमनीयं समर्पयामि ॥ फलम्—ॐ याः फलिनीर्य्याऽ अफलाऽ अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः फलं समर्पयामि ॥ ताम्बूलम्—ॐ उत स्मास्य द्रवतस्तुरण्यतः पर्णन्न वेरनुवाति प्रगर्द्धिनः ॥ श्येनस्येव ध्रजतोऽअङ्कसम्परि

दधिक्राव्ण्णं॑ सहोर्ज्जातरित्रतुः स्वाहा ॥ १५/९ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः ताम्बूलं समर्पयामि ॥ दक्षिणाम्—ॐ हिरण्ण्यगर्भः समवर्त्तताग्ग्रे भूतस्य जातः पतिरेकऽ आसीत् ॥ स दाधार पृथिवीन्द्यामुतेमाङ्कस्म्मै देवाय हविषा विधेम ॥ ४/२३ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः दक्षिणां समर्पयामि ॥ पुष्पाञ्जलिम्—ॐ धामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिं॑ ॥ सचेतसो विश्वेदेवा यज्ञम्प्रावन्तु नः शुभे ॥ ७६/१८ ॥ ॐ भूर्भुवः स्वः वरुणाय नमः पुष्पाञ्जलिं समर्पयामि ॥ प्रार्थनापूर्वकनमस्कारान्—ॐ कुम्भो वनिष्ठुर्ज्जनिता शचीभिर्य्यस्मिन्नग्ग्रे योन्न्याङ्गर्भोऽ अन्तः ॥ प्लाशिर्व्यक्तः शतधारऽ उत्सो दुहे न कुम्भी स्वधाम्पितृब्भ्यः॑ ॥ ८४/१९ ॥ ॐ शङ्खस्फटिकवर्णाभ श्वेतहाराम्बरावृत ॥ पाशहस्त महाबाहो दयाङ्कुरु दयानिधे ॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते॥तीक्ष्णायुधं तीक्ष्णगतिं दिगीशं चराचरेशं वरुणं महान्तम् ॥ प्रचण्डपाशाङ्कुशवज्रहस्तं भजामि देवं कुलवृद्धिहेतोः ॥ ॐ भूर्भुवः स्वः वरुणाय नमः प्रार्थनापूर्वकं नमस्कारान्सम० ॥ पूजानिवेदनम् ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ अनया पूजया कलशस्थितः वरुणः साङ्गः सपरिवारः प्रीयतां न मम ॥

॥ इति षोडशकलशस्थापनपूजाप्रयोगः ॥

॥ अथ सप्तजलजीवस्थलमातृकाणां सागराणाञ्च स्थापनपूजनप्रयोगः ॥

स्वसमीपे श्वेतवस्त्राच्छादिते निर्मितेष्वक्षतपुञ्जेषु पश्चिमतः पूर्वदिक्संस्था दक्षिणत उदगन्ताः प्रतिकोष्टकं सप्त सप्त जलजीलस्थलमातृः क्रमेणावाह्य तदुपरिनिर्मिते एकस्मिन्पुञ्जे एकं वा सप्त सागरानावाहयेत् ॥ तद्यथा ॥ हस्तेऽक्षतानादाय

॥ अथ प्रथमपंक्तौ सप्तपुञ्जेषु दक्षिणत उदक्संस्थं सप्तजलमातृकाणां स्थापनम् ॥

१ ॐ भूर्भुवः स्वः मत्स्यै नमः मत्सीमावा० स्था० ॥ भो मत्सि इहागच्छ इह तिष्ठ ॥
२ ॐ भूर्भुवः स्वः कूर्म्यै नमः कूर्मीमावा० स्था० ॥ भो कूर्मि इहागच्छ इह तिष्ठ ॥
३ ॐ भूर्भुवः स्वः वाराह्यै नमः वाराहीमा० स्था० ॥ भो वाराहि इहागच्छ इह तिष्ठ ॥
४ ॐ भूर्भुवः स्वः माण्डूक्यै०माण्डूकीमा०स्था०॥ भो माण्डूकि इहागच्छ इह तिष्ठ ॥
५ ॐ भूर्भुवः स्वः मकर्यै नमः मकरीमा० स्था० ॥ भो मकरि इहागच्छ इह तिष्ठ ॥
६ ॐ भूर्भुवः स्वः ग्राहक्यै नमः ग्राहकीमा० स्था० ॥ भो ग्राहकि इहागच्छ इह तिष्ठ ॥
७ ॐभूर्भुवःस्वःशैशिक्यैनमःशैशिकीमा०स्था०॥भोशैशिकि०इहागच्छइहतिष्ठ॥

---

१ अत्रापि दद्यकरसुमे नीराजन नोक्तम् ॥

२ मत्सी कूर्मी च वाराही माण्डूकी मकरी तथा ॥ ग्राहकी शैशिकी चैव सप्तैता जलमातरः ॥

॥ तत्पूर्वे द्वितीयपंक्तौ सप्ताक्षतपुञ्जेषु दक्षि० उद० सप्तजीवमातृकाणां स्थापनम्॥

१ ॐ भूर्भुवः स्वः कुमार्यै नमः कुमारीमा० स्था० ॥ भो कुमारि इहागच्छ इह तिष्ठ॥
२ ॐ भूर्भुवः स्वः धनदायै नमः धनदामावा० स्था०॥ भो धनदे इहागच्छ इह तिष्ठ॥
३ ॐ भूर्भुवः स्वः नन्दायै नमः नन्दामावा० स्था० ॥ भो नन्दे इहागच्छ इह तिष्ठ॥
४ ॐ भूर्भुवः स्वः विमलायै नमः विमलामा० स्था०॥ भो विमले इहागच्छ इह तिष्ठ॥
५ ॐ भूर्भुवः स्वः मङ्गलायै नमः मङ्गलामा० स्था० ॥ भो मङ्गले इहागच्छ इह तिष्ठ॥
६ ॐ भूर्भुवः स्वः अचलायै नमः अचलामा० स्था०॥भो अचले इहागच्छ इह तिष्ठ॥
७ ॐ भूर्भुवः स्वः पद्मायै नमः पद्मामावाह० स्था० ॥ भो पद्मे इहागच्छ इह तिष्ठ॥

॥ तत्पूर्वे तृतीयपंक्तौ सप्ताक्षतपुञ्जेषु दक्षि० उद० सप्तस्थलमातृकाणां स्थापनम् ॥

१ ॐ भूर्भुवः स्वः ऊर्म्यै नमः ऊर्मीमावाह० स्था० ॥ भो ऊर्मि इहागच्छ इह तिष्ठ॥
२ ॐ भूर्भुवः स्वः लक्ष्म्यै नमः लक्ष्मीमा० स्था० ॥ भो लक्ष्मि इहागच्छ इह तिष्ठ॥
३ ॐ भूर्भुवः स्वः महामायायै० महामा० स्था०॥ भो महामाये इहागच्छ इह तिष्ठ॥
४ ॐ भूर्भुवः स्वः पानदेव्यै नमः पानदेवी० स्था०॥भो पानदे० इहागच्छ इह तिष्ठ॥
५ ॐ भूर्भुवः स्वः वारुण्यै नमः वारुणीमा० स्था०॥भो वारुणि इहागच्छ इह तिष्ठ॥
६ ॐ भूर्भुवः स्वः निर्मलायै नमः निर्मलामा०स्था०॥भो निर्मले इहागच्छ इह तिष्ठ॥
७ ॐ भूर्भुवः स्वः गोधायै नमः गोधामा० स्था० ॥ भो गोधे इहागच्छ इह तिष्ठ॥

॥ तत्पूर्वे चतुर्थपंक्तौ अक्षतपुञ्जोपरि सप्तसागराणां स्थापनम् ॥

ॐ समुद्रादूर्मिर्म्मधुमाँ२ऽउदारदुपाᳬशुनासममृतत्त्वमानट् ॥ घृतस्यनाम गुह्यंयदस्तिजिह्वादेवानाममृतस्य नाभिः ॥ ६७ ॥ ॐ भूर्भुवः स्वः सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि स्थापयामि ॥ भो सप्तसागराः इहागच्छत इह तिष्ठत॥

प्रतिष्ठापनम्—ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञ० ॥ १३ ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवत ॥ एकतंत्रेण पूजनम्

ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः आसनं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः पादयोः पाद्यं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः हस्तयोरर्घ्यं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः आचमनीयं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः पञ्चामृतस्नानं सम० ॥ ॐ भूर्भुवः स्वः जल-

---

१ कुमारी धनदा नन्दा विमला मङ्गलाऽचला ॥ पद्मा चेति प्रसिद्धास्ताः सप्तैता जीवमातरः ॥
२ ऊर्मी लक्ष्मीर्महामाया पानदेवी तथैव च ॥ वारुणी निर्मला गोधा सप्तैताः स्थलमातरः ॥
३ क्षार-इक्षु-सुरा-सर्पि-दधि-क्षीर-जलाः सप्त सागराः ॥

मातृकाद्यावाहितदेवताभ्यो नमः शुद्धोदकस्नानं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः गन्धं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः अक्षतान् सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः यथालाभोपपन्नानि पुष्पाणि सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः धूपमाघ्रापयामि ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः दीपं दर्शयामि ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः नैवेद्यं निवेदयामि ॥ नैवेद्यं जलेन संप्रोक्ष्य ग्रासमुद्रा दर्शयित्वा पञ्च प्राणाहुतीर्दद्यात् ॥ ॐ प्राणाय स्वाहा ॥ ॐ अपानाय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥ ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥ नैवद्यान्ते आचमनीयं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः मुखवासार्थे पूगीफलं ताम्बूलं सम० ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः यथाशक्ति हिरण्यगर्भदक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य ॥ ॐ नमः इति सम्पूज्य ॥ ॐ अग्निर्देवता० ॥ [२ ४] ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः आरार्तिक्यं सम० ॥ जलेन प्रदक्षिणा कृत्वा पुष्पेण देवतावन्दनं हस्तेन स्वात्मवन्दनं कृत्वा हस्तं प्रक्षाल्य मन्त्रपुष्पाञ्जलिं कुर्यात् ॥ ॐ यज्ञेन यज्ञ० ॥ [१ ६] ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं सम० ॥ विशेषार्घ्यार्थं गन्धाक्षतपुष्पादिभिर्युतं सजलं सफलं सहिरण्यम् अर्घ्यपात्रं हस्तयोर्गृहीत्वा विशेषार्घ्यं दद्यात् ॥ इदं फलं मया देवाः स्थापितं पुरतस्तु वः ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ रूपं देहि जयं देहि भाग्यं भगवति देहि मे ॥ पुत्रान्देहि धनं देहि सर्वान्कामाँश्च देहि मे ॥ ॐ भूर्भुवः स्वः जलमातृकाद्यावाहितदेवताभ्यो नमः विशेषार्घ्यं सम० ॥ हस्ते जलं गृहीत्वा अनया पूजया जलमातृकाद्यावाहितदेवताः प्रीयन्तां न मम ॥

॥ इति जलजीवस्थलमातृकासहितसप्तसागरपूजनप्रयोगः समाप्तः ॥

॥ अथ इन्द्रादीनां पूजनपूर्वकबलिदानप्रयोगः ॥

तत आचार्यः कलशानां परितः दशदिक्षु इन्द्रादीनां बलिदानार्थं पृथक् पृथक् एकस्मिन्पर्णपुटे पत्रावल्यां वा सदीपमाषभक्तबलिं दध्योदनं वा निधाय यजमानहस्तेन बलिदानं कारयेत् ॥ यजमानो हस्ते जलं गृहीत्वा देशकालौ सङ्कीर्त्य कृतस्य जलयात्राकर्मणः साङ्गतासिद्ध्यर्थं यथाशक्ति पूजनपूर्वकं क्षेत्रपालसमन्वितेन्द्रा-

१ [illegible] ॥

विदशदिक्पालदेवतानां वलिदानं करिष्ये ॥ इति सङ्कल्पं कृत्वा गन्धाक्षतपुष्पाण्यादाय ॥ पूर्वे—ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ शूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ॥ ॥प्राच्याम्—इन्द्रं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तवलिं समर्पयामि ॥ भो इन्द्र दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन वलिदानेन इन्द्रः प्रीयताम् ॥ १ ॥ आग्नेय्याम्—ॐ त्वन्नोऽ अग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ ॥ आग्नेय्याम्—अग्निं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तवलिं समर्पयामि ॥ भो अग्ने दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन वलिदानेन अग्निः प्रीयताम् ॥ २ ॥ दक्षिणस्याम्—ॐ यमाय त्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्मायस्वाहाघर्म्मः पित्रे ॥ ॥दक्षिणस्याम्—यमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तवलिं समर्पयामि ॥ भो यम दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन वलिदानेन यमः प्रीयताम् ॥ ३ ॥ नैर्ऋत्याम्—ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु ॥ ॥ नैर्ऋत्याम्—निर्ऋतिं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ निर्ऋतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तवलिं समर्पयामि ॥ भो निर्ऋते दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन वलिदानेन निर्ऋतिः प्रीयताम् ॥४॥ पश्चिमायाम्—ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳस मानऽआयुः प्रमोषीः ॥ ॥ पश्चिमायाम्—वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तवलिं समर्पयामि ॥ भो वरुण

दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव॥ अनेन बलिदानेन वरुणः प्रीयताम्॥ ५॥ वायव्याम्—ॐ आनो॑ नियुद्भिः॑ शतिनी॑भिरध्वरᳪ स॑हस्रिणी॑भिरुप॑ याहि युज्ञम्॥ वायो॑ऽ अस्मिन्त्सव॑ने मादयस्व यूयम्पा॑त स्वस्तिभिः॒ सदा॑ नः॥ २७/२८॥ वायव्याम्—वायुं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि॥ वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि॥ भो वायो दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव॥ अनेन बलिदानेन वायुः प्रीयताम्॥ ६॥ उत्तरस्याम्—ॐ व्व॒यᳪ सो॑म व्र॒ते तव॒ मन॑स्त॒नूषु॒ बिभ्र॑तः॥ प्र॒जाव॑न्तः सचेमहि॥ ५३/३॥ उदीच्याम्—सोमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि॥ सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि॥ भो सोम दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव॥ अनेन बलिदानेन सोमः प्रीयताम्॥७॥ ईशान्याम्—ॐ तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑ धियञ्जि॒न्वमव॑से हूमहे व॒यम्॥ पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑॥ २५/१८॥ ईशान्याम्—ईश्वरं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि॥ ईश्वराय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि॥ भो ईश्वर दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव॥ अनेन बलिदानेन ईश्वरः प्रीयताम्॥ ८॥ ऊर्ध्वायाम्—ॐ अ॒स्मे रु॒द्रा मे॒हना॒ पर्व॑तासो वृत्र॒हत्ये॒ भर॑हूतौ स॒जोषाः॑॥ यः शᳪस॑ते स्तुव॒ते धायि॑ प॒ज्र इन्द्र॑ज्ये॒ष्ठाऽअ॒स्माँ२ऽ अ॑वन्तु दे॒वाः॥ ३३/५०॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्—ब्रह्माणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि॥ ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमापभक्तबलिं समर्पयामि॥ भो ब्रह्मन् दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव॥ अनेन बलिदानेन ब्रह्मा प्रीयताम्॥ ९॥ अधः—ॐ स्यो॒ना पृ॑थिवि नोभवानृक्ष॒रा नि॒वेश॑नी॥ यच्छा॑ नः॒ शर्म्म॑ स॒प्रथाः॑॥ ३६/१३॥ निर्ऋतिपश्चिमयोर्मध्ये अधस्तात्—अनन्तं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि॥ अनन्ताय

साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो अनन्त दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन बलिदानेन अनन्तः प्रीयताम् ॥१०॥ तत एकस्मिन्पत्रावल्यां सदीपमाषभक्तबलिं निधाय ॐ नहिस्पशमविं० ॥ $\frac{६०}{३३}$ ॥ डाकिनीशाकिनीभूतप्रेतपिशाचसहितं श्रीक्षेत्रपालं एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ डाकिनीशाकिनीभूतप्रेतपिशाचसहिताय श्रीक्षेत्रपालाय इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो डाकिनीशाकिनीभूतप्रेतपिशाचसहित क्षेत्रपाल दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ हस्ते जलं गृहीत्वा ॥ अनेन पूजनपूर्वकसदीपमाषभक्तबलिदानेन डाकिनीशाकिनीभूतप्रेतपिशाचसहितः क्षेत्रपालः प्रीयतां न मम ॥

॥ इति क्षेत्रपालसहितेन्द्रादिदेवानां पूजनपूर्वकबलिदानप्रयोगः समाप्तः ॥

॥ अथ जलाशयस्थितजले वरुणावाहनं पूजनञ्च ॥

सपत्नीको यजमानो जलाशयस्य समीपे गत्वा हस्ते अक्षतान्गृहीत्वा जले वरुणावाहनं कुर्यात् ॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ तीक्ष्णायुधं तीक्ष्णगतिं दिगीशं चराचरेशं वरुणं महान्तम् ॥ प्रचण्डपाशाङ्कुशवज्रहस्तं भजामि देवं कुलवृद्धिहेतोः ॥ आवाहयाम्यहं देवं वरुणं यादसां पतिम् ॥ प्रतीचीशं जगत्प्राणसेवितं पाशहस्तकम् ॥ ॐ उरुꣳहि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाउ ॥ अपदे पादाप्रतिधातवेकरुतापवक्ता हृदयाविधश्चित ॥ नमोवरुणायाभिष्ठितो-

[1] एकतंत्रेण बलिदानपक्षे हस्ते जलं गृहीत्वा ॥ अस्य जलयात्राकर्मणः साङ्गतासिद्ध्यर्थं क्षेत्रपालसहितानाम् इन्द्रादिदशदिक्पालदेवानामेकतंत्रेण बलिदानं करिष्ये इति सङ्कल्प्य । ततो हस्ते गन्धाक्षतपुष्पाण्यादाय ॐ प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ $\frac{२४}{२६}$ ॥

क्षेत्रपालसहितान् इन्द्रादिदशदिक्पालदेवान् साङ्गान् सपरिवारान् सायुधान् सशक्तिकान् एभिर्गन्धाद्युपचारैर्वः पूजयामि ॥ क्षेत्रपालसहितेभ्यः इन्द्रादिदशदिक्पालदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपमाषभक्तबलिं समर्पयामि ॥ भो भो क्षेत्रपालसहिताः इन्द्रादिदशदिक्पालदेवाः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः इमं बलिं गृह्णीत ॥ ममाभ्युदयं कुरुत ॥ आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः कल्याणकर्तारो वरदा भवत ॥ अनेन पूजनपूर्वकैकतंत्रेण बलिदानेन क्षेत्रपालसहिता इन्द्रादिदशदिक्पालदेवाः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः प्रीयन्तां न मम ॥

वरुणस्यपाशः ॥ ॥ ॐ तत्त्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेहबोध्युरुशꣳस मा नऽ आयुः प्रमोषीः ॥ १८।४९॥ अस्मिञ्जलाशयस्थितजले वरुणमावाहयामि स्थापयामि ॥ पुनरक्षतानादाय ॥

प्रतिष्ठापनम्—ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दधातु ॥ विश्वेदेवासऽ इह मादयन्तामो३म्प्रतिष्ठ ॥ २।१३॥ ॐ भूर्भुवः स्वः अस्मिन् जलाशये वरुणः सुप्रतिष्ठितो वरदो भव ॥ पुनर्हस्तेऽक्षतानादाय आसनम् ॥ ॐभूर्भुवः स्वः जलाशयस्थितवरुणाय नमः आसनार्थे अक्षतान्सम० ॥ पाद्यम् ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः पादयोः पाद्यं सम० ॥ अर्घ्यम् ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः हस्तयोरर्घ्यं सम० ॥ आचमनीयम् ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः आचमनीयं सम० ॥ पञ्चामृतस्नानम्॥पृथक्पृथग्मन्त्रेण जलाशये पञ्चामृतं क्षिपेत् ॥ यथा।

पयःप्रक्षेपः ॥ ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीःप्रदिशःसन्तुमह्यम् ॥ १८।३६॥ दधिप्रक्षेपः ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभि नो मुखाकरत्प्रणऽ आयूꣳषितारिषत् ॥ २३।३२ ॥ घृतप्रक्षेपः ॥ ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृतेश्रितोघृतम्बस्य धाम ॥ अनुष्ष्वधमावह मादयस्व स्वाहा कृतं वृषभवक्षि हव्यम् ॥ १७।८८ ॥ मधुप्रक्षेपः ॥ ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳ रजः ॥ मधु द्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाँ२ऽ अस्तु सूर्यः ॥ माध्वीर्गावो भवन्तु नः ॥ २७।२८।२९ १३ ॥ शर्कराप्रक्षेपः ॥ ॐ अपाꣳ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ॥ अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयाम गृहीतोसीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ ९।३ ॥ शुद्धोदकस्नानम् ॥ ॐ वरुणस्योत्तम्भनमसि० ॥ ४।३६ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः शुद्धोदकस्नानं सम० ॥ गन्धम् । ॐ त्वाङ्गन्धर्वा० ॥ १२।९८ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः गन्धं सम० ॥ अक्षतान् । ॐ अक्षन्नमी० ॥ ३।५१ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः अक्षतान्सम० ॥ पुष्पाणि । ॐ ओषधीः ॥ १२।९७ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः पुष्पाणि सम० ॥ सौभाग्यपरिमलद्रव्याणि ॥ ॐ अहिरिव० ॥ २९।५१ ॥ ॐ भूर्भुवः स्वः जलाशयतस्थितवरुणाय नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ धूपम् ॥ ॐ धूरसि० ॥ १।८॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः

धूपमाघ्रापयामि ॥ दीपम् ॥ ॐ चन्द्रमामनसो० ॥ ३१/१२ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः दीपं दर्शयामि ॥ दधिनैवेद्यम् ॥ ॐ अन्नपतेन्न० ॥ ११/८३ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः दधिनैवेद्यं समर्प० ॥ मुखवासार्थे पूगीफलं ताम्बूलम् ॥ ॐ याः फलिनी० ॥ १२/८९ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः मुखवासार्थे पूगीफलं ताम्बूलं सम० ॥ दक्षिणाम् ॥ ॐ हिरण्यगर्भः० ॥ १३/४ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः यथाशक्ति हिरण्यगर्भदक्षिणां सम० ॥ नीराजनम् ॥ एकस्मिन्पात्रे कर्पूरं घृतवर्तिकां वा प्रज्वाल्य ॐनमः इति सम्पूज्य ॥ ॐ इदꣳ हविः० ॥ १९/४८ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः आरार्तिक्यं सम० ॥ जलेन प्रदक्षिणां कृत्वा ॥ हस्तेन आत्मवन्दनं हस्तप्रक्षालनं कृत्वा मन्त्रपुष्पाञ्जलिम् ॥ ॐ तत्त्वायामि० ॥ २१/२ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः मन्त्रपुष्पाञ्जलिं सम० ॥ विशेषार्घ्यः ॥ एकस्मिन्पात्रे सजलगन्धाक्षतपुष्पफलानि गृहीत्वा यथाशक्ति किञ्चिद्द्रव्यञ्च निधाय ॥ ॐ इमम्मे वरुणश्रुधी० ॥ २१/१ ॥ ॐभूर्भुवः स्वः जलाशयस्थितवरुणाय नमः विशेषार्घ्यं सम० ॥ प्रार्थनाम् ॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान्भगवन्नमस्ते ॥ १ ॥ तीक्ष्णायुधं तीक्ष्णगतिं दिगीशं चराचरेशं वरुणं महान्तम् ॥ प्रचण्डपाशाङ्कुशवज्रहस्तं नमामि देवं कुलवृद्धिहेतोः ॥ २ ॥ नमामि वरुणं देवं यादसां पतिमीश्वरम् ॥ प्रतीचीशं जगत्प्राणसेवितं पाशहस्तकम् ॥ ३ ॥ ॐ भूर्भुवः स्वः जलाशयस्थितवरुणाय नमः प्रार्थनां सम० ॥ हस्ते जलं गृहीत्वा ॥ अनया पूजया जलाशयस्थितवरुणः साङ्गः सपरिवारः प्रीयतां न मम ॥ ततो जले स्रुवेण घृताहुतीर्दद्यात् ॥ तद्यथा ॥ ॐ अद्भ्यः स्वाहा ॥ इदमद्भ्यो न मम ॥ १ ॥ ॐ वार्भ्यः स्वाहा ॥ इदं वार्भ्यो न मम ॥ २ ॥ ॐ उदकाय स्वाहा ॥ इदमुदकाय न मम ॥ ३ ॥ ॐ तिष्ठन्तीभ्यः स्वाहा ॥ इदं तिष्ठन्तीभ्यो न मम ॥ ४ ॥ ॐ स्रवन्तीभ्यः स्वाहा ॥ इदं स्रवन्तीभ्यो न मम ॥ ५ ॥ ॐ स्यन्दमानाभ्यः स्वाहा ॥ इदं स्यन्दमानाभ्यो न मम ॥ ६ ॥ ॐ कूप्याभ्यः स्वाहा ॥ इदं कूप्याभ्यो न मम ॥ ७ ॥ ॐ सूद्याभ्यः स्वाहा ॥ इदं सूद्याभ्यो न मम ॥ ८ ॥ ॐ धार्याभ्यः स्वाहा ॥ इदं धार्याभ्यो न मम ॥ ९ ॥ ॐ अर्णवाय स्वाहा ॥ इदमर्णवाय न मम ॥ १० ॥ ॐ समुद्राय स्वाहा ॥ इदं समुद्राय न मम ॥ ११ ॥ ॐसरिराय स्वाहा ॥ इदं सरिराय न मम ॥१२॥ ततो वरुणं पुनः प्रार्थयेत् ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ॥ सुपाशहस्ताय झषासनाय जला-

धिनाथाय नमो नमस्ते॥ इति सम्प्रार्थ्य ॥ ततः सपत्नीको यजमानः पुनः स्वासने उपविश्य हस्ते जलं गृहीत्वा कृतस्य जलयात्राकर्मणः साङ्गतासिद्ध्यर्थं वृतेभ्य आचार्यादिसर्वेभ्य ऋत्विग्भ्यः यथाशक्ति भूयसीं दक्षिणां दास्ये ॥ ततो हस्ते अक्षतान्गृहीत्वा स्थापितदेवतानां विसर्जनं कुर्यात् ॥ ॐ समुद्रङ्गच्छ स्वाहा न्तरिक्षङ्गच्छस्वाहा देवꣳसवितारङ्गच्छस्वाहा मित्रावरुणौगच्छस्वाहा होरात्रेगच्छस्वाहा च्छन्दाꣳसिगच्छस्वाहा द्यावापृथिवीगच्छस्वाहा यज्ञङ्गच्छस्वाहा सोमङ्गच्छस्वाहा दिव्यन्नभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहा मनोमेहार्दियच्छदिवन्तेधूमोगच्छतु स्वर्ज्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा ॥ २१ ॥ इति मन्त्रेण जलमातृकादि स्थापितदेवतानां विसर्जनं कृत्वा॥ ततः स्थापितवरुणकलशानामुत्थापनं कुर्यात्॥ हस्तेऽक्षतानादाय ॥ ॐउत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उप प्रयन्तु मरुतः सुदानवऽ इन्द्र प्राशूर्भवा सचा ॥ ३६ ॥ इत्यक्षतान् सर्वेषु कलशेषु निक्षिप्य कलशानुत्थाप्य सुवासिनीभ्यः क्रोडे हरिद्रासौभाग्यद्रव्यताम्बूलचणकांश्च दत्वा प्रत्येकं एकैकं कलशं दद्यात् ॥ ताश्च स्वस्य मस्तके धृत्वा मार्गे शनैः शनै राचार्यादीन् अनुसरन्त्यो मण्डपं प्रत्यागच्छेयुः ॥ आचार्यादय ऋत्विजश्च मार्गे । ॐ यथेमांवाचम् इत्यादिशाकुनसूक्तं आनोभद्रा इत्यादिसूक्तञ्च पठेयुः ॥ ततो यजमानः अर्धमार्गे गत्वा क्षेत्रपालपूजनपूर्वकं बलिदानं कुर्यात् ॥ तद्यथा । आचार्योऽर्धमार्गे जलेन भूमिं सम्प्रोक्ष्य अक्षतपुञ्जोपरि क्षेत्रपालमावाहयेत्॥ ॐनहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः॥ एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरङ्क्षैत्रजित्याय देवाः ॥ ६२ ॥ ॐ भूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालमावाहयामि स्थापयामि ॥ पूजनम्—ॐ क्षेत्रपालाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ ततः क्षेत्रपालाग्रे सदीपमाषभक्तबलिदानं संस्थाप्य ॥ ॐ क्षत्रस्योल्वमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायं वृत्रं वधेत् ॥ दृवासि रुजासि क्षुमासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दिग्भ्यः पात ॥ ७६ ॥ भगवन् क्षेत्रपाल भासुर त्रिनेत्र ज्वालामुख अवतर अवतर कपिल पिङ्गल ऊर्ध्वकेश जिह्वाललन छिन्दि छिन्दि भिन्धि भिन्धि कुरु कुरु मुरु मुरु चल चल ( लं लः ) ह्रां ह्रीं ह्रूं ह्रैं ॐ भगवन् क्षेत्रपाल मम यज्ञं रक्ष रक्ष बलिं गृह्ण गृह्ण स्वाहा॥ ॐक्षेत्रपालाय नमः सदीपमाषभक्तबलिं समर्पयामि ॥ इति जलमुत्सृज्य स्वयं जलस्पर्शनं कुर्यात् ॥ ततो यज्ञमण्डपस्य द्वारसमीपं

समागत्य शिष्टाचाराद्यजमानस्य सर्वदोषप्रशमनार्थं तत्र द्वारस्य समीपे पुनः क्षेत्रपालस्य पूजनं कृत्वा पूर्ववद्बलिदानं कुर्यात् ॥ तत्र किञ्चिद्भूमिं जलेनोपलिप्य तण्डुलैः पुञ्जं कृत्वा ॐनमोऽस्तु सर्प्पेभ्यो० ॥ ६/१३ ॥ ॐनहिस्पशमवि० ॥ ६०/२२ ॥ इति मन्त्रेण वा ॐ भूर्भुवः स्वः क्षेत्रपालाय नमः क्षेत्रपालम् आवाह० ॥ स्थाप० ॥ इत्यावाह्य हस्ते गन्धाक्षतपुष्पाण्यादाय ॥ ॐभूर्भुवःस्वः क्षेत्रपालाय साङ्गाय सपरिवाराय सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ इति सम्पूज्य । तत्र सदीपमाषभक्तबलिं निधाय हस्ते जलं गृहीत्वा ॥ नमो भगवते क्षेत्रपालाय भासुराय । भो त्रिनेत्र ज्वालामुख अवतर अवतर कपिल पिङ्गल ऊर्ध्वकेश जिह्वाललन छिन्दि छिन्दि भिन्धि भिन्धि कुरु कुरु चल चल ह्रां ह्रीं ह्रूं ह्रैं बलिं गृह्ण गृह्ण स्वाहा ॥ इति जलमुत्सृज्य नाराचमुद्रया क्षेत्रपालं विसृज्य स्वयं स्वदक्षिणकर्णं जलमुपस्पृश्य यजमानो मण्डपस्य सुवासिनीभिः आचार्यादिभिश्च वृतः पश्चिमद्वारं समागत्य तिष्ठेत् ॥ ततोऽन्या काचन सुवासिनी एकस्मिन्पात्रे कर्पूरं प्रज्वाल्य सपत्नीकस्य यजमानस्य कलशहस्तानां सुवासिनीनाञ्च नीराजनं कुर्यात् । तद्यथा ॥ ॐ अनाधृष्टा पुरस्तादग्नेराधिपत्यऽ आयुर्म्मे दाः पुत्रवती दक्षिणतऽ इन्द्रस्याधिपत्ये प्रजाम्मे दाः ॥ सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्म्मे दाऽ आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषम्मे दाः ॥ विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्यऽओजोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ ३३/१७ ॥ ततः सपत्नीको यजमानः कलशहस्ताभिः अन्याभिः सुवासिनीभिश्च सह यज्ञमण्डपस्य अन्तर्भागं समागत्य वायव्यां क्षेत्रपालपीठस्य दक्षिणभागे श्वेतवस्त्राच्छादिते तण्डुलैः कृताष्टदले वारुणयन्त्रनिर्मिते वा स्नानपीठे कलशान् स्थापयेत् ॥

॥ इति जलयात्राप्रयोगः समाप्तः ॥

1 तत आचार्यः सपत्नीकं सपरिवारं यजमानं तण्डुलैः कृतचतुरस्रे भद्रासने ( वारुणपीठे ) उपवेश्य स्वयं ऋत्विग्ब्राह्मणैः सह उदङ्मुखः सन् आनीतेभ्यो जलयात्राकलशेभ्यः किञ्चिज्जलं पात्रान्तरे गृहीत्वा सप्तधान्यदूर्वाकुशपञ्चपल्लवादिभिः स्वस्तिवाचनोक्तैरभिषेकमंत्रैश्च यजमानमूर्ध्नि अभिषेकं कुर्यात् ॥ उक्तञ्च ॥ अभिषेकं मूर्ध्नि होमं माङ्गल्यं स्वस्तिवाचनम् ॥ प्रैषञ्च मन्त्रपाठञ्च तिष्ठन् कुर्यात्सदैव हि ॥ इति रुद्रकल्पद्रुमकाराः ॥ परञ्च प्रायः याज्ञिकाश्चरमेऽहनि कर्मणः समाप्त्यनन्तरं अवभृथस्नानाभावे एतेभ्यः कलशेभ्यः प्रधानकलशाच्च जलमादाय यजमानं भद्रासने उपवेश्याभिषेकं कुर्वन्ति ॥



॥ अथ सर्वतोभद्रमण्डलदेवतानां स्थापनपूजनप्रयोगः ॥

आचम्य प्राणानायम्य ॥ अत्राद्येति देशकालौ संकीर्त्य प्रारब्धस्य गायत्रीपुरश्चरणकर्मणोऽङ्गत्वेन अस्मिन् सर्वतोभद्रमण्डले ब्रह्मादिदेवानामावाहनप्रतिष्ठापूर्वकपूजनमहं करिष्ये ॥ अक्षतान् गृहीत्वाऽऽवाहनं कुर्यात् ॥ तत्र मध्ये कर्णिकायां




ब्रह्माणमावाहयेत् ॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ २ ॥ एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः ॥ सर्वस्य धाताऽस्य मितप्रभावो रक्षाध्वरं

१ भद्रकारिकाः ॥ प्रागुदीच्यायता रेखाः कुर्यादेकोनविंशतिः ॥ खण्डेन्दुस्त्रिपदः कोणे शृङ्खला पञ्चभिः पदैः ॥ १ ॥ एकादशपदा वल्ली भद्रं तु नवभिः पदैः ॥ चतुर्विंशत्पदा वापी परिधिर्विंशतिः पदैः ॥ २ ॥ मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम् ॥ श्वेते तु शृङ्खला कृष्णा वल्ली नीलेन पूरयेत् ॥ ३ ॥ भद्रारुणा सितावापी परिधिः पीतवर्णकैः ॥ मध्योत्तरदलैः श्वेता कर्णिका पीतवर्णका ॥ ४ ॥ परिध्यावेष्टितं पद्मबाह्ये सत्वं रजस्तमः ॥ तन्मध्ये स्थापयेद्देवान्ब्रह्माद्यांश्च सुरेश्वरान् ॥ ५ ॥ इति सर्वतोभद्रप्रमाणम् ॥

२ अस्माभिः कुम्भस्थापनेतिसर्वदेवतानामके प्रकरणे मध्ये कुम्भे गायत्र्याः कुम्भस्थापनं तथैव मण्डलाद्बहिः गायत्र्यावाहने कुम्भं कुत्र रीति सर्वम्मसिस्थादिविषयेषु विस्तरेण प्रतिपत्तिः प्रतिपादिता ॥ तथापि शिष्ट·

नः सततं शिवाय ॥ ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि॥भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ १ ॥ तत उत्तरे वाप्यां सोममावाहयेत् ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुविब्भ्रतः ॥ प्रजावन्तꣳसचेमहि ॥ ३/६ ॥ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्धम् ॥ सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि ॥ भो सोम इहागच्छ इह तिष्ठ ॥ २ ॥ तत ईशान्यां खण्डेन्दावीशानमावाहयेत् ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ३/२६ ॥ एह्येहि यज्ञेश्वर नस्त्रिशूलकपालखट्वाङ्गधरावसार्धम् ॥ लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि॥ भो ईशान इहागच्छ इह तिष्ठ ॥ ३ ॥ ततः पूर्वस्यां वाप्यामिन्द्रमावाहयेत् ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ २/०/० ॥ एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो, वज्रधरामरेश ॥ संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं त्वं भगवन्नमस्ते ॥ ॐभूर्भुवः स्वः इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि॥ भो इन्द्र इहागच्छ इह तिष्ठ ॥४॥ तत आग्नेय्यां खण्डेन्दावग्निमावाहयेत् ॥ ॐत्वन्नोऽअग्नेवरुणस्यविद्वा-

---

लोकनन्यायेन पुनरप्यत्रोच्यते ॥ तद्यथा ॥ मण्डपस्य मध्यनवमांशे कुण्डे कृते मण्डपप्रवेशानन्तरं वास्तुपीठादिपरिवारदेवतानामावाहनं पूजनञ्च निर्वर्त्य यथावकाशं जलयात्रामपि कृत्वा पूर्वस्यां कृते कुण्डमानसदृशे समचतुरस्रे गायत्र्या पीठे सर्वतोभद्रमण्डलदेवतानामावाहनं पूजनञ्च कृत्वा तदुपरि कलशे भगवतीं श्रीगायत्रीदेवीं स्थापयित्वाऽऽवाहने पूजने च कृते यजमानं कुण्डस्य समीपं उपवेश्य कुण्डस्थदेवतानां पूजनमग्न्यावाहनञ्च विधेयम् । ततो ग्रहस्थापनम् ॥ परञ्च यदि गायत्र्यावाहनार्थं मध्ये वेदी कृता चेत् तत्रापि पूर्ववत् वास्तुपीठादिसमस्तपरिवारदेवतानामावाहनं पूजनञ्च कृत्वा यथावकाशं जलयात्रामपि विधाय मण्डपस्य मध्यनवमांशे कृतायां मध्यवेद्यां सर्वतोभद्रमण्डलदेवतानाम् आवाहनपूजनानन्तरं तदुपरि मध्ये कलशं स्थापयित्वा तत्र मूर्तिं प्रतिष्ठाप्य गायत्रीमावाह्य पूजनं कारयित्वा कुण्डपूजनम् अग्न्यावाहनं ग्रहस्थापनञ्च कुर्यात् ॥ एककुण्डपक्षे ईशान्यां पश्चिमस्याम् उत्तरस्यां वा कुण्डविधानदर्शनात् यत्र मध्ये वेदिस्तत्र यजमानकर्तृकपूजनस्य सौकर्यार्थं तथैव शिष्टागमप्राप्तायाः प्रचलितायाः उत्तरदिक्स्थपूजनकर्मप्रणालिकायाश्च संरक्षणार्थम् उत्तरदिशि कुण्डकरणं विशेषतया सर्वसम्मतं प्रतिभाति ॥ इति कृत्वाऽस्माभिरपि गायत्रीपुरश्चरणस्य जपप्रधानकर्मत्वात् पूर्वोक्तोत्तरदिक्संस्थकर्मणः सर्वसम्मतत्वाच्चोत्तरस्यामेव कुण्डविधानं कृत्वा (कुण्डपूजनारम्भे) गायत्र्या आवाहनार्थं सर्वतोभद्रमण्डलस्य स्थापनं क्रियते ॥ अतोऽन्यानि अन्यदिक्षु जपाग्निहोमेऽपि मध्ये पीठकुण्डविधायकानि विधिवचनानि गौणानीति नास्माकमभिप्राय इति विदाङ्कुर्वन्तु याज्ञिककर्ममर्मज्ञा विद्वांस । इत्यलमतिविस्तरेण ॥

१ नाममन्त्रैः ब्रह्मादिषट्पञ्चाशत्सर्वतोभद्रमण्डलदेवतावाहनस्थापनप्रतिष्ठापूजनप्रयोगः ॥

१ मध्ये कर्णिकायाम् ॐ भूर्भुव स्व ब्रह्मणे नम ब्रह्माणमा० स्थापयामि ॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥
२ उत्तरे परिधयन्तः वाप्याम् ॐ भूर्भुव स्व सोमाय नम सोममा० स्था० ॥ भो सोम इहागच्छ इह तिष्ठ ॥
३ ऐशान्यां खण्डेन्दौ ॐ भूर्भुव स्व ईशानाय नम ईशानमा० स्था० ॥ भो ईशान इहागच्छ इह तिष्ठ ॥
४ पूर्वे वाप्याम् ॐ भूर्भुव स्व इन्द्राय नम इन्द्रमावाहयामि स्थापयामि ॥ भो इन्द्र इहागच्छ इह तिष्ठ ॥

न्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत् ॥ २१ ॥ एह्येहि सर्वामरहव्यवाह युधिप्रवीरैरमराभिजुष्ट ॥ तेजोवता लोकगणेन साकं ममाध्वरं पाहि कवे नमस्ते ॥ ॐ भूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थापयामि ॥ भो अग्ने इहागच्छ इह तिष्ठ ॥ ६ ॥ ततो दक्षिणे वाप्यां यममावाहयेत् ॥ ॐ सुगन्नुपन्थाम्प्रदिशन्नऽएहि ज्योतिष्मध्येह्यजरन्नऽआयुः ॥ अपैतु मृत्युममृतम्मऽआगाद्वैवस्वतोनोऽअभयं कृणोतु ॥ एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ॥ शुभाशुभानन्द शुचामधीश शिवाय पाहि भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः यमाय नमः यममावाहयामि स्थापयामि॥ भो यम इहागच्छ इह तिष्ठ ॥ ततो नैर्ऋत्यां खण्डेन्दौ निर्ऋतिमावाहयेत् ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छसातऽइत्त्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६३/१२ ॥ एह्येहि रक्षोगण नायक त्वं विशालवैतालपिशाचसङ्घैः ॥ ममाध्वरं पाहि पिशाचनाथ लोकेश्वर त्वं भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि ॥ भो निर्ऋते इहागच्छ इह तिष्ठ ॥ ७ ॥ ततः पश्चिमे वाप्यां वरुणमावाहयेत् ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥ १/१८ ॥ एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ॥ विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥ ८ ॥ ततो वायव्यां खण्डेन्दौ वायुमावाहयेत् ॥ ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिःसदानः ॥ २७ ॥ एह्येहि यज्ञेश समीरण त्वं मृगाधिरूढः सह सिद्धसङ्घैः ॥ प्राणस्वरूपी सुरतासहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि ॥ भो वायो इहागच्छ इह तिष्ठ ॥ ९ ॥ ततो वायुसोमयोर्मध्ये भद्रे अष्टवसूनावाहयेत् ॥ ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकाम-

५ आग्नेय्यां खण्डेन्दौ ॐ भूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थाप० ॥ भो अग्ने इहागच्छ इह तिष्ठ ॥
६ दक्षिणे वाप्याम् ॐभूर्भुवः स्वः यमाय नमः यममावाहयामि स्थापयामि ॥ भो यम इहागच्छ इह तिष्ठ ॥
७ नैर्ऋत्यां खण्डेन्दौ ॐ भूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमा० स्थाप० ॥ भो निर्ऋते इहागच्छ इह तिष्ठ ॥
८ पश्चिमे वाप्याम् ॐभूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थापयामि ॥ भो वरुण इहागच्छ इह तिष्ठ ॥
९ वायव्यां खण्डेन्दौ ॐभूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि ॥ भो वायो इहागच्छ इह तिष्ठत॥

धुक्ष ॥ ९ ॥ एतैत सर्वे वसवो निधीशा रत्नाकराः सर्वसहस्रभासः ॥ धनस्वरूपा मम पान्तु यज्ञं गृह्णीत पूजां भगवन्त एताम् ॥ ॐभूर्भुवः स्वः अष्टवसुभ्यो नमः अष्टवसूनावा० स्था० ॥ भो अष्टवसवः इहागच्छत इह तिष्ठत ॥ १० ॥ ततः सोमेशानयोर्मध्ये भद्रे एकादश रुद्रानावाहयेत् ॥ ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्यामुततेनमः ॥ १० ॥ एह्येहि यज्ञेश्वर नस्त्रिशूलकपालखट्वाङ्गधरावसार्धम् ॥ लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ ॐभूर्भुवः स्वः एकादशरुद्रेभ्यो नमः एकादशरुद्रानावा०स्था० ॥ ११ ॥ भो एकादश रुद्राः इहागच्छत इह तिष्ठत ॥ तत ईशानपूर्वयोर्मध्ये भद्रे द्वादशादित्यानावाहयेत् ॥ ॐअदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः ॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्त्वम् ॥ ११ ॥ एह्येहि पद्मासन पद्मपाणे सुरक्तसिन्दूरसमानवर्ण ॥ सप्ताश्व रक्ताम्बर सूर्य शीघ्रं गृहाण पूजां भगवन्नमस्ते ॥ ॐभूर्भुवः स्वः द्वादशादित्येभ्यो नमः द्वादशादित्यानावा० स्था० भो द्वादशादित्या इहागच्छत इह तिष्ठत ॥ १२ ॥ तत इन्द्राग्न्योर्मध्ये भद्रेऽश्विनावावाहयेत् ॥ ॐ अश्विनातेजसाचक्षुः प्राणेनसरस्वतीवीर्य्यम् ॥ वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ १२ ॥ अश्विनौ देववैद्यौ च सर्गस्थित्यन्तकारकौ ॥ आगच्छतम् मण्डले तु पूजयाऽभीष्टसिद्धये ॥ ॐ भूर्भुवः स्वः अश्विभ्यां नमः अश्विनावावा० स्था० ॥ भो अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥ १३ ॥ ततः अग्नियमयोर्मध्ये भद्रे सपितॄन् विश्वेदेवानावाहयेत् ॥ ॐ विश्वेदेवासऽआगतशृणुतामऽइमꣳ हवम् ॥ एदम्बर्हिर्निषीदत ॥ उपयामगृहीतोसिविश्वेब्भ्यस्त्वादेवेब्भ्यऽएषतेयोनिर्विश्वेब्भ्यस्त्वादेवेब्भ्यः ॥ १४ ॥ विश्वानावाहयिष्यामि देवतानां वरप्रदाः ॥ आयान्तु मम यज्ञेऽस्मिन् विश्वेदेवास्त्रयोदश ॥ ॐ भूर्भुवः स्वः विश्वेभ्यो देवेभ्यो नमः विश्वेदेवानावा० स्था० ॥ भो विश्वेदेवा इहागच्छत इह तिष्ठत ॥ तत्रैव ॐआयन्तुनः पितरः सोम्म्यासोग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञेस्वधयामदन्तोधिब्रुवन्तुतेवन्त्वस्मान् ॥ १६ ॥ अहमावाहयिष्यामि पितॄँस्तेजसोऽधिकान् ॥ आयान्तु पितरः सर्वे यज्ञान्ते

१० वायुसोममध्ये भद्रे ॐभूर्भुवः स्वः अष्टवसुभ्यो नमः अष्टवसूना० स्थापयामि॥भो अष्ट० इहागच्छत इह तिष्ठत॥

११ सोमेशानमध्ये भद्रे ॐ भूर्भुवः स्वः एकादशरुद्रेभ्यो नमः एकादशरुद्रानावाहयामि स्थापयामि ॥ भो एकादशरुद्राः इहागच्छत इह तिष्ठत ॥

१२ ईशानपूर्वयोर्मध्ये भद्रे ॐ भूर्भुवः स्वः द्वादशादित्येभ्यो नमः द्वादशादित्यानावाहयामि स्थापयामि ॥ भो द्वादशादित्याः इहागच्छत इह तिष्ठत ॥

१३ इन्द्राग्निमध्ये भद्रे ॐभूर्भुवः स्वः अश्विभ्यां० अश्विनौ० आ० स्था०॥भो अश्विनौ इहागच्छतम् इह तिष्ठतम्॥

शुभदायकाः॥ ॐ भूर्भुवः स्वः पितृभ्यो नमः पितॄनावा० स्था०॥ भो पितर इहागच्छत इह तिष्ठत ॥ १४ ॥ ततो यमनिर्ऋतयोर्मध्ये भद्रे सप्तयक्षानावाहयेत् ॥ ॐ अभित्यन्देवꣳसवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳरत्नधामभिप्रियम्मतिङ्कविम् ॥ ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपास्वः ॥ प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि ॥ १५ ॥ यदृच्छया पर्यटन्ति यक्षाः सर्वे महीतले ॥ कौतुकं प्रेक्षितुं चास्मिन् मण्डले सन्तु सुस्थिराः॥ ॐ भूर्भुवः स्वः सप्तयक्षेभ्यो नमः सप्तयक्षानावा० स्था० ॥ भो सप्तयक्षा इहागच्छत इह तिष्ठत ॥ १५ ॥ ततो निर्ऋतिवरुणयोर्मध्ये भद्रे भूतनागानावाहयेत् ॥ ॐ भूतायत्वा नारातये स्वरभिविख्येषन्दृꣳहन्तान्दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ सादयाम्यदित्याऽउपस्थेऽग्ने हव्यꣳरक्ष ॥ १६ ॥ ॐ भूर्भुवः स्वः भूतेभ्यो नमः भूतान्यावा० स्था० ॥ भो भूतानि इहागच्छत इह तिष्ठत ॥ १६ ॥ तत्रैव ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ १६ ॥ एतैत सर्पाः शिवकण्ठभूषा लोकोपकाराय भुवं वहन्तः ॥ जिह्वाद्वयोपेतमुखा मदीयां गृह्णीत पूजां सुखदा नमो वः ॥ ॐ भूर्भुवः स्वः सर्पेभ्यो नमः सर्पानावाहयामि स्था० ॥ भो सर्पाः इहागच्छत इह तिष्ठत ॥ १६ ॥ ततो वरुणवाय्वोर्मध्ये भद्रे गन्धर्वाप्सरस आवाहयेत् ॥ ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्म्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ॥ १७ ॥ ॐ भूर्भुवः स्वः गन्धर्वेभ्यो नमः गन्धर्वानावाहयामि स्था० ॥ भो गन्धर्वा इहागच्छत इह तिष्ठत ॥ तत्रैव अप्सरस आवाहयेत् ॥ ॐ अयम्पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेतिस्तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ १८ ॥ आवाहयेऽहं सुरदेवसेव्याः स्वरूपतेजोमुखपद्मभासः ॥ सर्वामरेशैः परिपूर्णकामाः पूजा गृहीतुं मम यज्ञभूमौ ॥ ॐ भूर्भुवः स्वः अप्सरोभ्यो नमः अप्सरस

१४ अग्नियममध्ये भद्रे ॐ भूर्भुवः स्व विश्वेभ्यो देवेभ्यो० विश्वा० स्था० ॥ भो विश्वेदे० इहागच्छत इह तिष्ठत ॥
१५ यमनिर्ऋतिमध्ये भद्रे ॐ भूर्भुव० स्व सप्तयक्षेभ्यो० स० आ० स्थाप० ॥ भो सप्तयक्षा० इहागच्छत इह तिष्ठत ॥
१६ निर्ऋतिवरुणमध्ये भद्रे ॐ भूर्भुव स्वः भूतनागेभ्यो० भूतनागा० स्थाप० ॥ भो भू० इहागच्छ इह तिष्ठ ॥
१७ वरुणवायुमध्ये वाम्याम् ॐ भू० गन्धर्वाप्सरोभ्यो नमः ग० आ० स्था० ॥ भो गन्ध० इहागच्छत इह तिष्ठत ॥

आवा० स्था० ॥ भो अप्सरस इहागच्छत इह तिष्ठत ॥ १७॥ ततो ब्रह्मसोमयोर्मध्ये वाप्याम् ॥ स्कन्दं नंदीश्वरं शूलञ्चावाहयेत् ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्त्यम्महिजातन्तेऽअर्वन् ॥ २२/२६ ॥ एह्येहि देवेश्वर शंभुसूनो शिखेन्द्रगामिन् सुरसिद्धसङ्घैः ॥ संस्तूयमानात्मशुभाय नित्यं गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः स्कन्दाय नमः स्कन्दमावा० स्थाप० ॥ भो स्कन्द इहागच्छ इह तिष्ठ ॥ १८॥ ॐ आशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरः शतᳬसेनाऽअजयत्साकमिन्द्रः ॥ २३/१७ ॥ एह्येहि देवेन्द्र पिनाकपाणे खण्डेन्दुमौलिप्रिय शुभ्रवर्ण ॥ गौरीशयानेश्वर यक्षसिद्ध गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः नन्दीश्वराय नमः नन्दीश्वरमावा० स्थाप० ॥ भो नन्दीश्वर इहागच्छ इह तिष्ठ ॥ १९ ॥ तदुत्तरतः शूलं तदुत्तरतस्तत्रैव महाकालञ्चावाहयेत् ॥ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ २/६ ॥ आयातमायातमुमाप्रियस्य प्रियौ मुनींद्रादिकसिद्धसेव्यौ ॥ गृहीतमेतां मम शूलकालौ पूजां सुखौघं कुरुतं नमो वाम् ॥ ॐ भूर्भुवः स्वः शूलमहाकालाभ्यां नमः शूलमहाकालौ आवा० स्था० ॥ भो शूलमहाकालौ इहागच्छतम् इह तिष्ठतम् ॥२०॥ ततो ब्रह्मेशानयोर्मध्ये वल्लीषु दक्षादीन् सप्तप्रजापतीनावाहयेत् ॥ ॐ प्रजापतेनत्त्वदेतान्न्यन्न्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्ष्यपितासावस्यपिताव्वयᳬस्यामपतयोरयीणाᳬस्वाहा ॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २/१० ॥ एह्येहि देवालयविश्वमूर्ते चतुर्मुख श्रीधर शम्भुमान्य ॥ सुपुस्तकाक्षस्रुवपात्रपाणे गृहाण पूजां भगवन्नमस्ते॥ ॐ भूर्भुवः स्वः दक्षादिसप्तप्रजापतिभ्यो नमः दक्षादिसप्तप्रजापतीनावा० स्थाप० ॥ भो दक्षादिसप्तप्रजापतयः इहागच्छत इह तिष्ठत ॥२१॥ ततो ब्रह्मेन्द्रयोर्मध्ये वाप्यां दुर्गामावाहयेत् ॥ ॐ प्राणायस्वाहापानायस्वाहा व्यानायस्वाहा ॥ अम्बेऽअम्बिकेम्बालिके नमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥ २/३॥ एह्येहि दुर्गे दुरितौघनाशिनी प्रचण्डदैत्यौघविनाशकारिणी ॥ उमे महेशा-

१८ ब्रह्मसोममध्ये वाप्याम् ॐ भूर्भुवः स्वः स्कन्दाय नमः स्कन्दमा० स्था० ॥ भो स्कन्द इहागच्छ इह तिष्ठ ॥
१९ स्कन्दादुत्तरे ॐ भूर्भुव. स्वः नन्दिने नमः नन्दिनमावाहयामि स्थाप० ॥ भो नन्दिन् इहागच्छ इह तिष्ठ ॥
२० नन्दिकेश्वरादुत्तरतः ॐ भूर्भुवः स्वः शूलमहाकालाभ्यां० शूल० आ० स्थाप० ॥ भो शूल० इहागच्छतम् इह तिष्ठतम्
२१ ब्रह्मेशानमध्ये वाप्याम् ॐ भू० दक्षादिसप्तगणे० दक्षा० आ० स्थाप० ॥ भो द० इहागच्छत इह तिष्ठत ॥
२२ ब्रह्मेन्द्रमध्ये वाप्याम् ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गामावाहयामि स्थापयामि ॥ भो दुर्गे इहागच्छ इह तिष्ठ ॥

धशरीरधारिणि स्थिरा भव त्वं मम यज्ञकर्मणि ॥ ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गामावा० स्थाप० ॥ भो दुर्गे इहागच्छ इह तिष्ठ ॥ २२ ॥ ततस्तदुत्तरे विष्णुमावाहयेत् ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा ॥ १५ ॥ एह्येहि नीलाम्बुद मेचक त्वं श्रीवत्सवक्षःकमलाधिनाथ ॥ सर्वामरैः पूजितपादपद्म गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुमावा० स्था० । भो विष्णो इहागच्छ इह तिष्ठ ॥ २३ ॥ ततो ब्रह्माग्न्योर्मध्ये वल्लीषु स्वधासहितपितॄनावाहयेत् ॥ ॐ उदीरतामवरऽउत्परासऽउन्मध्यमाःपितरः सोम्यासः ॥ असुँय्यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १६ ॥ सुखाय पितॄन् कुलवृद्धिकर्तॄन् रक्तोत्पलाभानिहरक्तनेत्रान् ॥ सुरक्तमाल्याम्बरभूषितांश्च नमामि पीठे कुलवृद्धिहेतोः ॥ ॐ भूर्भुवः स्वः स्वधासहितपितृभ्यो नमः स्वधासहितपितॄनावा० स्था० ॥ भो स्वधासहितपितरः इहागच्छत इह तिष्ठत ॥ २४ ॥ ततो ब्रह्मयमयोर्मध्ये वाप्यां मृत्युरोगावावाहयेत् ॥ ॐ परंमृत्योऽअनुपरेहि पन्थांयस्तेऽअन्यऽइतरोदेवयानात् ॥ चक्षुष्मतेश्रृण्वतेतेब्रवीमिमानः प्रजाᳪरीरिषोमोतवीरान् ॥ १८ ॥ मृत्युरोगानन्तकस्य प्रेष्यान्प्राणाहरान् गणान् ॥ आवाहयामि यज्ञेऽस्मिन् पूजार्थं लोकनाशकान् ॥ ॐ भूर्भुवः स्वः मृत्युरोगेभ्यो नमः मृत्युरोगानावा० स्थाप० ॥ भोमृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥ २५ ॥ ततो ब्रह्मनिर्ऋत्योर्मध्ये वल्लीषु गणपतिमावाहयेत् ॥ ॐ गणानान्त्वागणपतिᳪ ॥ १९ ॥ एह्येहि विघ्नाधिपते सुरेन्द्र ब्रह्मादिदेवैरभिवन्द्यपाद ॥ गजास्य विद्यालय विश्वमूर्ते गृहाण पूजां भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावा० स्थापयामि ॥ भो गणपते इहागच्छ इह तिष्ठ ॥ २६ ॥ ततो ब्रह्मवरुणयोर्मध्ये वाप्यामप आवाहयेत् ॥ ॐ अपोऽअद्यान्वचारिषᳪरसेनसमसृक्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासᳪसृजवर्चसा प्रजयाचधनेनच ॥ २० ॥ एह्येहि लोकेश्वर पाशपाणे यादोगणैर्वन्दितपादपद्म ॥ पीठेऽत्र देवेश गृहाण पूजां पाहि त्वमस्मान् भगवन्नमस्ते ॥ ॐ भूर्भुवः स्वः अद्भ्यो नमः अप आवा० स्थापयामि ॥ भो आप इहागच्छत इह तिष्ठत ॥ २७ ॥ ततो ब्रह्मवायुमध्ये वल्लीषु मरुत आवा-

२३ दुर्गापूर्वे ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुमावाहयामि स्थापयामि ॥ भो विष्णो इहागच्छ इह तिष्ठ ॥
२४ ब्रह्माग्निमध्येवल्ल्याम् ॐ भूर्भुवः स्वः स्वधायै नमः स्वधामा० स्थापयामि ॥ भो स्वधे इहागच्छ इह तिष्ठ ॥
२५ ब्रह्मयमयोर्मध्ये वाप्याम् ॐ भूर्भुवः स्वः मृत्युरोगाभ्यां नमः मृत्युरोगौ आवाहयामि स्थापयामि ॥ भो मृत्युरोगौ इहागच्छतम् इह तिष्ठतम् ॥
२६ ब्रह्मनिर्ऋतिमध्ये वल्ल्याम् ॐ भू० गणपतये० गणपतिमा० स्थापयामि ॥ भो गणपते इहागच्छ इह तिष्ठ ॥
२७ ब्रह्मवरुणमध्ये वाप्याम् ॐ भूर्भुवः स्वः अद्भ्यो० अप आ० स्थापयामि ॥ भो आप इहागच्छ इह तिष्ठ ॥

ह्येत् ॥ ॐ बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ॥ येनज्योतिरजनयन्नृता-वृधोदेवन्देवायजागृवि ॥ ॥ एह्येहि यज्ञेश समीरण त्वं मृगाधिरूढः सह सिद्धसङ्घैः ॥ प्राणस्वरूपिन् सुरतासहाय गृहाण पूजां भगवन्नमस्ते ॥ ॐभूर्भुवः-स्वः मरुद्भ्यो नमः मरुत आवाह० स्थापयामि ॥ भो मरुत इहागच्छत इह तिष्ठत ॥ २८ ॥ ततो ब्रह्मणः पादमूले कर्णिकाधः पृथिवीमावाहयेत् ॥ ॐ महीद्यौः पृथिवीचनऽइमं यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ॥ पृथिव्या धार्यते वेन्यं दुर्ग्रहं सागरैर्नरैः ॥ यज्ञ आवाहयामीह ब्रह्मणो मण्डले पदे॥ॐभूर्भुवः स्वः पृथिव्यै नमः पृथिवीमावा० स्थापयामि ॥ भो पृथिवि इहागच्छ इह तिष्ठ ॥२९॥ ततस्तत्रैव तदुत्तरतो गङ्गादिसप्तसरित आवाहयेत् ॥ ॐ इमम्मेवरुणश्रुधी हवम-द्याचमृडय॥ त्वामवस्युराचके ॥ ॥ एह्येहि गङ्गे दुरितौघनाशिनि झषाधिरूढे उद-कुम्भहस्ते ॥ श्रीविष्णुपादाम्बुजसंभवे त्वं पूजां गृहीतुं शुभदे नमस्ते ॥ ॐभूर्भुवः स्वः गंगादिनदीभ्यो नमः गङ्गादिनदीरावा० स्थापयामि ॥ भो गंगादिनद्यः इहागच्छत इह तिष्ठत ॥ ३० ॥ ततस्तत्रैव तदुत्तरतः सप्तसागरानावाह-येत् ॥ ॐमापोमौषधीर्हिसीर्द्धाम्नो धाम्नोराजँस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्या-इतिवरुणेतिशपामहेततो वरुणनोमुञ्च ॥ ॥ समुद्राः सर्वतोयेषु श्रेष्ठा वै हरिवल्लभाः ॥ मण्डले स्थापयामीह तान्नदीशान् सुखाप्तये ॥ ॐ भूर्भुवः स्वः सप्तसागरभ्यो नमः सप्तसागरानावा० स्थापयामि ॥ भो सप्तसागरा इहागच्छत इह तिष्ठत ॥ ३१ ॥ ततः कर्णिकोपरि मेरुमावाहयेत् ॥ एह्येहि कार्त्तस्वर-रूप सर्वभूभृत्पते चन्द्ररवी दधान ॥ सर्वौषधिस्थान महेन्द्रमित्र लोकत्रयावास नमोऽस्तु तुभ्यम् ॥ ॐ भूर्भुवः स्वः मेरवे नमः मेरुमावा० स्थापयामि ॥ भो मेरो इहागच्छ इह तिष्ठ ॥ ३२ ॥ ततो मण्डलाद्बहिः सोमादिसन्निधौ क्रमेणायुधान्या-वाहयेत् ॥ यथा सोमसमीपे उत्तरे गदामावाहयेत् ॥ निषिक्ता कुमुदाक्षस्य सन्निा कौमोदकी गदा ॥ शान्तिदा स्मरणादेव तस्यै तुभ्यं नमो नमः ॥ ॐ भूर्भुवः स्वः गदायै नमः गदामावा० स्थाप० ॥ भो गदे इहागच्छ इह तिष्ठ ॥३३॥ तत ऐशान्यां

२८ ब्रह्मवायुमध्ये बह्न्याम् ॐभूर्भुवः स्वः मरुद्भ्यो० मरुतः आ० स्थाप० ॥ भो मरुतः इहागच्छत इह तिष्ठत ॥
२९ ब्रह्मण.पादमूले कर्णिकाधः ॐ भूर्भुवः स्वः पृथिव्यै० पृथिवीमा० स्था० ॥ भो पृथिवि इहागच्छ इह तिष्ठ ॥
३० ब्रह्मणः पादमूले कर्णिकाधः ॐ भूर्भुवः स्वः गङ्गादिनदीभ्यो नमः गङ्गादिनदीः आवाहयामि स्थापयामि ॥ भो गङ्गादिनद्यः इहागच्छत इह तिष्ठत ॥
३१ ब्रह्मणः पाद० गङ्गाद्युत्तरे ॐभू० सप्तसागरेभ्यो० स० आ० स्था० ॥ भो सप्त० इहागच्छत इह तिष्ठत ॥
३२ कर्णिकोपरि ॐ भूर्भुवः स्वः मेरवे नमः मेरुमावाहयामि स्थापयामि ॥ भो मेरो इहागच्छ इह तिष्ठ ॥
॥ मण्डलवाह्ये श्वेतपरिधौ उत्तरादिक्रमेण गदाद्यष्टायुधदेवतास्थापनम् ॥
३३ उत्तरे सोमसमीपे ॐ भूर्भुवः स्वः गदायै नमः गदामा० स्थापयामि ॥ भो गदे इहागच्छ इह तिष्ठ ॥

त्रिशूलमावाहयेत् ॥ महायोगीन्द्रहस्तस्य शङ्करस्य प्रियङ्कर ॥ त्रिशूल त्वमिहागच्छ पूजेयं प्रतिगृह्यताम्॥ ॐभूर्भुवः स्वः त्रिशूलाय नमः त्रिशूलमावा० स्थापयामि ॥ भो त्रिशूल इहागच्छ इह तिष्ठ ॥३४॥ ततः पूर्वे इन्द्रसमीपे वज्रमावाहयेत्॥ तप्तकाञ्चनवर्णाभं वज्रं वै शक्रनायकम्॥ आवाहयामि यज्ञेऽस्मिन् गृहाणेमां नमोऽस्तु ते॥ ॐभूर्भुवः स्वः वज्रा०न०वज्रमावा० स्थाप०॥भो वज्र इहागच्छ इह तिष्ठ॥३५॥ तत आग्नेय्यामग्निसमीपे शक्तिमावाहयेत् ॥ सर्वदैत्यविनाशाय सर्वकामफलप्रदे ॥ सर्वसत्वहिते शक्ते शान्तिं यच्छ नमोऽस्तु ते ॥ ॐभूर्भुवः स्वः शक्तये नमः शक्तिमावा० स्थाप० ॥भो शक्ते इहागच्छ इह तिष्ठ ॥ ३६ ॥ ततो दक्षिणस्यां यमसमीपे दण्डमावाहयेत् ॥ धर्मराजस्य हस्तस्य यमस्य च सदा प्रिय ॥ दण्डायुध नमस्तेऽस्तु सर्वसिद्धिप्रदो भव ॥ ॐ भूर्भुवः स्वः दण्डाय नमः दण्डमावा० स्थाप० ॥भो दण्ड इहागच्छ इह तिष्ठ॥३७॥ ततो नैर्ऋत्यां निर्ऋतिसमीपे खड्गमावाहयेत् ॥ नीलजीमूतवर्ण त्वं तीक्ष्णदंष्ट्र कृशोदर ॥ खड्गराज नमस्तुभ्यं पूजेयं प्रतिगृह्यताम्॥ ॐभूर्भुवः स्वः खड्गाय नमः खड्गमावा० स्थाप० ॥ भो खड्ग इहागच्छ इह तिष्ठ ॥ ३८ ॥ ततः पश्चिमे वरुणसमीपे पाशमावाहयेत् ॥ देवास्त्रि वरुणास्त्रं त्वं दैत्यवंशविदारण ॥ पाश मां समरे रक्ष रज्जुराज नमोऽस्तु ते ॥ ॐभूर्भुवः स्वः पाशाय नमः पाशमावा० स्थाप० ॥ भो पाश इहागच्छ इह तिष्ठ ॥ ३९ ॥ ततो वायव्यां वायुसमीपे अङ्कुशमावाहयेत् ॥ गजघ्नं परवीरघ्नं परसैन्यापहारकम्॥ गणेशस्य प्रियं तस्मादङ्कुशाय नमो नमः॥ॐभूर्भुवः स्वः अङ्कुशाय नमः अङ्कुशमावा० स्थाप० ॥ भो अङ्कुश इहागच्छ इह तिष्ठ ॥ ४० ॥ ततस्तद्बाह्ये उत्तरतः गौतमादीनावाहयेत्॥ ॐसप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम्॥ सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ॥ $\frac{५}{३}\frac{५}{४}$॥ गौतमः सर्वभूतानामृषीणां च सदा प्रियः ॥ श्रौतानां कर्मणां चैव संप्रदायप्रवर्तकः ॥ ॐ भूर्भुवः स्वः गौतमाय नमः गौतममावा० स्थाप० ॥ भो गौतम इहागच्छ इह

३४ ऐशान्यामीशानसमीपे ॐ भू० त्रिशूलाय नमः त्रिशूलमा० स्थापयामि ॥ भो त्रिशूल इहागच्छ इह तिष्ठ ॥

३५ पूर्वे इन्द्रसमीपे ॐ भूर्भुवः स्वः वज्राय नमः वज्रमावाहयामि स्थापयामि ॥ भो वज्र इहागच्छ इह तिष्ठ ॥

३६ आग्नेय्याम् अग्निसमीपे ॐ भूर्भुवः स्वः शक्तये० शक्तिमा० स्थापयामि ॥ भो शक्ते इहागच्छ इह तिष्ठ ॥

३७ दक्षिणे यमसमीपे ॐ भूर्भुवः स्वः दण्डाय नमः दण्डमा० स्थापयामि ॥ भो दण्ड इहागच्छ इह तिष्ठ ॥

३८ नैर्ऋत्यां निर्ऋतिसमीपे ॐ भूर्भुवः स्वः खड्गाय नमः खड्गमा० स्थापयामि ॥ भो खड्ग इहागच्छ इह तिष्ठ ॥

३९ पश्चिमे वरुणसमीपे ॐ भूर्भुवः स्वः पाशाय नमः पाशमा० स्थापयामि ॥ भो पाश इहागच्छ इह तिष्ठ ॥

४० वायव्यां वायुसमीपे ॐ भूर्भुव. स्वः अङ्कुशाय नमः अङ्कुशमावा० स्था० ॥ भो अङ्कुश इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये रक्तपरिधौ उत्तरादिक्रमेण गौतमाद्यष्टदेवतास्थापनम् ॥

४१ उत्तरे ॐ भूर्भुव. स्वः गौतमाय नमः गौतममावाहयामि स्थापयामि ॥ भो गौतम इहागच्छ इह तिष्ठ ॥

तिष्ठ ॥४१॥ तत ऐशान्यां भरद्वाजमावाहयेत् ॥ भरद्वाज नमस्तेऽस्तु सदाध्ययनतत्पर ॥ आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमावा० स्थाप० ॥ भो भरद्वाज इहागच्छ इह तिष्ठ ॥४२॥ ततः पूर्वे विश्वामित्रमावाहयेत् ॥ विश्वामित्र नमस्तुभ्यं ज्वलदग्निसमप्रभ ॥ अध्यक्षीकृतगायत्रीतपोरूपेण संस्थितः ॥ ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमावा० स्थाप० ॥ भो विश्वामित्र इहागच्छ इह तिष्ठ ॥ ४३ ॥ तत आग्नेय्यां कश्यपमावाहयेत् ॥ कश्यपः सर्वलोकाढ्यः सर्वभूतदयाकरः ॥ असि त्वां प्रार्थयामीश पूजेयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः कश्यपाय नमः कश्यपमावा० स्था० ॥ भो कश्यप इहागच्छ इह तिष्ठ ॥ ४४ ॥ ततो दक्षिणे जमदग्निमावाहयेत् ॥ जमदग्निर्महातेजास्तपसा ज्वलतीह तम् ॥ आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमावा० स्थाप० ॥ भो जमदग्ने इहागच्छ इह तिष्ठ ॥ ४५ ॥ ततो नैर्ऋत्यां वसिष्ठमावाहयेत् ॥ नमस्तुभ्यं वसिष्ठाय कर्मकर्त्रे महामुने ॥ धर्मरूपाय महते लोकानां हितकारिणे ॥ ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमा० स्थाप० ॥ भो वसिष्ठ इहागच्छ इह तिष्ठ ॥ ॥ ४६ ॥ ततः पश्चिमे अत्रिमावाहयेत् ॥ अत्रये तु नमस्तुभ्यं सर्वलोकहितैषिणे ॥ तपोरूपाय सत्याय ब्रह्मणेऽमिततेजसे ॥ ॐ भूर्भुवः स्वः अत्रये नमः अत्रिमावा० स्थाप० ॥ भो अत्रे इहागच्छ इह तिष्ठ ॥ ४७ ॥ ततो वायव्यामरुन्धतीमावाहयेत् ॥ अरुन्धत्यै नमस्तुभ्यं सर्वसौख्यप्रदायिनि ॥ एहि मण्डलमध्ये त्वं नमः पूजां गृहाण मे ॥ ॐ भूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमा० स्थापयामि ॥ भो अरुन्धति इहागच्छ इह तिष्ठ ॥ ४८ ॥ ततस्तद्बाह्ये पूर्वादिक्रमेणैन्द्र्याद्यावाहनम् ॥ तत्र पूर्वे ऐन्द्रीमावाहयेत् ॥ इन्द्राणीं गजकुम्भस्थां सहस्रनयनोज्ज्वलाम् ॥ नमामि वरदां देवीं सर्वदेवैर्नमस्कृताम् ॥ ॐ भूर्भुवः स्वः ऐन्द्यै नमः ऐन्द्रीमा० स्था० ॥ भो ऐन्द्रि इहागच्छ इह तिष्ठ ॥४९॥ तत आग्नेय्यां कौमारी-

---

४२ ऐशान्याम् ॐ भूर्भुवः स्वः भरद्वाजाय नमः भरद्वाजमा० स्थापयामि ॥ भो भरद्वाज इहागच्छ इह तिष्ठ ॥
४३ पूर्वे ॐ भूर्भुवः स्वः विश्वामित्राय नमः विश्वामित्रमा० स्थापयामि ॥ भो विश्वामित्र इहागच्छ इह तिष्ठ ॥
४४ आग्नेय्याम् ॐ भूर्भुव स्वः कश्यपाय नमः कश्यपमा० स्थापयामि ॥ भो कश्यप इहागच्छ इह तिष्ठ ॥
४५ दक्षिणे ॐ भूर्भुवः स्वः जमदग्नये नमः जमदग्निमा० स्थापयामि ॥ भो जमदग्ने इहागच्छ इह तिष्ठ ॥
४६ नैर्ऋत्याम् ॐ भूर्भुवः स्वः वसिष्ठाय नमः वसिष्ठमावाहयामि स्थापयामि ॥ भो वसिष्ठ इहागच्छ इह तिष्ठ ॥
४७ पश्चिमे ॐ भूर्भुवः स्वः अत्रये नमः अत्रिमावाहयामि स्थापयामि ॥ भो अत्रे इहागच्छ इह तिष्ठ ॥
४८ वायव्याम् ॐ भूर्भुवः स्वः अरुन्धत्यै नमः अरुन्धतीमा० स्थापयामि ॥ भो अरुन्धते इहागच्छ इह तिष्ठ ॥

॥ मण्डलबाह्ये कृष्णपरिधौ पूर्वादिक्रमेण ऐन्द्याद्यष्टदेवतास्थापनम् ॥

४९ पूर्वे ॐ भूर्भुवः स्वः ऐन्द्यै नमः ऐन्द्रीमावाहयामि स्थापयामि ॥ भो ऐन्द्रि इहागच्छ इह तिष्ठ ॥

मावाहयेत् ॥ एह्येहि कौमारि विधेहि शान्तिं शक्तिं दधानेऽपि सदाममध्ये ॥ स्कन्धाधिरूढे शिखिपुंगवाभ्यां मातः प्रसादप्रसृतिं प्रयच्छ ॥ ॐ भूर्भुवः स्वः कौमार्यै नमः कौमारीमा० स्थाप० ॥ भो कौमारि इहागच्छ इह तिष्ठ ॥५०॥ ततो दक्षिणस्यां ब्राह्मीमावाहयेत् ॥ चतुर्मुखीं जगद्धात्रीं हंसारूढां वरप्रदाम् ॥ सृष्टिरूपां महाभागां ब्रह्माणीं तां नमाम्यहम् ॥ ॐ भूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीमा० स्था० भो ब्राह्मि इहागच्छ इह तिष्ठ ॥ ५१ ॥ ततो नैर्ऋत्यां वाराहीमावाहयेत् ॥ वाराहरूपिणीं देवीं दंष्ट्रोद्धृतवसुन्धराम् ॥ शुभदां पीतवसनां वाराहीं तां नमाम्यहम् ॥ ॐभूर्भुवः स्वः वाराह्यै नमः वाराहीमा० स्थापयामि ॥ भो वाराहि इहागच्छ इह तिष्ठ ॥ ५२ ॥ ततः पश्चिमे चामुण्डामावाहयेत् ॥ चामुण्डां मुण्डमथनां मुण्डमालोपशोभिताम् ॥ अट्टाट्टहाससमुदितां नमाम्यात्मविभूतये ॥ ॐ भूर्भुवः स्वः चामुण्डायै नमः चामुण्डामा० स्थाप० ॥ भो चामुण्डे इहागच्छ इह तिष्ठ ॥५३॥ ततो वायव्यां वैष्णवीमावाहयेत् ॥ शङ्खचक्रगदापद्मधारिणीं कृष्णरूपिणीम् ॥ स्थितिरूपां खगेन्द्रस्थां वैष्णवीं तां नमाम्यहम् ॥ ॐ भूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीमावा० स्थाप० ॥ भो वैष्णवि इहागच्छ इहतिष्ठ ॥ ५४ ॥ तत उत्तरस्यां माहेश्वरीमावाहयेत् ॥ वृषारूढां शुभां शुभ्रां त्रिनेत्रां वरदां शिवाम् ॥ माहेश्वरीं नमाम्यद्य सृष्टिसंहारकारिणीम् ॥ ॐ भूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीमावा० स्थाप० ॥ भो माहेश्वरि इहागच्छ इह तिष्ठ ॥५५॥ तत ऐशान्यां वैनायकीमावाहयेत् ॥ चतुर्भुजां त्रिनेत्रां च सर्वाभरणभूषिताम् ॥ आवाहयामि देवेशीं पूजेयं प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः वैनायक्यै नमः वैनायकीमावा० स्था० ॥ भो वैनायकि इहागच्छ इह तिष्ठ ॥ ५६ ॥ एवं षट्पंचाशद्देवानावाह्य अक्षतान् गृहीत्वा प्रतिष्ठापयेत् ॥ ॐमनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं

५० आग्नेय्याम् ॐ भूर्भुवः स्वः कौमार्यै नमः कौमारीमा० स्थापयामि ॥ भो कौमारि इहागच्छ इह तिष्ठ ॥
५१ दक्षिणे ॐ भूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीमावाहयामि स्थापयामि ॥ भो ब्राह्मि इहागच्छ इह तिष्ठ ॥
५२ नैर्ऋत्याम् ॐ भूर्भुवः स्वः वाराह्यै नमः वाराहीमावाहयामि स्थापयामि ॥ भो वाराहि इहागच्छ इह तिष्ठ ॥
५३ पश्चिमे ॐ भूर्भुवः स्वः चामुण्डायै नमः चामुण्डामावाहयामि स्थापयामि ॥ भो चामुण्डे इहागच्छ इह तिष्ठ ॥
५४ वायव्याम्—ॐ भूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीमावाहयामि स्थापयामि ॥ भो वैष्णवि इहागच्छ इह तिष्ठ ॥
५५ उत्तरे—ॐ भूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीमावाहयामि स्थापयामि ॥ भो माहेश्वरि इहागच्छ इह तिष्ठ ॥
५६ ऐशान्याम्—ॐ भूर्भुवः स्वः वैनायक्यै नमः वैनायकीमावाहयामि स्थापयामि ॥ भो वैनायकि इहागच्छ इह तिष्ठ ॥

ष्यज्ञᳬसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोᳬम्प्रतिष्ठ ॥ १३ ॥ ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य ततो ॐ भूर्भुवः स्वः ब्रह्माद्यावाहितसर्वतोभद्रमण्डलदेवताभ्यो नमः इति मन्त्रेणैकतन्त्रेण तत्तन्मन्त्रेण वा यथामिलितोपचारैः पूजनं कुर्यात् ॥ ततो हस्ते जलं गृहीत्वा॥ अनेन यथामिलितोपचारैः कृतेन पूजनेन ब्रह्मादिसर्वतोभद्रमण्डलस्थदेवताः प्रीयन्तां न मम ॥

॥ इति सर्वतोभद्रमण्डलदेवतापूजनप्रयोगः समाप्तः ॥

॥ अथ पात्रासादनपूर्वकश्रीगायत्रीदेवीपूजनप्रयोगः ॥

॥ तत्रादौ भूतशुद्ध्यादि श्रीगायत्रीमहान्यासान्तं कर्म प्रोच्यते ॥

निवर्तितसर्वतोभद्रदेवतावाहनार्चनः कृतस्वस्तिकासनः सपत्नीको यजमानः श्रीभगवत्या गायत्रीदेव्याः समीपे उपविश्य स्वदक्षिणभागे पूजाद्रव्याणि स्थवा-

॥ *अथ गायत्रीप्रातःस्मरणपूर्वकसूर्यार्घसामान्यार्घमण्डपप्रवेशान्तकर्मप्रयोगः ॥

निवर्तितनित्यक्रियः सपत्नीको यजमानः आचार्यादिवृतैर्ऋत्विग्भिः परिवृतः यज्ञमण्डपस्य पश्चिमद्वारसमीपे कुशकम्बलाद्यास्तृते आसने प्राङ्मुख उपविश्य श्रीभगवतीपराम्बाश्रीसवितृस्वरूपाया गायत्रीदेव्याः प्रीत्यर्थं करिष्यमाणे भगवत्या गायत्र्याः पूजनकर्मण्यधिकारार्थं प्रातःस्मरणपूर्वकं मन्त्रस्नानं तर्पणञ्च कुर्यात् ॥ तत्रादौ मूलमंत्रेणाचमनं प्राणायामञ्च विदध्यात्॥ ततः करसम्पुटौ कृत्वा श्रीगायत्रीं ध्यायेत् ॥ नमस्ते देवि गायत्रि सावित्रि त्रिपदाक्षरे । अजरे अमरे मातस्त्राहि मां भवसागरात् ॥ १ ॥ नमस्ते सूर्यसङ्काशे सूर्यसावित्रिकेऽमले ॥ ब्रह्मविद्ये महाविद्ये वेदमातर्नमोऽस्तु ते ॥ २ ॥ अनन्तकोटिब्रह्माण्डव्यापिनि ब्रह्मचारिणि ॥ नित्यानन्दे महामाये परेशानि नमोऽस्तु ते ॥ ३ ॥ त्वं ब्रह्मा त्वं हरिः साक्षाद्रुद्रस्त्वमिन्द्रदेवता ॥ मित्रस्त्वं वरुणस्त्वञ्च त्वमग्निरश्विनौ भगः ॥ ४ ॥ पूषार्यमा मरुत्वाँश्च ऋषयोऽपि मुनीश्वराः ॥ यक्षाश्च पितरो नागा गन्धर्वाप्सरसां गणाः ॥ ५ ॥ रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि ॥ ऋग्यजुःसामवेदाश्च ह्यथर्वाङ्गिरसानि च ॥ ६ ॥

१ वसिष्ठसंहितायाम् । जानूर्वोरन्तरे सम्यक् कृत्वा पादतले शुभे ॥ ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥

२ स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि चात्मनः ॥ सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम् ॥ प्रक्षालनाय करयोः पात्रं पृष्ठे निवेशयेत् ॥ घृतादिज्वलितान्दीपान्स्थापयेत्परितः शुभान् ॥ दर्पणं चामरं छत्रं तालवृन्तं च पादुके ॥ पूजासामग्रिकां विप्र पुरतः साधनान्तरम् ॥ तथैव । अन्यानि होमद्रव्याणि यथास्थानं निवेदयेत् ॥ इति विश्वामित्रसंहितायाम् ॥

* यज्ञमण्डपप्रवेशात्प्राक् सौराष्ट्रप्रदेशे प्रायो यज्ञकर्मणो द्वितीयदिवसमारभ्य आसमाप्ति प्रत्यहं पश्चिमद्वारे बहिर्यजमानं सपत्नीकमुपवेश्याचार्यः ऋत्विग्भिः सह स्वयमपि उपविश्य प्रातःस्मरणादि मण्डपप्रवेशान्तं कर्म कारयति । अयमाचारोऽपि इतस्ततः शास्त्रालोचनेनावश्यक इत्यवबुध्यते तज्ज्ञैस्त्वान् ॥

मभागे स्वच्छाम्बुपूरितपूजाकलशं स्वस्य करयोः क्षालनार्थं पृष्टभागेऽन्यत्पात्रं स्वस्य पुरतः शुभान् घृतपूरितान्दीपान् तथैव देव्यै निवेदनार्थं दर्पणं चामरं छत्रं पादुके तालवृन्तं नैवद्यार्थञ्च यथाशक्ति नैवेद्यसामग्रीञ्च संस्थाप्य आत्मनः शुद्ध्यर्थं पूजाधिकारसंपादनार्थं स्वशरीरस्य देवीस्वरूपोपपादनार्थञ्च भूतशुद्ध्यादिमहान्यासान्तं कर्म कुर्यात् ॥ तद्यथा ॥ प्रथमं गायत्र्या मूलमन्त्रेण त्रिवारम् आचमनं विदध्यात् ॥ ॐ भूर्भुवः स्वः तत्स० ॥ ॐ आत्मतत्त्वं शोधयामि नमः स्वाहा ॥ ॐ भूर्भुवः स्वः तत्स० ॥ ॐ विद्यातत्त्वं शोधयामि नमः स्वाहा ॥ ॐ भूर्भुवः स्वः तत्स० ॥ ॐ शिवतत्त्वं शोधयामि नमः स्वाहा ॥ एवम् आचमनं विधाय करौ प्रक्षाल्य हस्ते जलं गृहीत्वा ॥ ॐ प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवीगायत्रीच्छन्दः । भूरादिसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठ-

त्वमेव पञ्च भूतानि तत्त्वानि जगदीश्वरि ॥ ब्राह्मी सरस्वती सन्ध्या तुरीया त्वं महेश्वरी ॥ ७ ॥ त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिताः । पुराणानि च तन्त्राणि महागममतानि च ॥ ८ ॥ तत्सद्ब्रह्मस्वरूपा त्वं किञ्चित्सदसदात्मिका ॥ परात्परेशि गायत्रि नमस्ते मातरम्बिके ॥ ९ ॥ चन्द्रे कलात्मिके नित्यं कालरात्रि स्वधे स्वरे ॥ स्वाहाकारेऽग्निवक्त्रे त्वां नमामि जगदीश्वरि ॥ १० ॥ नमो नमस्ते गायत्रि सावित्रि त्वां नमाम्यहम् ॥ सरस्वति नमस्तुभ्यं तुरीये ब्रह्मरूपिणि ॥ ११ ॥ अपराधसहस्राणि त्वसत्कर्मशतानि च ॥ मत्तो जातानि देवेशि त्वं क्षमस्व दिने दिने ॥ १२ ॥ एवं गायत्रीं ध्यात्वा पुनः करसम्पुटौ कृत्वा प्रार्थयेत् ॥ भो भगवति वेदमातः गायत्रि ! तव होमार्चनादौ माम् अनुज्ञां देहि इति सम्प्रार्थ्य । ततः स्वमनसैव तस्या अनुज्ञाञ्चादाय स्वकीयदेहे मूलमन्त्रेण न्यासान्कुर्यात् ॥ तद्यथा ॥ ॐ तत्सवितुः हृदयाय नमः ॥ ॐ वरेण्यं शिरसे स्वाहा ॥ ॐ भर्गो देवस्य शिखायै वषट् ॥ ॐ धीमहि कवचाय हुम् ॥ ॐ धियो यो नः नेत्रत्रयाय वौषट् ॥ ॐ प्रचोदयात् अस्त्राय फट् ॥ इति षडङ्गन्यासान्कृत्वा ॥ ताम्रादिपात्रे शुद्धजलं पूरयित्वा तत्र तीर्थं प्रकल्प्य अङ्कुशमुद्रया तस्मिन् जले सूर्यमण्डलात् ॐ गंगे च यमुने चैव० इति मन्त्रेण तीर्थानि गायत्रीमूलमंत्रेण देवीञ्चावाह्य । वम् इति आप्लाव्य । हुम् इति अवगुण्ठ्य । फट् इति संरक्ष्य । धेनुमुद्रया अमृतीकृत्य । मूलेन तज्जलम् अष्टवारम् अभिमन्त्र्य प्रार्थयेत् ॥ आधारः सर्वभूतानां विष्णोरतुलतेजसः । तद्रूपाश्च ततो जाता आपस्ताः प्रणमाम्यहम् ॥ इति नत्वा दक्षहस्तेन जलं गृहीत्वा गायत्रीमन्त्रेणाष्टवारम् अभिमन्त्र्य पद

१ वसिष्ठसंहितायाम् ॥ भूतशुद्धिविहीनेन जपपूजादिकं कृतम् ॥ सर्वं निरर्थकं विद्धि विपरीतफलार्थदम् ॥
२ देव्या. षड्भिः पीत्वा अब्लिङ्गैर्नवभिः स्पृशेत् ॥ सप्तव्याहृतिभिश्चैव शिरोमन्त्रैः स्पृशेत्क्रमात् ॥
३ विश्वामित्रसंहितायाम् । प्राणायामं विना जाप्यं ( जप्यं ) बीजमुप्तं यथोरणे ॥ वृथाऽऽसनादृते ध्यानं हुतं गुप्तं कृतम यत् ॥

कश्यपा ऋषयः। अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांसि । तत्सवितुरित्यस्य विश्वामित्र ऋषिः। सविता देवता । गायत्रीच्छन्दः । आपोज्योतिरित्यस्य प्रजापतिर्ऋषिः । ब्रह्माग्निवायुसूर्या देवताः । यजुश्छन्दः । सर्वेषां प्राणायामे विनियोगः ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ [1] ॥ ॐ आपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम् ॥ एवं त्रिवारं पुरककुम्भकरेचकक्रमेण प्राणायामं कुर्यात् ॥ ततो हस्ते जलं गृहीत्वा॥ अद्येत्यादि० शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मया प्रारब्धस्य सप्तहमखगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं तथाच करिष्यमाणे श्रीभगवत्या जगदम्बिकाया वेदमातुः श्रीगायत्रीदेव्याः पूजनकर्मणि आत्मनोऽधिकारपूर्वकयोग्यतासंपादनार्थं तथैवामीषां ब्राह्मणानामपि हवनादिकर्मणि योग्यताप्राप्त्यर्थं यथाशक्ति एभिर्ब्राह्मणैः सह भूशुद्धिर्भूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकान्याससहिताजपाजपसङ्कल्पपूर्वकश्रीगायत्रीमहान्यासान्करिष्ये ॥

---

इत्यात्मनः परितस्तज्जलं प्रादक्षिण्येन प्रक्षिप्य पुनः पात्रस्थे जले कवचमुद्रया त्रिरुन्मज्य कलशमुद्रया मूलमन्त्रं पठन् स्वशिरसि जलं प्रक्षिपेत् ॥ इति मन्त्रस्नानम् ॥ ततस्तत्पात्रस्थं जलं बहिर्निष्कास्य पात्रं प्रक्षाल्य गायत्रीतर्पणं कुर्यात् ॥ तद्यथा ॥ पुनराचमनं प्राणायामञ्च कृत्वा । अद्येत्यादि० मया प्रारब्धस्य सप्तहमखगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्धये ममात्मनः श्रीसवितृस्वरूपिणीश्रीगायत्रीप्रीतये च यथाशक्ति गायत्रीतर्पणं करिष्ये ॥ पुनर्जलमादाय॥ ॐ तत्सवितुरिति मन्त्रस्य । विश्वामित्र ऋषिः । गायत्री छन्दः । सविता देवता । श्रीगायत्रीतर्पणे विनियोगः । ॐ तत्सवितुः हृदयाय नमः। ॐ वरेण्यं शिरसे स्वाहा । ॐ भर्गो देवस्य शिखायै वषट् ॐ धीमहि कवचाय हुम् । ॐ धियो यो नः प्रचोदयात् अस्त्राय फट् ॥ एवं न्यासान्कृत्वा ताम्रपात्रे शुद्धजलं पूरयित्वा तस्मिन्गायत्रीयन्त्रं विलिख्य । हस्तेऽक्षतानादाय । ॐ भूर्भुवः स्वः भगवते सवित्रे नमः सवितारम् आवा० स्थाप० ॥ इति यन्त्रे सूर्यमावाह्य गन्धाक्षतपुष्पाण्यादाय गायत्रीमन्त्रं पठित्वा । ॐ सावरणायै सायुधायै सपरिवारायै श्रीसूर्यस्वरूपिण्यै भगवत्यै श्रीगायत्रीदेव्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ इति जले सम्पूज्य तर्पणं कुर्यात् ॥ ॐ भूः ऋग्वेदाय नमः तर्पयामि । १ ॐ भुवः यजुर्वेदाय नमः तर्पयामि २ । ॐ स्वः सामवेदाय नमः तर्पयामि । ॐ महः अथर्ववेदाय नमः तर्पयामि ४ ॥ ॐ जनः इतिहासपुराणेभ्यो नमः तर्पयामि ५। ॐ तपः सर्वागमाय नमः तर्पयामि ६। ॐ सत्यं सत्यलोकाय

---

[1] रामतापिन्याम्—देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् ॥ देवार्चायोग्यताप्राप्त्यै भूतशुद्धिं समाचरेत् ॥ भूतशुद्धिं विधायैव प्राणस्थापनमाचरेत् ॥ भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत् ॥ विपरीतफलदात्र्यभक्त्या पूजनं यथा ॥

अथ भूशुद्धिः ॥ तत्रादौ नमस्काराः ॥ स्वदक्षिणे–ॐ सरस्वत्यै नमः ॥ ॐशङ्खनिधये नमः ॥ स्ववामभागे–ॐ लक्ष्म्यै नमः ॥ ॐ पद्मनिधये नमः ॥ आसनपवित्रीकरणम् ॥ पृथ्वित्वयेतिमंत्रस्य मेरुपृष्ठ ऋषिः । कूर्मो देवता । सुतलं छदः । आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वञ्च धारय मां देवि पवित्रं कुरु चासनम् ॥ ततः प्रार्थयेत् ॥ ॐविश्वशक्त्यै नमः । ॐमहाशक्त्यै नमः । ॐकूर्मासनाय नमः । ॐयोगासनाय नमः । ॐअनन्तासनाय नमः ॥ ॐविमलासनाय नमः । मध्ये ॐ परमसुखासनाय नमः ॥ ॐ भूर्भुवः स्वः आत्मासनाय नमः ॥ इति मन्त्रेण पुष्पादिना आत्मनः आसनदानम् ॥ ततः शिखाबन्धनं[1] कुर्यात् ॥ ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने । तिष्ठ देवि शिखाबन्धे चामुण्डे चापराजिते ॥ विष्णोर्नामसहस्रेण शिखाबन्धं करोम्यहम् ॥ (चिद्रूपिणि महामाये दिव्यतेजःसमन्विते ॥ तिष्ठ देवि शिखाबन्धे तेजोवृद्धिं कुरुष्व मे ॥) इति शिखां बद्ध्वा दिग्बन्धनं[2] कुर्यात् ॥ दक्षहस्तस्य तर्जन्यङ्गुष्ठयोगेन तत्तद्दिशि दिग्बन्धनं कार्यम् ॥ ॐ प्राचीं दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ आग्नेयीं

नमः तर्पयामि ७ । ॐभूर्भुवः स्वः सर्वलोकाधिष्ठानाय नमः तर्पयामि ८ । ॐभूः एकपदायै गायत्र्यै नमः तर्पयामि ९ । ॐभुवः द्विपदायै गायत्र्यै नमः तर्पयामि १० । ॐस्वः त्रिपदायै गायत्र्यै नमः तर्पयामि ११ । ॐ भूर्भुवः स्वः चतुष्पदायै गायत्र्यै नमः तर्प० १२ । ॐ उषसे नमः तर्पयामि १३ । ॐश्रीगायत्र्यै नमः तर्प० १४ । ॐ श्रीसावित्र्यै नमः तर्प० । १५ ॐ श्रीसरस्वत्यै नमः तर्प० । १६ ॐ वेदमात्रे नमः तर्प० १७ । ॐ पृथिव्यै नमः तर्प० १८ । ॐ कौशिक्यै नमः तर्प० १९ । ॐ साङ्कृत्यै नमः तर्प० २० । ॐ जयायै नमः तर्प० २१ । ॐ अपराजितायै नमः तर्पयामि २२ । ॐ सहस्रमूर्त्यै नमः तर्प० २३ । ॐ अनन्तमूर्त्यै नमः तर्प० २४ । ( ॐभूर्भुवः स्वः सपरिवारायै वेदमात्रे श्रीगायत्र्यै नमः तर्पयामि) ॥ मन्त्रैरेतैस्तु वै नित्यं चतुर्विंशतिनामभिः । गायत्री तर्पिता येन तर्पितं सचराचरम् ॥ ततो देवीं स्वहृदि विसृज्य तर्पणजलं विसर्जयेत् ॥ पुनर्जलमादाय । ममात्मनः श्रुतिस्मृतिपुराणोक्तपुण्यफलप्राप्त्यर्थं श्रीभगवतीश्रीगायत्रीदेवीप्रीत्यर्थं श्रीसूर्यार्घदानादिमण्डपप्रवेशान्तं कर्म करिष्ये । इति सङ्कल्प्य । हस्ते जलं गृहीत्वा । अस्य श्रीसूर्यमन्त्रस्य अज ऋषिः । गायत्री छन्दः । श्रीसूर्यो देवता । श्रीसूर्यप्रीतये सूर्यार्घदाने विनि० ॥ ततो ऋष्यादिन्यासाः । ॐ अजऋषये नमः शिरसि । ॐगायत्रीछन्दसे नमो मुखे । ॐश्रीसूर्यदेवतायै

१ विश्वामित्रसंहितायाम् । शिखायाः शिखाबन्धनस्य चावश्यकत्वं द्योत्यते । यथा । गुरूपदिष्टविधिना शिखाबन्धं समाचरेत् ॥ शिखाबन्धं विना कर्म न सिद्ध्यति फलार्थिनः ॥ तस्मात्सर्वप्रयत्नेन फलार्थी साधकोत्तमः ॥ आसनं प्राणसंरोधं शिखाबन्धं समाचरेत् ॥

२ अयं दिग्बन्धः प्रायः सौराष्ट्रप्रदेशे तत्रत्यैर्याज्ञिकैः क्रियते ॥

दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ दक्षिणां दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ नैर्ऋतिं दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ पश्चिमां दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ वायवीं दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ उत्तरां दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ ईशानीं दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ ऊर्ध्वां दिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ अधोदिशं सुदर्शनेन चक्रेण बध्नामि नमश्चक्राय स्वाहा ॥ एवं दश दिशो बद्ध्वा दक्षहस्ते जलं गृहीत्वा ॐसुदर्शनाय अस्त्राय फट् त्रैलोक्यं रक्ष रक्ष हुं फट् स्वाहा इति मंत्राभ्यां स्वशरीरस्य परितो जलादिना प्रादक्षिण्येन रं रं रं इति अग्निप्राकारत्रयं विभाव्य स्वशरीरे रक्षां कुर्यात् ॥ पूर्वे रक्षतु गोविन्द आग्नेय्यां गरुडध्वजः ॥ दक्षिणे चैव वाराहो नृसिंहश्चैव निर्ऋतौ ॥ १ ॥ पश्चिमे ह्यच्युतो रक्षेद्वायव्यां मधुसूदनः ॥ उत्तरे श्रीधरो रक्षेदीशाने च गदाधरः ॥ २ ॥ ऊर्ध्वं गोवर्धनो रक्षेदधस्ताच्च त्रिविक्रमः ॥ एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ ३ ॥ शङ्खो रक्षतु यज्ञाग्रे पृष्ठे पद्ममनुत्तमम् ॥ कौमोदकी तथा वामे दक्षिणे च सुदर्शनम् ॥ ४ ॥ यजमानं सपत्नीकं रक्षतु श्रीपतिः

---

नमो हृदये। अर्घदाने विनियोगाय नमः सर्वाङ्गे ॥ अथ हृदयादिन्यासः ॥ ॐह्रां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूँ मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐह्रौं कनिष्ठिकाभ्यां नमः । ॐह्रः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि । ॐह्रां हृदयाय नमः। ॐह्रीं शिरसे स्वाहा ॥ ॐह्रूं शिखायै वषट् । ॐ ह्रैं कवचाय हुम् । ॐ ह्रौं नेत्रत्रयाय वौषट् । ॐ ह्रः अस्त्राय फट् । ध्यानम् ॥ रक्ताब्जयुग्मावरदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम् । माणिक्यमौलिं दिननाथमीडे बन्धूककान्ति विलसत्त्रिनेत्रम् ॥१॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ एवं श्रीसूर्यं ध्यात्वा मानसोपचारैः पूजयेत् ॥ लं पृथिव्यात्मकं श्रीसूर्याय गन्धं परि० । हं आकाशात्मकं श्री सूर्याय पुष्पं परि० । यं वाय्वात्मकं श्री सूर्याय धूपं परि० । रं वह्न्यात्मक श्री सूर्याय दीपं परि० । वं अमृतात्मकं श्रीसूर्याय नैवेद्यं परि० । सं सोमात्मकं श्रीसूर्याय ताम्बूलं परि० ॥ ततोऽर्घं दद्यात् । स्वपुरतः भूमौ त्रिकोणवृत्तचतुरस्रात्मकं यंत्रं विलिख्य । तत्र ॐ आधारशक्तिभ्यो नमः इति यंत्रं सम्पूज्य । ॐ फट् इति मन्त्रेण प्रक्षालितम् ( त्रिपदिकां ) आधारं संस्थाप्य । ॐ मं दशकलात्मने वह्निमण्डलाय नमः इति तं सम्पूज्य । ॐफट् इति मन्त्रेण प्रक्षालितम् अर्घपात्रं तस्योपरि संस्थाप्य । ॐअर्कमण्डलाय द्वादशकलात्मने नमः इति तं सम्पूज्य । ॐह्रां ह्रीं सः इति मन्त्रेण तत्र शुद्धजलमापूर्य । ॐ सोममण्डलाय षोडशकलात्मने नमः इति तज्जलं सम्पूज्य । अङ्कुशमुद्रया

स्वयम् ॥ उपविष्टाश्च ये विप्राः सर्वे रक्षन्तु सर्वतः ॥ रक्षाहीनं तु यत्स्थानं तत्सर्वे रक्षतु स्वभूः ॥५॥ इति रक्षां विधाय प्रणवादिमातृकान्तैर्वर्णैः प्राणायामं कुर्यात् ॥ षोडशस्वरैः पूरकः । कादिभिर्मान्तैः पञ्चविंशतिवर्णैः कुम्भकः । यादिभिर्दशवर्णैश्च रेचकः ॥ एवं दश दिक्षु दिग्बन्धनं प्राणायामञ्च कृत्वा भूतोत्सादनं कुर्यात् । तद्यथा ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामवरोधेन भूशुद्ध्यादि समारभे ॥ ततो भैरवनमस्कारः ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ ततः स्वपरितः तालत्रयकरणम् ॥ ॐसर्वभूतनिवारकाय शार्ङ्गाय सशराय सुदर्शनाय अस्त्रराजाय हुं फट् स्वाहा ॥ इति तालत्रयं कृत्वा स्वपरितोऽस्त्रमुद्रां प्रदर्शयेत् ॥ ततः स्वदक्षिणभागे गुरुभ्यो नमः । ॐ परमगुरुभ्यो नमः । ॐ परमेष्ठिगुरुभ्यो नमः ॥ ॐ परात्परगुरुभ्यो नमः ॥ ॐ पूर्वसिद्धेभ्यो नमः ॥ ॐ आचार्येभ्यो नमः ॥ ततः स्ववामभागे ॥ ॐ गंगणपतये नमः । ॐदुं दुर्गायै नमः । ॐक्षं क्षेत्रपालाय नमः । ॐयां योगिनीभ्यो नमः ।

---

सूर्यमण्डलात् । ॐगङ्गे च यमुने चैव० इति तीर्थान्यावाह्य । तत्र तिलयवसर्षपश्यामाककुशाग्ररक्तचन्दनगन्धाक्षतरक्तपुष्पादीनि प्रक्षिप्य कुशैराच्छाद्य । तस्योपरि हस्तं दत्वा । ॐआकृष्णेन० इति मन्त्रेण ॐह्रां ह्रीं सः इति वा सूर्यमन्त्रेण यथाशक्ति अष्टोत्तरशतम् अष्टाविंशतिवारम् अष्टवारं वा अभिमंत्र्य । तस्मादर्घपात्राज्जलमादाय । स्वयं जानुभ्यां धरणीं गत्वा । तत्पात्रं कराभ्याम् आदायार्घपात्रम् आमस्तकमुद्धृत्य । सकेसराणि पद्मानि करवीराणि पाण्डव । तिलतण्डुलयुक्तानि कुशगन्धोदकानि च । रक्तचन्दनमिश्राणि कृत्वा वै ताम्रभाजने । धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीतले । मन्त्रपूतं गुडाकेशमर्घं दद्याद्भक्तये ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते । अनुकम्पय मां भक्त्या गृहाणार्घं नमोऽस्तु ते ॥१॥ ॐह्रां ह्रीं सः ग्रहराशिनक्षत्रयोगकरणपरिवृतासनसंस्थिताय श्रीसूर्याय एष ते अर्घः । पुनर्जलम् अर्घपात्रे गृहीत्वा । नमोऽस्तु सूर्याय सहस्रभानवे नमोऽस्तु वैश्वानर जातवेदसे । त्वमेव चार्घं प्रतिगृह्ण देव देवाधिदेवाय नमोऽस्तु तुभ्यम् ॥ २ ॥ ॐ ह्रां ह्रीं सः ग्रहराशिनक्षत्रयोगकरणपरिवृतासनसंस्थिताय श्रीसूर्यनारायणाय एष ते अर्घः ॥ पुनर्जलमर्घपात्रे आदाय ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे । दत्तमर्घं मया भानो गृहाण त्वं नमोऽस्तु ते ॥३॥ ॐह्रां ह्रीं सः ग्रहराशिनक्षत्रयोगकरणपरिवृतासनसंस्थिताय श्रीसूर्यनारायणाय एष ते अर्घः ॥ इति सूर्याय अर्घं दत्वा यज्ञमण्डपस्य पश्चिमद्वारस्य समीपे आगत्य सामान्यार्घं स्थापयेत् ॥ तत्र भूमिं जलेन संप्रोक्ष्य त्रिकोणवृत्तभूबिम्बमण्डलं कृत्वा ॐसामान्यार्घमण्डलाय नमः इति सामान्यार्घमण्डलं गन्धपुष्पैः सम्पूज्य । ॐफट् इति आधारं (त्रिपदिकाम्) प्रक्षाल्य । ॐदशकलात्मने वह्निमण्डलाय नमः इति आधारं सम्पूज्य । ॐफट् इति सामान्यार्घपात्रं प्रक्षाल्य तस्योपरि स्थापयित्वा । ॐअं द्वादशकलात्मने सूर्य-

स्ववामपादेन भूमिताडनम्॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामवरोधेन भूशुद्ध्यादि समारभे ॥ एवं स्ववामपादेन त्रिवारं भूमिं ताडयेत् ॥ ततो भूमौ हस्तं दत्वा पठेत् ॥ ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसीः ॥ १६ ॥ ततो भैरवनमस्कारः ॥ ॐ यो भूतानामधिपतिर्यस्मिँल्लोका अधि श्रिताः ॥ य ईशे महतो महाँस्तेन गृह्णामि त्वामहं मयि गृह्णामि त्वामहम् ॥ ३२ ॥ इति भैरवनमस्कारः ॥ इति भूशुद्धिः ॥

---

## ॥ अथ भूतशुद्धिः ॥

स्वाङ्के उत्तानौ करौ कृत्वा कुण्डलिनीं ध्यायेत् ॥ [1]मूलाधारचतुर्दलकमलकर्णिकान्तर्गतत्रिकोणान्तरस्थाम् अधोमुखीं स्वयं भूलिङ्गवेष्टिनीं प्रसुप्तभुजङ्गाकारां शङ्खाकारेण सार्धत्रिवलयां तडित्कोटिनिभां नीवारांशुकतन्वीं मूलविद्याप्रकृतिमयीं कुण्डलिनीम् इष्टदेवतारूपां ध्यात्वा हुंकारेण त्रिकोणाग्निना सचेतनां कृत्वा स्वयं भूलिङ्गमध्यवर्तिसुषुम्णामार्गेण ऊर्ध्वगां कृत्वा मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञाचक्राणि भेदयित्वा सहस्रारस्थपरमशिवे जीवात्मना सह कुण्डलिनीं हंसः सोऽहम् इति मन्त्रेण संयोज्य मातृकोपसंहारं कुर्यात् ॥ तद्यथा ॥

---

मण्डलाय नमः इति पात्रं सम्पूज्य । गायत्रीमूलमन्त्रेण शुद्धजलमापूर्य । ॐ षोडशकलात्मने सोममण्डलाय नमः इति तज्जलं सम्पूज्य । अङ्कुशमुद्रया गङ्गे च यमुने च चैव० इति मन्त्रेण सूर्यमण्डलात् तीर्थान्यावाह्य मूलमन्त्रेण गन्धादि निक्षिप्य धेनुमुद्रां प्रदर्श्य पुनर्मूलेनाष्टवारमभिमन्त्र्य तज्जलं दक्षहस्तेनादाय यज्ञमण्डपद्वारं ॐ अस्त्राय फट् इति मन्त्रेण सम्प्रोक्ष्य द्वारदेवतानां पूजनं कुर्यात् ॥ द्वारस्य ऊर्ध्वशाखायां मध्यभागे ॐ विं विघ्नराजाय नमः । द्वारस्य दक्षिणभागे मं महालक्ष्म्यै नमः । द्वारस्य वामभागे ॐ सं सरस्वत्यै नमः । द्वारस्य मध्यभागे ॐ द्वां द्वारश्रियै नमः । पुनर्द्वारस्य वामशाखायां ॐ गं गणपतये नमः । ॐ क्षं क्षेत्रपालाय नमः । पुनर्द्वारस्य दक्षिणशाखायां ॐ शं शंखनिधिवसुन्धराभ्यां नमः । ॐ पं पद्मनिधिवसुमतीभ्यां नमः । पुनर्वामे ॐ गं गंगायै नमः । ॐ यं यमुनायै नमः । पुनर्दक्षे ॐ धं धात्रे नमः । ॐ विं विधात्रे नमः । अधः ॐ देहल्यै नमः । ॐ अष्टमातृभ्यो नमः । इति द्वारदेवताः सम्पूज्य वामदक्षिणक्रमेण द्वारपालिकाः पूजयेत् ॥ पूर्वद्वारे—ॐ ब्राह्म्यै नमः । ॐ माहेश्वर्यै नमः । दक्षिणद्वारे—ॐ कौमार्यै नमः । ॐ वैष्णव्यै नमः । पश्चिमद्वारे—ॐ वाराह्यै नमः । ॐ इन्द्राण्यै नमः । उत्तरद्वारे—ॐ चामु-

---

[1] मूलाधारात्समुत्थाप्य कुण्डलीं परदेवताम् ॥ सुषुम्णामार्गमाश्रित्य ब्रह्मरन्ध्रगतां स्मरेत् ॥ जीवं ब्रह्मणि संयोज्य हंसमन्त्रेण साधकः ॥

क्षकारं ळकारे उपसंहरामि ॥ ळकारं हकारे उपसंह० ॥ हकारं सकारे उप० । सकारं षकारे उप० ॥ षकारं शकारे उप० ॥ शकारं वकारे उप० ॥ वकारं लकारे उप० ॥ लकारं रकारे उप० ॥ रकारं यकारे उप० ॥ यकारं मकारे उप० ॥ मकारं भकारे उप० ॥ भकारं बकारे उपसं० ॥ बकारं फकारे उप० ॥ फकारं पकारे उप० ॥ पकारं नकारे उप० ॥ नकारं धकारे उप० ॥ धकारं दकारे उप० ॥ दकारं थकारे उपसं० ॥ थकारं तकारे उप० ॥ तकारं णकारे उप० ॥ णकारं ढकारे उप० ॥ ढकारं डकारे उप० ॥ डकारं ठकारे उप० ॥ ठकारं टकारे उपसं० ॥ टकारं ञकारे उप० ॥ ञकारं झकारे उप० ॥ झकारं जकारे उप० ॥ जकारं छकारे उप० ॥ छकारं चकारे उप० ॥ चकारं ङकारे उप० ॥ ङकारं घकारे उप० ॥ घकारं गकारे उप० ॥ गकारं खकारे उप० ॥ खकारं ककारे उप० ॥ ककारम् अःकारे उप० ॥ अःकारम् अंकारे उपसं० ॥ अंकारम् औकारे उप० ॥ औकारम् ओकारे उप० ॥ ओकारम् ऐकारे उप० ॥ ऐकारम् एकारे उप० ॥ एकारं ॡकारे उप० ॥ ॡकारं ऌकारे उप० ॥ ऌकारम् ॠकारे उप० ॥ ॠकारम् ऋकारे उप० ॥ ऋकारम् ऊकारे उप० ॥ ऊकारम् उकारे उप० ॥ उकारम् ईकारे उप० ॥ ईकारम् इकारे उप० ॥ इकारम् आकारे उप० ॥ आकारम् अकारे उपसं० ॥ अकारं ब्रह्मरन्ध्रे सहस्रकर्णिकान्तर्गतपरमात्मनि लयं गत इति भावयेत् ॥ इति मातृकोपसंहारः ॥ अथ भूतोपसंहारः[1] ॥ पादादि जानुपर्यन्तं पृथिवीमण्डलं चतुरस्रं पीतवर्णं वज्रलाञ्छितं लंबीजं पाद-

ण्डायै नमः । ॐ महालक्ष्म्यै नमः । इति द्वारपालिकाः सम्पूज्य वामहस्ते सर्षपाक्षतान्गृहीत्वा दक्षहस्तेनाच्छाद्य रक्षोघ्नमन्त्रान्पठेत् ॥ ॐ रक्षोहणम् ॥ २३ ॥ ॐरक्षोहणोवो० ॥ २५ ॥ रक्षसाम्भागो० ॥ २६ ॥ रक्षोहाविश्व० ॥ २६ ॥ अपसर्पन्तु० ॥ १ ॥ अपक्रामन्तु० ॥ २ ॥ यदत्र सं० ॥ ३ ॥ भूतानि राक्ष० ॥ ४ ॥ इति नाराचमुद्रया सर्षपान् मण्डपान्तः सर्वदिक्षु विकीर्य तस्मान्निर्गच्छतां विघ्नसङ्घानां स्ववामाङ्गं सङ्कोचयन् मार्गं दत्वा अस्त्रमन्त्रं स्मरन् ( अस्त्राय फट् ) वामपादेन घातत्रयं कृत्वा भौमान् विघ्नान्दूरीकृत्य ऊर्ध्वोर्ध्वं ताल- त्रयेणान्तरिक्षगान्विघ्नान् तीक्ष्णदृष्ट्यावलोकनेन च उत्सार्य स्वकीयवामपादपुरःसरं मण्डपस्य द्वारदेहलीमुल्लङ्घ्य यज्ञमण्डपान्तो यजमान आचार्यादिविप्रैः सह प्रविशेत् ॥

॥ इति गायत्रीप्रातःस्मरणपूर्वकसूर्यार्घसामान्यार्घमण्डपप्रवेशान्तकर्मप्रयोगः समाप्तः ॥

---

1 तन्त्रप्रकाशे—गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत् ॥ रसादि जिह्वया सार्द्धं जलमग्नौ विलापयेत् ॥ रूपादि चक्षुषा सार्द्धमग्निं वायौ नयेद्बुधः ॥ समीरमम्बरे विद्वान्स्पर्शादिकसमन्वितम् ॥ अहङ्कारे हरेद् व्योम सशब्दं तं महत्यपि ॥ महच्च सर्वेश्वरीनामव्यक्ते कारणे परे ॥ सच्चिदानन्दरूपं यद्वैष्णवं परमं पदम् ॥ पृथिव्यादिक्रमात्सर्वं तत्र लीनं विचिन्तयेत् ॥

गमनप्राणगन्धसमानवायुयुतं विभाव्य ॐ ब्रह्मणे पृथिव्या अधिपतये निवृत्तिकलात्मने हुं फट् स्वाहा॥ कुण्डलिनीद्वारा पृथिवीम् अप्सु प्रविलापयामि ॥ ततो जान्वादि नाभिपर्यन्तम् अपां मण्डलं श्वेतवर्णम् अर्द्धचन्द्राकारं पद्मद्वयलाञ्छितं वंबीजं वारुणं हस्तग्रहणरसनारसविष्णुप्रतिष्ठाकलादैवतम् उदानवायुयुतं ध्यात्वा क्लीं विष्णवे प्रतिष्ठाकलात्मने हुं फट् स्वाहा ॥ अपः अग्नौ प्रविलापयामि ॥ ततो नाभ्यादि हृदयपर्यन्तं वह्निमण्डलं रक्तवर्णं त्रिकोणं त्रिस्वस्तिकान्वितं रंबीजं पायुविसर्गचक्षुरूपशिवविद्याकलाव्यानवायुयुतं विभाव्य रुं रुद्राय विद्याकलात्मने हुं फट् स्वाहा ॥ अग्निं वायौ प्रविलापयामि ॥ ततो हृदयादि भ्रूमध्यपर्यन्तं वायुमण्डलं धूम्रवर्णं वर्तुलं षड्बिन्दुलाञ्छितं यंबीजम् उपस्थानन्दत्वक्स्पर्शेशानशान्तिकलापानवायुयुतं विभाव्य ॐ ह्रौं ईशानाय शान्तिकलात्मने हुं फट् स्वाहा ॥ वायुमाकाशे प्रविलापयामि ॥ ततो भ्रूमध्याद्ब्रह्मरन्ध्रान्तम् आकाशमण्डलं नीलवर्णं स्वच्छं वर्तुलं हंबीजं वाक्वदनश्रोत्रशब्दसदाशिवशान्त्यतीतकलाप्राणवायुयुतं विभाव्य ॐ ह्रौं सदाशिवाय शान्त्यतीतकलात्मने हुं फट् स्वाहा॥ आकाशम् अहंकारे प्रविलापयामि॥ अहंकारं महत्तत्त्वे प्रवि० ॥ महत्तत्त्वं प्रकृतौ प्रविलापयामि ॥ प्रकृतिं नित्यशुद्धबुद्धस्वभावे सत्यज्ञानानन्तानन्दलक्षणे परमकारणे परब्रह्मणि प्रविलापयामि॥ एवं भूतानि प्रविलाप्य आत्मानं चिन्तयेत्॥ अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक् ॥ सच्चिदानन्दरूपोऽहं निर्विकल्पः स्वभाववान्॥ एवं ब्रह्मरूपं विभाव्य वामकुक्षौ पापपुरुषं चिन्तयेत् ॥ शुद्धसंचिन्मयो भूत्वा चिन्तयेत्पापपूरुषम्॥ वामकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम्॥१॥ ब्रह्महत्याशिरःस्कन्धं स्वर्णस्तेयभुजद्वयम् ॥ सुरापानहृदायुक्तं गुरुतल्पकटीयुतम् ॥ २ ॥ तत्संयोगिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ ३ ॥ खड्गचर्मधरं क्रुद्धं पुरुषं कज्जलप्रभम्॥ अधोमुखं कृष्णवर्णं पिङ्गाक्षं शूलपाणिनम् ॥ ४ ॥ सदा वै संस्थितं ह्येवं वामकुक्षौ विचिन्तयेत्॥ एवं पापपुरुषं विचिन्त्य यमादिबीजेन प्राणायामं कुर्यात्॥ हस्ते जलं गृहीत्वा ॥ यमिति वायुबीजस्य किष्किन्ध ऋषिः। बृहतीच्छन्दः । वायुर्देवता । पापपुरुषशोषणे विनियोगः॥ पुनर्जलमादाय॥ रंमिति अग्निबीजस्य कश्यप ऋषिः। त्रिष्टुप् छन्दः। जात-

१ यद्वायुबीज धूम्रं च चलं ध्वजसंयुतम् ॥ षड्बिन्दुयुतं सर्वशोषण संदैवतम् ॥ य षोडशवारं जपेत् ॥ नाभिमूले च षड्बिन्दुमण्डले च विचिन्तयेत् ॥

२ चिन्तयेद् हृदये रक्तं त्रिकोणं वह्निमण्डलम् ॥ विद्याकलायुतं रुद्रदैवतं ह्यभिमीरितम् ॥ रं बीजं चतुःषष्टिवारं द्वात्रिंशद्वारं वा जपेत् ॥

वेदोऽग्निर्देवता। पापपुरुषदहने विनियोगः॥ पुनर्जलं गृहीत्वा॥ यमिति वायुबीजस्य किष्किन्ध ऋषिः बृहतीच्छन्दः। वायुर्देवता॥ पापपुरुषभस्मरेचने विनियोगः॥ यं १६, रं ६४, यं ३२, वारमिति पूरककुंभकरेचकक्रमेण प्राणायामं कुर्यात्॥ ततो वंमिति वरुणबीजस्य हिरण्यगर्भ ऋषिः। त्रिष्टुप् च्छन्दः। वरुणो देवता। पापपुरुषस्य भस्मप्लावने विनियोगः॥ ततो लंमिति पृथिवीबीजस्य ब्रह्मा ऋषिः। गायत्रीच्छन्दः। इन्द्रो देवता। पापपुरुषस्य भस्मकठिनीकरणे विनियोगः॥ ततो हंमिति आकाशबीजस्य शिव ऋषिः। अव्यक्ता गायत्रीछन्दः। परमशिवो देवता। पापपुरुषस्य अङ्गान्युत्पादने विनियोगः॥ एवं वं ३२ वारं, लं ६४ वारं, हं १६, वारं जप्त्वा प्राणायामं कुर्यात्॥ एवं स्वशरीरं विचिन्त्य परमात्मनः सकाशात्सृष्टिक्रमेण तत्त्वानि स्वस्थाने स्थापयेत्॥ ततः परब्रह्मणः सकाशात्प्रकृतिस्वरूपा माया प्रादुर्भूता। तस्याः सकाशान्महत्तत्त्वम्। महत्तत्त्वादहंकारः। अहङ्कारात् आकाशः। आकाशाद्वायुः। वायोरग्निः। अग्नेः आपः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधिभ्यः अन्नम्॥ अन्नाद्रेतः॥ रेतसः पुरुषः॥ एवं स्वशरीरं तेजोमयं पुण्यात्मकं सकलपुरुषार्थसाधकं निरस्तकिल्बिषं श्रीगायत्रीदेवताराधनयोग्यम् उत्पन्नमिति भावयेत्॥ ततो हंसः सोऽहम् इति मन्त्रेण परब्रह्मणः सकाशात् पृथग्भूतां कुण्डलिनीशक्तिं मूलाधारगतां चिन्तयेत्॥ एवं पञ्च भूतानि संस्थाप्य न्यासान्कुर्यात्॥ ॐ हौं सदाशिवाय आकाशाधिपतये नमो मूर्ध्नि॥ ॐ ह्यैं ईशानाय वायोरधिपतये नमो मुखे॥ ॐ रुं रुद्राय तेजोधिपतये नमो हृदि॥ ॐ ह्रीं विष्णवे अपामधिपतये नमो गुह्ये॥ ॐ ब्रह्मणे पृथिव्या अधिपतये नमः पादयोः॥ इति भूतशुद्धिः॥

---

॥ अथ प्राणप्रतिष्ठाप्रयोगः ॥

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामानि छन्दांसि। जगत्सृष्टिः प्राणशक्तिर्देवता। आं बीजम्। ह्रीं शक्तिः। क्रौं कीलकम्। मम प्राणप्रतिष्ठापने विनियोगः॥ ॐ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि॥ ॐ ऋग्यजुःसामछन्देभ्यो नमः मुखे। ॐ जगत्सृष्ट्यै प्राणशक्त्यै देवतायै

---

३ अत्र यमादिबीजानां जपः कार्यः न तु प्राणायामः इत्यपि केचित् कथयन्ति॥

१ वारुणं मण्डलं मूर्ध्नि शुभ्रं चन्द्रार्धसन्निभम्॥ सितपङ्कजयुग्माङ्कं वं स्याद्वरुणदैवतम्॥

२ आधारे मण्डले पृथिवीमण्डलं वज्रलाञ्छितम्॥ चतुष्कोणं च कठिनं पीतवर्णेन्द्रदैवतम्॥ लंबीजेन समायुक्तं ध्यायेन्मनसि पूर्ववत्॥

३ आकाशमण्डलं वृत्तं द्वादशान्ते ह्युज्ज्वलम्॥ ध्यान्यतीतकलायुक्तं चिन्त्यमाकाशमण्डलम्॥

४ आकाशादीनि भूतानि पुनरुत्पादयेत्ततः॥ अखण्डमहापमात्मात्प्रेरकः पुरुषः स्मृतः॥

नमो हृदये ॥ आँ बीजाय नमो गुह्ये ॥ ह्रीँ शक्तये नमः पादयोः ॥ क्रौँ कीलकाय नमः सर्वाङ्गेषु ॥ अथ करन्यासः ॥ ॐ आँ ह्रीँ क्रौँ अँ कँ खँ गँ घँ ङँ पृथिव्यप्तेजोवाय्वाकाशात्मने आँ अङ्गुष्ठाभ्यां नमः ॥ ॐ आँ ह्रीँ क्रौँ इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगन्धात्मने ईँ तर्जनीभ्यां नमः ॥ ॐ आँ ह्रीँ क्रौँ उँ टँ ठँ डँ ढँ णँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां नमः ॥ ॐ आँ ह्रीँ क्रौँ एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐँ अनामिकाभ्यां नमः ॥ ॐ आँ ह्रीँ क्रौँ ओँ पँ फँ बँ भँ मँ वचनादानगमनविसर्गानन्दात्मने औँ कनिष्ठिकाभ्यां नमः ॥ ॐ आँ ह्रीँ क्रौँ अँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ मनोबुद्ध्यहंकारचित्तविज्ञानात्मने अः करतलकरपृष्ठाभ्यां नमः ॥ अथ हृदयादिन्यासः ॥ ॐ आँ ह्रीँ क्रौँ अँ कँ खँ गँ घँ ङँ पृथिव्यप्तेजोवाय्वाकाशात्मने आँ हृदयाय नमः ॥ ॐ आँ ह्रीँ क्रौँ इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगन्धात्मने ईँ शिरसे स्वाहा ॥ ॐ आँ ह्रीँ क्रौँ उँ टँ ठँ डँ ढँ णँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ शिखायै वषट् ॥ ॐ आँ ह्रीँ क्रौँ एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐँ कवचाय हुम् ॥ ॐ आँ ह्रीँ क्रौँ ओँ पँ फँ बँ भँ मँ वचनादानगमनविसर्गानन्दात्मने औँ नेत्रत्रयाय वौषट् ॥ ॐ आँ ह्रीँ क्रौँ अँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ मनोबुद्ध्यहङ्कारचित्तविज्ञानात्मने अः अस्त्राय फट् ॥ ॐ आँ नमः नाभेः पादान्तम् ॥ ॐ ह्रीँ नमो हृदयादिनाभ्यन्तम् ॥ क्रौँ नमो मस्तकादिहृद्यन्तम् ॥ ततो हृदये सप्तधात्वादीन्न्यसेत् ॥ ॐ यँ त्वगात्मने नमः ॥ ॐ रँ असृगात्मने नमः ॥ ॐ लँ मेदआत्मने नमः ॥ ॐ वं मांसात्मने नमः ॥ ॐ शं अस्थ्यात्मने नमः ॥ ॐ षँ मज्जात्मने नमः ॥ ॐ सं शुक्रात्मने नमः ॥ ॐ हं प्राणात्मने नमः ॥ ॐ ळं जीवात्मने नमः ॥ ॐ क्षं क्रोधात्मने नमः ॥ इति हृदये विन्यस्य अकारादि क्षकारान्तं मस्तकादारभ्य पादपर्यन्तं व्यापकं कुर्यात् ॥ ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति व्यापकं कार्यम् ॥ अथ ध्यानम् ॥ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशङ्कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान् ॥ बिभ्राणा सृक्कपालं त्रिनयनविलसत्पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ इति ध्यात्वा मानसोपचारैः सम्पूजयेत् ॥ तद्यथा—लं पृथिव्यात्मकं गन्धं परिकल्पयामि । हं आकाशात्मकं पुष्पं परि० । यं वाय्वात्मकं धूपं परिकल्पयामि । रं तेज आत्मकं दीपं परि० । वं अमृतात्मकं नैवेद्यं परि० ॥ सं सोमात्मकं ताम्बूलं परि० ॥ छत्रचामरमुकुरमुकुटपादुकाः परि० । इति मानसोपचारैः सम्पूज्य ॥ षट्कोणस्थैर्ब्रह्मविष्णुशिवैर्वाणी-

लक्ष्मीपार्वतीसहितैः सेव्यमानां केशरस्थैरङ्गैः पत्रस्थाभिर्मातृकाभिश्चतुरस्रैरिन्द्राद्यैश्च सेवितां प्राणशक्तिं मनसा सम्पूज्य हृदि हस्तं निधाय तन्मन्त्रं त्रिर्जपेत् ॥ तद्यथा—ॐ आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हौँ ॐ क्षँ सँ हँ सः ॐ ह्रीँ मम प्राणा इह प्राणाः ॥ ॐ आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हौँ ॐ क्षँ सँ हँ सः ॐ ह्रीँ मम जीव इह स्थितः ॥ ॐ आँ ह्रीँ क्रौँ यँ रँ लँ वँ शँ षँ सँ हँ ळँ क्षँ हौँ ॐ क्षँ सँ हँ सः ॐ ह्रीँ मम सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ ॐ क्षं सं हं सः ॐ ह्रीँ ॥ इति प्राणप्रतिष्ठामन्त्रं त्रिवारं पठित्वा गर्भाधानादिषोडशसंस्कारार्थं हृदि हस्तं दत्वा षोडशवारं प्रणवं जपेत् ॥ अनेन मम देहस्य गर्भाधानादिषोडशसंस्काराः संपद्यन्ताम् ॥ अयं देहः सर्वकर्मारम्भयोग्यो जातः। ज्योतिर्मयं स्वशरीरं पुनरुत्पन्नम् इति भावयेत्॥ततः प्राणायामं कुर्यात्॥तद्यथा॥अकाराद्यःकारान्तान् षोडशस्वरानुच्चार्य वामनासायां वायुं पूरयेत् ॥ ककारादिमकारान्तान् पञ्चविंशतिवर्णानुच्चार्य कुंभकेन वायुं स्थिरीकुर्यात् ॥ यकारादिक्षान्तान्वर्णानुच्चार्य वायुं रेचयेत् ॥ एवं प्राणायामं कृत्वा ॥ यथा पर्वतधातूनां दोषान् दहति पावकः ॥ एवमन्तर्गतं पापं प्राणायामेन दह्यते ॥ इति प्राणप्रतिष्ठाप्रयोगः ॥

---

अथ अजपाजपसङ्कल्पः ॥ अजपानामगायत्री योगिनां मोक्षदायिनी॥तस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते॥ १॥षट्शतानि दिवारात्रौ सहस्राण्येकविंशतिः ॥ एतत्संख्येति मन्त्रेण जीवो जपति सर्वदा॥हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ हंसः सोऽहमिमं मन्त्रं जीवो जपति सर्वदा॥हस्ते जलं गृहीत्वा ॥ अस्य श्रीअजपागायत्रीमन्त्रस्य हंसऋषिः। अव्यक्ता गायत्री छन्दः।परमात्मा अर्धनारीश्वरो देवता॥हं बीजम् ॥ सः शक्तिः। सोऽहं कीलकम्। मम सर्वपापक्षयार्थे अजपासङ्कल्पे विनियोगः॥ ॐ हंसऋषये नमः शिरसि ॥ ॐअव्यक्तागायत्रीच्छन्दसे नमो मुखे ॥ ॐसोऽहं कीलकाय नमः सर्वाङ्गे ॥ ॐ विनियोगाय नमः करसम्पुटे ॥ अथ करादिन्यासाः ॥ ॐ ह्रां सूर्यात्मने अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं सोमात्मने तर्जनीभ्यां नमः। ॐ ह्रूं निरञ्जनात्मने मध्यमाभ्यां नमः ॥ ॐ ह्रैं निराभासात्मने अनामिकाभ्यां नमः ॥ ॐ ह्रौं अव्यक्तात्मने कनिष्ठिकाभ्यां नमः । ॐ ह्रः अणुसूक्ष्मात्मने करतलकरपृष्ठाभ्यां नमः॥एवं हृदयादिन्यासाः ॥ ॐ ह्रां सूर्यात्मने हृदयाय नमः । ॐह्रीं सोमात्मने शिरसे स्वाहा । ॐ ह्रूं निरञ्जनात्मने शिखायै वषट्॥ ॐ ह्रैं निराभा-

---

१ अयं न्यासः प्रायः सौराष्ट्रदेशे एव प्रचलति॥ इतो परंशिष्टां संगुप्यंवा नास्ति॥ अकृते प्रत्यवायोऽपि न॥

त्मने कवचाय हुम् ॥ ॐ ह्रौं अव्यक्तात्मने नेत्रत्रयाय वौषट् ॥ ॐ ह्रः अणुसूक्ष्मात्मने अस्त्राय फट् ॥ अथ ध्यानम् ॥ उद्यद्भानुस्फुरिततडिदाकारमर्धाम्बिकेशं पाशाभीती वरदपरशू न्धारयन्तं कराब्जैः ॥ दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं सौम्याग्नेयं वपुरवतु नश्चन्द्रचूडं त्रिनेत्रम् ॥ १ ॥ एवं ध्यात्वा उदयादारभ्य उदयपर्यन्तं प्राणजप्राजपाजपसङ्कल्पं कुर्यात् ॥ तद्यथा—गुदस्थाने मूलाधारे चतुर्दले पद्मे रक्तवर्णे वं शं षं सं चतुर्बीजयुक्ते चतुःकलासहिते तत्र अग्निर्ऋषिः । गायत्रीछन्दः । गं बीजम् । गणपतिर्देवता । राकिनी शक्तिः । प्राणजप्तेन षट्शतेन अजपागायत्रीमंत्रजपेन पूर्वेद्युर्जप्तेन श्रीमहागणपतिः प्रीयताम् ॥ १ ॥ तस्योपरि लिङ्गस्थाने स्वाधिष्ठाने षड्दले पद्मे पीतवर्णे वं भं मं यं रं लं षड्बीजयुक्ते षट्कलासहिते तत्र अग्निर्ऋषिः । गायत्री छन्दः । अं बीजम् । ब्रह्मा देवता । लाकिनी शक्तिः । प्राणजप्तेन षट्सहस्रेण अजपागायत्रीमंत्रजपेन पूर्वेद्युर्जप्तेन श्रीब्रह्मा प्रीयताम् ॥ २ ॥ तस्योपरि नाभौ मणिपूरके दशदले पद्मे नीलवर्णे डं ढं णं तं थं दं धं नं पं फं दशबीजयुक्ते दशकलासहिते तत्र वायुर्ऋषिः । उष्णिक् छन्दः । उँ बीजम् विष्णुर्देवता । शाकिनी शक्तिः ॥ प्राणजप्तेन षट्सहस्रेण अजपागायत्रीमन्त्रजपेन पूर्वेद्युर्जप्तेन श्रीमहाविष्णुः प्रीयताम् ॥ ३ ॥ तस्योपरि हृदयस्थाने अनाहतचक्रे द्वादशदले पद्मे कं खं गं घं ङं चं छं जं झं ञं टं ठं द्वादशबीजयुक्ते द्वादशकलासहिते तत्र अग्निर्ऋषिः । गायत्री छन्दः । मं बीजम् । रुद्रो देवता । डाकिनी शक्तिः । प्राणजप्तेन षट्सहस्रेण अजपागायत्रीमन्त्रजपेन पूर्वेद्युर्जप्तेन श्रीमहारुद्रो देवता प्रीयताम् ॥ ४ ॥ तस्योपरि कण्ठस्थाने विशुद्धिचक्रे षोडशदले पद्मे वैडूर्यवर्णे अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः षोडशवर्णयुक्ते षोडशकलासहिते तत्र परमात्मा ऋषिः । अव्यक्ता गायत्री छन्दः । ॐ बीजम् । ईशो देवता ॥ ज्ञानशक्तिः । प्राणजप्तेन सहस्रैकेन अजपागायत्रीमंत्रजपेन पूर्वेद्युर्जप्तेन ईशो देवता प्रीयताम् ॥ ५ ॥ तस्योपरि भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले पद्मे गौरवर्णे हं क्षं बीजयुक्ते द्विकलासहिते तत्र गुरुर्ऋषिः । बृहद्गायत्री छन्दः ॥ यं बीजम् । परमगुरुर्देवता । हाकिनी शक्तिः । प्राणजप्तेन सहस्रैकेन अजपागायत्रीमंत्रजपेन पूर्वेद्युर्जप्तेन श्रीपरमगुरुः प्रीयताम् ॥ ६ ॥

---

[1] मूलाधारस्थिताय गणेशाय षट्शतं समर्प० । स्वाधिष्ठानस्थिताय ब्रह्मणे षट्सहस्रं समर्प० ॥ २ ॥ मणिपूरकस्थिताय विष्णवे षट्सहस्रं समर्प० । अनाहतस्थिताय श्रमहारुद्राय षट्सहस्रं समर्प० । विशुद्धिस्थिताय शिवाय सहस्रं समर्प० । आज्ञाचक्रस्थिताय गुरवे सहस्रं समर्प० । द्वादशान्तस्था० (ब्रह्मरन्ध्रे) श्रीपरमात्मने सहस्र समर्प० । अनया रीत्याऽपि अजपाजपवेदसुखमन्यम दृश्यते ॥ अस्यावश्यकत्वमपि प्रतिभातीति शारदातिलके प्रतिपादितम् ॥

तस्योपरि ब्रह्मरन्ध्रे सहस्रदलपद्मे शुद्धस्फटिकसन्निभे नानाबीजयुक्ते नानाकला-सहिते अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं सहस्र-कलासहिते तत्र परमशिव ऋषिः। अव्यक्ता गायत्री छन्दः। हं बीजम्। परमशिवो देवता। अचिन्त्या शक्तिः। प्राणजपेन सहस्रैकेन अजपागायत्रीमंत्रजपेन पूर्वेद्युर्जप्तेन श्रीपरमशिवो देवः प्रीयताम् ॥ ७ ॥ ततः करसम्पुटौ कृत्वा प्रार्थयेत् ॥ अजपा नाम गायत्री त्रैलोक्येषु च विश्रुता॥ अजपां जपतो नित्यं पुनर्जन्म न विद्यते ॥१॥ ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं त्रिगुणरहितं तत्त्वमस्यादिलक्ष्यम्॥ एकं नित्यं विमलमचलं सर्वदा साक्षिभूतं भावातीतं गगनसदृशं सद्गुरुं तं नमामि ॥ २ ॥ हस्ते जलं गृहीत्वा अनेन अजपागायत्रीमंत्रजपनिवेदनेन तत्तद्देवताः प्रीयन्तां न मम ॥ इति अजपागायत्रीजपनिवेदनम् ॥

---

## ॥ अथ अन्तर्मातृकान्यासः ॥

अस्य श्रीअन्तर्मातृकान्यासस्य ब्रह्मा ऋषिः। गायत्रीछन्दः। अन्तर्मातृका सरस्वती देवता। हलो बीजानि। स्वराः शक्तयः। बिन्दवः कीलकम् ॥ अन्त-र्मातृकान्यासे विनियोगः ॥ ॐ ब्रह्मर्षये नमः शिरसि। ॐ गायत्रीछन्दसे नमो मुखे। ॐ अन्तर्मातृकासरस्वतीदेवतायै नमो हृदये ॥ ॐ हल्भ्यो बीजेभ्यो नमो गुह्ये ॥ ॐ स्वरशक्तिभ्यो नमः पादयोः। ॐ बिन्दुकीलकाय नमः सर्वाङ्गे॥ अथ करन्यासाः॥ ॐअं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः। ॐइं चं छं जं झं ञं ईं तर्जनीभ्यां नमः। ॐउं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः। ॐएं तं थं दं धं नं ऐं अनामिकाभ्यां नमः। ॐओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः ॥ ॐअं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः॥ एवं हृदयादिन्यासः॥ ॐ अं कं खं गं घं ङं आं हृदयाय नमः। ॐ इं चं छं जं झं ञं ईं शिरसे स्वाहा ॥ ॐ उं टं ठं डं ढं णं ऊं शिखायै वषट्॥ ॐ एं तं थं दं धं नं ऐं कव-चाय हुम् ॥ ॐ ओं पं फं बं भं मं औं नेत्रत्रयाय वौषट् ॥ ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः अस्त्राय फट्॥ अथ ध्यानम्॥ पञ्चाशल्लिपिभिर्विभज्यमुखदो-ष्पन्मध्यवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ॥ मुद्रामक्षगुणं

---

१ आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्धे चतुष्के ॥ वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां हसं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ अक्षस्रजं हरिणपोतमुदग्रटङ्कं विद्याकरैरविरतं दधती त्रिनेत्राम् । अर्धेन्दुमौलिमरुणामरविन्दसंस्था वर्णेश्वरी प्रणमत स्तनभारनम्राम् ॥ इति ध्यानद्वयमपि सद्यो वदन्ति ॥

सुधाढ्यकलशं विद्याञ्च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये॥
-इति ध्यात्वा ॥ मानसोपचारैः पूजयेत् ॥ तद्यथा ॥ लं पृथिव्यात्मकं गन्धं परि० ।
हं आकाशात्मकं पुष्पं परि० । यं वाय्वात्मकं धूपं परि० । रं तेज आत्मकं दीपं परि०॥
वं अमृतात्मकं नैवेद्यं परि० ॥ सं सोमात्मकं ताम्बूलं परि० ॥ छत्रचामरदर्पणमुकुर-
मुकुटपादुकाः परि०॥ततः स्वदक्षिणकरस्य कनिष्ठिकाया आरभ्य पञ्चसु दक्षहस्तस्या-
ङ्गुलिषु प्रत्येकम् अङ्गुलौ त्रीन्त्रीन्स्वरान् विन्यस्य वामहस्तस्याङ्गुलिषु अः इति एकं
स्वरं न्यसेत्॥ तद्यथा॥ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः पर्य-
न्तम् ॥ ततो स्ववामहस्तस्य तर्जनीमारभ्य दक्षिणहस्तस्याङ्गुलिभिः सहाष्टस्वङ्गुलिषु
प्रत्येकमङ्गुलौ चतुरश्चतुरो वर्णान् विन्यस्याङ्गुष्ठयोः हं ळं अङ्गुल्यग्रेषु क्षं न्यसेत् ॥
कं खं गं घं । ङं चं छं जं । झं ञं टं ठं । डं ढं णं तं । थं दं धं नं । पं फं बं भं । मं
यं रं लं । वं शं षं सं । हं ळं क्षं । इति करस्थमातृकान्यासाः ॥ ततो कण्ठादौ मातृकाणां
न्यासान्कुर्यात्॥तद्यथा॥ कण्ठस्थाने षोडशदलपद्मेऽकारादिषोडश स्वरान् प्रादक्षि-
ण्येन विन्यसेत्॥ ॐ अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः॥ इति
कण्ठे॥ तथैव हृदि द्वादशदलपद्मे कादिठान्तान्वर्णान्प्रादक्षिण्येन विन्यसेत् ॥ ॐ
कं खं गं घं ङं चं छं जं झं ञं टं ठं ॥ इति हृदि ॥ ततो नाभिस्थाने दश-
दलपद्मे प्रादक्षिण्येन डादिफान्तान्वर्णान् विन्यसेत् ॥ ॐ डं ढं णं तं थं दं धं नं
पं फं ॥ इति नाभौ ॥ ततो लिङ्गस्थाने षड्दलपद्मे प्रादक्षिण्येन बादिलान्तान्व-
र्णान् विन्यसेत् ॥ ॐ बं भं मं यं रं लं इति लिङ्गे ॥ ततो गुदस्थाने चतुर्दलपद्मे
प्रादक्षिण्येन वादिसान्तान्वर्णान् विन्यसेत् ॥ वं शं षं सं । इति गुदे ॥ ततो
भ्रूमध्ये द्विदलपद्मे प्रादक्षिण्येन हं क्षं द्वौ वर्णौ विन्यसेत्॥ ॐ हं क्षं इति भ्रुवोः ॥
ततो ब्रह्मरन्ध्रे सहस्रदलपद्मे अकारादिक्षान्तान् वर्णान्विन्यसेत् ॥ यथा—ॐ अं आं
इत्यादि क्षंपर्यन्तम् ॥ इति अन्तर्मातृकान्यासः ॥

---

॥ अथ बहिर्मातृकान्यासः ॥

अस्य श्रीबहिर्मातृकान्यासस्य ब्रह्मा ऋषिः । गायत्री छन्दः । बहिर्मातृकासर-
स्वती देवता । हलो बीजानि । स्वराः शक्तयः ॥ बहिर्मातृकाबिन्दवः कीलकम् ।
बहिर्मातृकान्यासे विनियोगः ॥ ब्रह्मऋषये नमः शिरसि । गायत्रीछन्दसे नमो
मुखे । ॐ बहिर्मातृकासरस्वतीदेवतायै नमो हृदये । ॐ हल्भ्यो बीजेभ्यो नमो
गुह्ये । ॐ स्वरशक्तिभ्यो नमः पादयोः । ॐ बिन्दुकीलकाय नमः नाभौ ॥ ॐ
मातृकान्यासे विनियोगाय नमः सर्वाङ्गे ॥ अथ करन्यासाः । ॐ अं कं खं गं घं

ङं आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः ॥ ॐ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः। ॐ ओं पं फं वं भं मं औं कनिष्ठिकाभ्यां नमः ॥ ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ ॐ अं कं खं गं घं ङं आं हृदयाय नमः । ॐ इं चं छं जं झं ञं ईं शिरसे स्वाहा ॥ ॐ उं टं ठं डं ढं णं ऊं शिखायै वषट् ॥ ॐ एं तं थं दं धं नं ऐं कवचाय हुम् ॥ ॐ ओं पं फं वं भं मं औं नेत्रत्रयाय वौषट् ॥ ॐ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ॥ अथ ध्यानम् ॥ पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षोदेशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ॥ अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्थामच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ इति ध्यात्वा मानसोपचारैः पूजयेत् ॥ यथा—लं पृथिव्यात्मकं गन्धं परि० । हं आकाशात्मकं पुष्पं परि० । यं वाय्वात्मकं धूपं परि० । रं तेज आत्मकं दीपं० परि० ॥ वं अमृतात्मकं नैवेद्यं परि० । सं सोमात्मकं ताम्बूलं परि० ॥ छत्रचामरदर्पणमुकुरमुकुटपादुकाः परि०॥ततो निजाङ्गे न्यासान्कुर्यात् ॥ ॐ अं नमो मध्यमानामिकाभ्यां शिरसि। ॐआं नमो मध्यमानामिकाभ्यां मुखवृत्ते। ॐइं नमो तर्जनीमध्यमाभ्यां दक्षनेत्रे। ईं नमो तर्जनीमध्यमाभ्यां वामनेत्रे। ॐउं नमः दक्षाङ्गुष्ठेन दक्षकर्णे॥ ॐऊं नमो दक्षकराङ्गुष्ठेन वामकर्णे। ॐऋं नमो दक्षाङ्गुष्ठकनिष्ठिकाभ्यां दक्षनासायाम् ॥ ॠं नमः दक्षकराङ्गुष्ठकनिष्ठिकाभ्यां वामनासायाम् ॥ ॐऌं नमो मध्यमानामिकाकनिष्ठिकाभिः दक्षकपोले । ॐ ॡं नमो मध्यमानामिकाकनिष्ठिकाभिः वामकपोले । ॐ एं नमो मध्यमया ऊर्ध्वोष्ठे । ॐ ऐं नमो मध्यमया अधरोष्ठे । ॐ ओं नमो अनामिकया ऊर्ध्वदन्तपङ्क्तौ ॥ ॐ औं नमो अनामिकया अधो दन्तपङ्क्तौ ॥ ॐ अं नमो कनिष्ठिकानामिकाभ्यां जिह्वामूले ॥ ॐ अः नमः अनामिकया ग्रीवायाम् ॥ ॐ कं नमो मध्यमानामिकाभ्यां दक्षबाहुमूले । ॐ खं नमो मध्यमानामिकाभ्यां दक्षबाहुकूर्परे । ॐगं नमो मध्यमानामिकाभ्यां दक्षबाहुमणिबन्धे । ॐ घं नमो मध्यमानामिकाभ्यां दक्षबाह्वङ्गुलिमूले ॥ ॐ ङं नमो मध्यमानामिकाभ्यां दक्षबाह्वङ्गुल्यग्रे ॥ ॐ चं नमो मध्यमानामिकाभ्यां वामबाहुमूले । ॐछं नमो मध्यमानामिकाभ्यां वामबाहुकूर्परे ॥ ॐजं नमो मध्यमानामिकाभ्यां वामबाहुमणिबन्धे । ॐ झं नमो मध्यमानामिकाभ्यां वामबाह्वङ्गुलिमूले॥ ॐ ञं नमो मध्यमानामिकाभ्यां वामबाह्वङ्गुल्यग्रे ॥ ॐ टं नमो मध्यमानामिकाभ्यां दक्षपादमूले । ॐठं नमो मध्यमानामिकाभ्या दक्षपादजानुनि । ॐडं नमो मध्य-

मानामिकाभ्यां दक्षपादगुल्फे। ॐ ढं नमो मध्यमानामिकाभ्यां दक्षपादाङ्गुलिमूले। ॐ णं नमो मध्यमानामिकाभ्यां दक्षपादाङ्गुल्यग्रे॥ ॐ तं नमो मध्यमानामिकाभ्यां वामपादमूले। ॐ थं नमो मध्यमानामिकाभ्यां वामपादजानुनि। ॐ दं नमो मध्यमानामिकाभ्यां वामपादगुल्फे। ॐ धं नमो मध्यमानामिकाभ्यां वामपादाङ्गुलिमूले। ॐ नं नमो मध्यमानामिकाभ्यां वामपादाङ्गुल्यग्रे॥ ॐ पं नमो मध्यमानामिकाभ्यां दक्षपार्श्वे। ॐ फं नमो मध्यमानामिकाभ्यां वामपार्श्वे। ॐ बं नमो कनिष्ठिकानामिकाभ्यां पृष्ठे। ॐ भं नमो मध्यमाकनिष्ठिकाभ्यां नाभौ। ॐ मं नमः सर्वाङ्गुलिभिः उदरे। ॐ यं त्वगात्मने नमः दक्षकरतलेन हृदये। ॐ रं असृगात्मने नमः दक्षकराङ्गुलिभिः दक्षांसे॥ ॐ लं मांसात्मने नमः दक्षकरांगुलिभिः ककुदि। ॐ वं मेदात्मने नमो दक्षकराङ्गुलिभिः वामांसे। ॐ शं अस्थ्यात्मने नमो वामकरतलेन हृदयादिदक्षकराग्रान्तम्॥ ॐ षं मज्जात्मने नमः दक्षकरतलेन हृदयादिवामकराग्रान्तम्॥ ॐ सं शुक्रात्मने नमः दक्षकरतलेन हृदयादिदक्षपादाग्रान्तम्॥ ॐ हं प्राणात्मने नमः दक्षकरतलेन हृदयादिवामपादाग्रान्तम्॥ ॐ ळं जीवात्मने नमः करतलेन हृदयाद्युदरान्तम्॥ ॐ क्षः क्रोधात्मने नमः दक्षकरतलेन हृदयादिमुखान्तम्॥

॥ इति बहिर्मातृकान्यासः ॥

॥ अथ गायत्रीमहान्यासाः ॥

अथ प्राणायामन्यासः। तत्रादौ प्रणवन्यासः॥ प्रणवस्य ब्रह्मा ऋषिः। दैवी गायत्री छन्दः। परमात्मा देवता। न्यासे विनियोगः। ॐ अं अङ्गुष्ठाभ्यां नमः। ॐ उं तर्जनीभ्यां नमः। ॐ मं मध्यमाभ्यां नमः। ॐ अं अनामिकाभ्यां नमः। ॐ उं कनिष्ठिकाभ्यां नमः। ॐ मं करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। ॐ अं हृदयाय नमः। ॐ उं शिरसे स्वाहा। ॐ मं शिखायै वषट्। ॐ अं कवचाय हुम्। ॐ उं नेत्रत्रयाय वौषट्। ॐ मं अस्त्राय फट्। ॐ अं नमो नाभौ। ॐ उं नमो हृदये। ॐ मं नमः शिरसि॥ इति करादि प्रणवन्यासः। अथाङ्गेषु प्रणवान्न्यसेत्। पादयोश्चतुरः ॐ ॐ ॐ ॐ। जान्वोर्द्वौ ॐ ॐ। ऊर्वोः पञ्च ॐ ॐ ॐ ॐ ॐ। स्फिचि द्वौ ॐ ॐ। गुह्ये दश ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ। उदरे दश। ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ ॐ। वक्षसि द्वौ ॐ ॐ। कण्ठे द्वौ ॐ ॐ। बाह्वोर्द्वौ ॐ ॐ। अंसयोर्द्वौ ॐ ॐ। मुखे द्वौ ॐ ॐ। नासिकयोः द्वौ ॐ ॐ। चक्षुषि द्वौ ॐ ॐ। कर्णयोर्द्वौ ॐ ॐ। मूर्ध्नि सप्त ॐ ॐ ॐ ॐ ॐ ॐ ॐ। इति प्रणवन्यासः।

अथ सप्तव्याहृतिन्यासः । हस्ते जलं गृहीत्वा । आसां भूरादिसप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांसि । ॐ अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः। सर्वेषां न्यासे विनियोगः। ॐ भूः नमो हृदये । ॐ भुवः नमो मुखे। ॐ स्वः नमो दक्षांसे । ॐ महः नमो वामांसे । ॐ जनः नमो दक्षोरौ । ॐ तपः नमो वामोरौ । ॐ सत्यं नमः जठरे । इति सप्तव्याहृतिन्यासः । अथ गायत्र्याः षडङ्गन्यासः। अस्या गायत्र्या विश्वामित्र ऋषिः । गायत्री छन्दः । सविता देवता षडङ्गन्यासे विनियोगः ॥ ॐ तत्सवितुर्ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः । ॐ वरेण्यं विष्ण्वात्मने तर्जनीभ्यां नमः। ॐ भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां नमः । ॐ धीमहि ईश्वरात्मनेऽनामिकाभ्यां नमः । ॐ धियो यो नः सदाशिवात्मने कनिष्ठिकाभ्यां नमः। ॐप्रचोदयात् सत्यात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि। ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ॐ वरेण्यं विष्ण्वात्मने शिरसे स्वाहा । ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट्। ॐ धीमहि ईश्वरात्मने कवचाय हुम् ॥ ॐधियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्।ॐप्रचोदयात् सत्यात्मने अस्त्राय फट् ॥ इति षडङ्गन्यासः । अथ शिरोमन्त्रन्यासः । ॐआपोज्योतिरिति शिरसः प्रजापतिर्ऋषिः । आसुरी गायत्री छन्दः । परमात्मा देवता । न्यासे विनियोगः । ॐ आपः स्तनाभ्यां नमः । ॐ ज्योतिः नेत्राभ्यां नमः । ॐ रसो जिह्वायै नमः । ॐअमृतं ललाटाय नमः।ॐब्रह्म भूर्भुवः स्वरों शिरसे स्वाहा। इति प्राणायामन्यासः॥

एवं प्राणायाममन्त्रस्य न्यासं कृत्वा तन्मन्त्रेण प्राणायामं कुर्यात् ॥ ततो व्याहृतिन्यासः । आसां तिसृणां महाव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजा ऋषयः । गायत्र्युष्णिगनुष्टुपछन्दांसि । अग्निवायुसूर्या देवताः। न्यासे विनियोगः । ॐ भूः नमः पादयोः । ॐ भुवः नमो हृदि । ॐ स्वः नमो मस्तके । ॐ भूर्भुवः स्वः नमः सर्वाङ्गे । इति व्याहृतिन्यासः । अथ गायत्रीचरणन्यासः । अथ एषां गायत्रीत्रयाणां चरणानाम् अग्निवायुसूर्या ऋषयः । गायत्रीत्रिष्टुप्जगत्यश्छन्दांसि । ब्रह्मविष्णुमहेश्वरा देवताः । न्यासे विनियोगः । ॐ भूः तत्सवितुर्वरेण्यं भूः अग्नये पृथिव्यै ब्रह्मणे लोकत्रयात्मने नमः पादयोः । ॐ भुवः भर्गो देवस्य धीमहि भुवोऽन्तरिक्षाय वायवे विष्णवे वेदत्रयात्मने नमो हृदि । ॐ स्वः धियो यो नः प्रचोदयात् स्वः आदित्याय दिवे महेश्वराय प्राणत्रयात्मने नमः शिरसि ॥ इति चरणन्यासः ॥ अथ व्याहृतिन्यासः ॥ भूरित्यस्य विश्वामित्र ऋषिः । अग्निर्देवता । गायत्रीछंदः । श्वेतो वर्णः । षड्जस्वरः ।

पृथिवी बीजम्। अग्निः शक्तिः। वैदर्यं गोत्रम्। शब्दस्तत्त्वम्। विततमुद्रा। प्राणजनितपापोपशमनार्थे न्यासे विनियोगः ॥ ॐ भूः पद्भ्यां नमः ॥ भुव इत्यस्य जमदग्निर्ऋषिः। वायुर्देवता। उष्णिक् छन्दः। श्यामो वर्णः। ऋषभः स्वरः। आपो बीजम्। कीर्तिः शक्तिः। काश्यपसगोत्रम्। स्पर्शस्तत्त्वम्। सम्मोडलिकमुद्रा। पानजनितपापोपशमनार्थे न्यासे विनियोगः ॥ ॐ भुवः जानुभ्यां नमः ॥ स्वरित्यस्य भरद्वाज ऋषिः। सूर्यो देवता। अनुष्टुप् छन्दः॥ पीतो वर्णः। गान्धारः स्वरः। तेजो बीजम्। माया शक्तिः। गौतमसगोत्रम्। रूपं तत्त्वम् ॥ शकटमुद्रा। व्यानजनितपापोपशमनार्थे न्यासे विनियोगः॥ ॐ स्वः गुह्याय नमः ॥ महः इत्यस्य गौतम ऋषिः। बृहस्पतिर्देवता। बृहती छन्दः। पिशङ्गो वर्णः॥ मध्यमः स्वरः। वायुर्बीजम्। धृतिः शक्तिः। आङ्गिरसगोत्रम्। रसस्तत्त्वम्। विस्तृतमुद्रा। उदानजनितपापोपशमनार्थे न्यासे विनियोगः ॥ ॐ महः नाभ्यै नमः ॥ जन इत्यस्यात्रिर्ऋषिः। वरुणो देवता। पङ्क्तिश्छन्दः। नीलो वर्णः। पञ्चमः स्वरः। अकारो बीजम्। मेधा शक्तिः। भार्गवसगोत्रम्। गन्धस्तत्त्वम्। यमपाशमुद्रा। समानजनितपापोपशमनार्थे न्यासे विनियोगः॥ ॐ जनः हृदयाय नमः ॥ तप इत्यस्य वसिष्ठ ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः। लोहितो वर्णः। धैवतः स्वरः। दिग्बीजम्। स्मृतिः शक्तिः। कौशिकसगोत्रम्। मनस्तत्त्वम्। ग्रथितमुद्रा। मनोजनितपापोपशमनार्थे न्यासे विनियोगः॥ ॐ तपः कण्ठाय नमः। सत्यमित्यस्य कश्यप ऋषिः। विश्वेदेवा देवता। जगती छन्दः। कृष्णो वर्णः। निषादः स्वरः। आत्मा बीजम्। वाक् शक्तिः। वसिष्ठसगोत्रम्। बुद्धिस्तत्त्वम्। व्यापकमुद्रा। बुद्धिजनितपापोपशमनार्थे न्यासे विनियोगः। ॐ सत्यं मूर्ध्ने नमः। तत्सवितुरित्यस्याः त्रिपदाया गायत्र्या विश्वामित्र ऋषिः सविता देवता। गायत्री छन्दः। अग्निर्मुखम्। ब्रह्मा शिवो विष्णुर्हृदयम्। रुद्रो ललाटम्। पृथ्वी योनिः। त्रैलोक्यं चरणौ। वरेणीति बीजम्। यमिति शक्तिः। यादिति कीलकम्। सकलपापक्षयार्थे न्यासे विनियोगः॥ ॐ विश्वामित्रर्षये नमः शिरसि। ॐ गायत्रीछन्दसे नमो मुखे। ॐ सवितृदेवतायै नमो हृदि। ॥ अथाङ्गुलिपर्वसु वर्णन्यासः॥ ॐ तत् दक्षिणकरतर्जन्याः प्रथमपर्वणे नमः॥ ॐ सं दक्षिणकरतर्जन्या द्वितीयपर्वणे नमः॥ ॐ विं दक्षिणकरतर्जन्याः तृतीयपर्वणे नमः॥ ॐ तुः दक्षिणकरमध्यमायाः प्रथमपर्वणे नमः॥ ॐ वं दक्षिणकरमध्यमाया द्वितीयपर्वणे नमः॥ ॐ रें दक्षिणकरमध्यमायाः तृतीयपर्वणे नमः॥ ॐ णिं दक्षिणकरानामिकायाः प्रथमपर्वणे नमः॥ ॐ यं दक्षिणकरानामिकाया द्वितीयपर्वणे नमः॥ ॐ भः दक्षिणकरानामिकायाः तृतीयपर्वणे नमः ॥ ॐ गों दक्षिणकर-

कनिष्ठिकायाः प्रथमपर्वणे नमः॥ ॐदें दक्षिणकरकनिष्ठिकाया द्वितीयपर्वणे नमः॥ ॐवं दक्षिणकरकनिष्ठिकायाः तृतीयपर्वणे नमः॥ ॐस्यं वामकरतर्जन्याः प्रथमपर्वणे नमः॥ ॐधीं वामकरतर्जन्या द्वितीयपर्वणे नमः॥ ॐमं वामकरतर्जन्याः तृतीयपर्वणे नमः॥ ॐहिं वामकरमध्यमायाः प्रथमपर्वणे नमः ॥ ॐधिं वामकरमध्यमाया द्वितीयपर्वणे नमः॥ॐयोंवामकरमध्यमायास्तृतीयपर्वणे नमः॥ ॐयों वामकरानामिकायाः प्रथमपर्वणे नमः॥ॐनः वामकरानामिकाया द्वितीयपर्वणे नमः॥ ॐप्रं वामकरानामिकायाः तृतीयपर्वणे नमः॥ ॐचों वामकरकनिष्ठिकायाः प्रथमपर्वणे नमः॥ ॐदं वामकरकनिष्ठिकाया द्वितीयपर्वणे नमः ॥ ॐयात् वामकरकनिष्ठिकायाः तृतीयपर्वणे नमः ॥ ॥ अथाङ्गुलिषु न्यासः ॥ ॐ तत् दक्षिणकराङ्गुष्ठाय नमः॥ ॐ सवितुः दक्षिणकरतर्जन्यै नमः॥ ॐ वरेण्यं दक्षिणकरमध्यमायै नमः ॥ ॐ भर्गो दक्षिणकरानामिकायै नमः ॥ ॐ देवस्य दक्षिणकरकनिष्ठिकायै नमः॥ ॐधीमहि वामकराङ्गुष्ठाय नमः ॥ ॐधियो वामकरतर्जन्यै नमः ॥ ॐयो वामकरमध्यमायै नमः॥ ॐनः वामकरानामिकायै नमः॥ ॐ प्रचोदयात् वामकरकनिष्ठिकायै नमः॥ ॥अथ पदन्यासः॥ दशानां गायत्रीपदानामग्निवायुसूर्यवरुणप्रजापतिब्रह्महंसान्तर्यामिमहादेवशातातपा ऋषयः। गायत्र्युष्णिगनुष्टुब्जगतीत्रिष्टुब्बृहतीपङ्क्तयश्छन्दांसि। शेषाणां चतुर्णां पदानां गायत्री छन्दः। ब्रह्मविष्णुमहेश्वरवरुणयमेन्द्रार्यमशिवपर्जन्यविश्वेदेवा देवताः। पदन्यासे विनियोगः ॥ ॐतत् पादाभ्यां नमः॥ ॐसवितुर्जङ्घाभ्यां नमः ॥ ॐ वरेण्यं कटिभ्यां नमः॥ ॐ भर्गो नाभ्यै नमः॥ ॐ देवस्य हृदयाय नमः ॥ ॐ धीमहि कण्ठाय नमः ॥ ॐधियो मुखाय नमः॥ ॐ यो नेत्राभ्यां नमः ॥ ॐ नः ललाटाय नमः ॥ ॐ प्रचोदयात् मूर्ध्ने नमः ॥ ॥ अथाक्षरन्यासः ॥ ॥ ॐतकारस्य वसिष्ठ ऋषिः। अग्निर्देवता। गायत्री छन्दः। उदात्तः स्वरः। चम्पकवर्णः। पृथ्वी तत्त्वम्। अं बीजम्। सह शक्तिः। सुमुखमुद्रा। पातकशमनार्थे न्यासे विनियोगः॥ ॐ तत् पद्भ्यां नमः ॥ १ ॥ ॐ सकारस्य भरद्वाज ऋषिः। वायुर्देवता। उष्णिक्छन्दः। स्वरितः स्वरः। अतसीपुष्पवर्णः। आपस्तत्त्वम्। इं बीजम्। प्रभावती शक्तिः। सम्पुटमुद्रा। उपपातकशमनार्थे न्यासे विनियोगः॥ ॐ सं गुल्फाभ्यां नमः॥२॥ ॐ विकारस्य गौतम ऋषिः। सूर्यो देवता। अनुष्टुप् छन्दः। अनुदात्तः स्वरः। कपिलो वर्णः। तेजस्तत्त्वम्। उं बीजम्। नित्या शक्तिः। वितवमुद्रा। महापातकशमनार्थे न्यासे विनियोगः॥ ॐ विं जङ्घाभ्यां नमः ॥ ३ ॥ ॐ तुकारस्य भृगुर्ऋषिः। विष्णुर्देवता। बृहती छन्दः।

उदात्तः स्वरः । इन्द्रनीलाभो वर्णः । वायुस्तत्त्वम् । क्रं वीजम् । शोभना शक्तिः । विस्तृतमुद्रा । ग्रहरोगशमनार्थे न्यासे विनियोगः ॥ ॐ तुः जानुभ्यां नमः ॥ ४ ॥ ॐवकारस्य शाण्डिल्य ऋषिः । यमो देवता । पङ्क्तिश्छन्दः । उदात्तः स्वरः । अग्न्याभो वर्णः । आकाशस्तत्त्वम् । लं वीजम् । अजा शक्तिः । द्विमुखमुद्रा । भ्रूणहत्यापापक्षयार्थे न्यासे विनियोगः ॥ ॐ वं ऊरुभ्यां नमः ॥ ५ ॥ ॐरेकारस्य लोहित ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः । स्वरितः स्वरः । स्फटिकाभो वर्णः । गन्धस्तत्त्वम् । एं वीजम् । भद्रा शक्तिः । त्रिमुखमुद्रा । अगम्यागमनपापक्षयार्थे न्यासे विनियोगः ॥ ॐरें गुह्याय नमः ॥ ६ ॥ ॐणिकारस्य गर्ग ऋषिः । विश्वेदेवा देवता । जगती छन्दः । उदात्तः स्वरः । विद्युदाभो वर्णः । रसस्तत्त्वम् । ऐं वीजम् । विमला शक्तिः । चतुर्मुखमुद्रा । अभक्ष्यभक्षणजनितपापक्षयार्थे न्यासे विनियोगः ॥ ॐ णिं वृषणाभ्यां नमः ॥ ७ ॥ ॐ यकारस्य शंभुर्ऋषिः । पर्जन्यो देवता । प्रकृतिश्छन्दः । अनुदात्तः स्वरः । तारकाभो वर्णः । रूपं तत्त्वम् । ओं वीजम् । प्रभावती शक्तिः । पञ्चमुखमुद्रा । पुम्वधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ यं कटिभ्यां नमः ॥ ८ ॥ ॐ भकारस्य सनत्कुमार ऋषिः । इन्द्रो देवता । सत्यं छन्दः । उदात्तः स्वरः । मेघाभो वर्णः । स्पर्शस्तत्त्वम् । औं वीजम् । जया शक्तिः । षण्मुखमुद्रा । गुरुवधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ भः नाभ्यै नमः ॥ ९ ॥ ॐ गोकारस्य सत्यवानृषिः । गन्धर्वो देवता । विराट् छन्दः । स्वरितः स्वरः । रक्तो वर्णः । शब्दस्तत्त्वम् । अं वीजम् । प्रभावती शक्तिः । अधोमुखमुद्रा । गोवधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ गों जठराय नमः ॥ १० ॥ ॐ देकारस्य गन्धर्व ऋषिः । सत्यो देवता । विराट् छन्दः । अनुदात्तः स्वरः । मरकताभो वर्णः । वाक् तत्त्वम् । अःकारो वीजम् । प्रह्लादिनी शक्तिः । व्यापकाञ्जलिकमुद्रा । स्त्रीवधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ दें स्तनाभ्यां नमः ॥ ११ ॥ ॐ वकारस्य कश्यप ऋषिः । मित्रावरुणौ देवते । अक्षरपङ्क्तिश्छन्दः । उदात्तः स्वरः । शुक्लो वर्णः । हस्तौ तत्त्वम् । कं वीजम् । कान्ता शक्तिः । शकटमुद्रा । वाग्दौष्ट्यादिपापक्षयार्थे न्यासे वि० ॥ ॐवं हृदयाय नमः ॥ १२ ॥ ॐ स्यकारस्य कश्यप ऋषिः । त्वष्टा देवता । कात्यायनं छंदः । स्वरितः स्वरः । काञ्चनाभो वर्णः । उपस्थं तत्त्वम् । चं वीजम् । जिह्वा शक्तिः । यमपाशमुद्रा । ग्रामकौटिल्यपापक्षयार्थे न्यासे विनियोगः ॥ ॐ स्यं कण्ठाय नमः ॥ १३ ॥ ॐ धीकारस्य अत्रिर्ऋषिः । वसवो देवता । विराट्पङ्क्तिश्छन्दः । प्रचयः स्वरः । कुन्दाभो वर्णः । पायुस्तत्त्वं । टं वीजम् । सरस्वती शक्तिः । मथितमुद्रा । पितृवधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ धीं मुखाय नमः ॥ १४ ॥

ॐ मकारस्य विष्णुर्ऋषिः । मरुतो देवता । पङ्क्तिश्छन्दः । प्रचयः स्वरः । पद्माभो वर्णः । पादौ तत्त्वम् । तं बीजम् । कात्यायनी शक्तिः । उल्मुखोल्मुखमुद्रा । सर्वजन्मार्जितपापक्षयार्थे न्यासे विनियोगः ॥ ॐ मं तालवे नमः ॥ १५ ॥ ॐ हिकारस्य पराशर ऋषिः । त्वष्टा देवता । अक्षरपङ्क्तिश्छन्दः । प्रचयः स्वरः । शङ्खाभो वर्णः । श्रोत्रं तत्त्वम् । पं बीजम् । विश्वरूपा शक्तिः । प्रलम्बमुद्रा । प्रतिग्रहार्जितपापक्षयार्थे न्यासे विनियोगः ॥ ॐहिं नासापुटाय नमः ॥ १६ ॥ ॐ धिकारस्य पुण्डरीक ऋषिः । आङ्गिरसो देवता । कात्यायनं छन्दः । उदात्तः स्वरः । पाण्डुरो वर्णः । त्वक् तत्त्वम् । यं बीजम् । विभूतिः शक्तिः । मुष्टिकमुद्रा । मातृवधपापक्षयार्थे न्यासे विनियोगः ॥ ॐ धिं नेत्राभ्यां नमः ॥ १७ ॥ ॐ योकारस्य ऋभुक ऋषिः । विश्वेदेवा देवता । जगती छन्दः । अनुदात्तः स्वरः । रुक्माभो वर्णः । चक्षुस्तत्त्वम् । रं बीजम् । ज्ञानं शक्तिः । मत्स्यमुद्रा । जन्मार्जितपापक्षयार्थे न्यासे विनियोगः ॥ ॐ यों भ्रुकुटिभ्यां नमः ॥१८॥ ॐ योकारस्य दक्ष ऋषिः । विश्वेदेवा देवता । जगती छन्दः । उदात्तः स्वरः । विद्युदाभो वर्णः । घ्राणं तत्त्वम् । लं बीजम् । गान्धारशक्तिः । कूर्ममुद्रा । सप्तजन्मार्जितपापक्षयार्थे न्यासे विनियोगः ॥ ॐयों ललाटाय नमः ॥१९॥ ॐ नःकारस्य अङ्गिरा ऋषिः । भर्गो देवता । बृहती छन्दः । स्वरितः स्वरः । सूर्याभो वर्णः । जिह्वा तत्त्वम् । वं बीजम् । रतिः शक्तिः । वराहमुद्रा । विरिञ्चिपदप्राप्त्यर्थे न्यासे विनियोगः ॥ ॐनः पूर्ववक्त्राय नमः ॥ २० ॥ ॐ प्रकारस्य कार्तिकेय ऋषिः । शर्वो देवता । भूरछन्दः । प्रचयः स्वरः । इन्द्रनीलाभो वर्णः । मनस्तत्त्वम् । शं बीजम् । प्रीतिः शक्तिः । सिंहाक्रान्तमुद्रा । विष्णुपदप्राप्त्यर्थे न्यासे विनियोगः । ॐ प्रं दक्षिणवक्त्राय नमः ॥ २१ ॥ ॐ चोकारस्य रुद्र ऋषिः । ब्रह्मा देवता । स्वराट् छन्दः । अनुदात्तः स्वरः । कुङ्कुमाभो वर्णः । अहङ्कारस्तत्त्वम् । वं बीजम् । पद्मालया शक्तिः । महाक्रान्तमुद्रा । रुद्रपदप्राप्त्यर्थे न्यासे विनियोगः ॥ ॐ चों पश्चिमवक्त्राय नमः ॥ २२ ॥ ॐ दकारस्य अगस्त्य ऋषिः । ब्रह्मा देवता । सत्यं छन्दः । उदात्तः स्वरः । कुङ्कुमाभो वर्णः । चित्तं तत्त्वम् । सं बीजम् । विलासिनी शक्तिः । मुद्गरमुद्रा । सगुणब्रह्मपदप्राप्त्यर्थे न्यासे विनियोगः ॥ ॐ दं उत्तरवक्त्राय नमः ॥२३॥ ॐ याकारस्य विश्वामित्र ऋषिः । सविता देवता । गायत्री छन्दः । स्वरितः स्वरः । रक्तो वर्णः । व्यक्तं तत्त्वम् । हं बीजम् । भद्रका शक्तिः । पल्लवमुद्रा । परमपदप्राप्त्यर्थे न्यासे विनियोगः ॥ ॐ यां मूर्ध्ने नमः ॥ २४ ॥ ततः तकारव्यञ्जनं सर्वाङ्गे न्यसेत् ॥ इति गायत्र्यक्षरन्यासः ॥ अथ शिरोन्यासः ॥ अस्या गायत्र्याः शिरसः ब्रह्मा ऋषिः । परमात्मा दे- दैवी गायत्री

छन्दः। प्रचयः स्वरः। दीप्तो वर्णः। तेजस्तत्त्वम्। अमृतं बीजम्। जया शक्तिः। व्यापकमुद्रा। मानसादिपापक्षयार्थे न्यासे विनियोगः॥ॐआपः स्तनाभ्यां नमः॥ॐज्योतिः कण्ठाय नमः॥ ॐरसो जिह्वायै नमः॥ ॐअमृतं ललाटाय नमः॥ ॐब्रह्मभूर्भुवः स्वरोम् शिरसि॥ अथ तुरीयपादसहितगायत्रीन्यासः॥ अस्या त्रिपदगायत्र्या विश्वामित्र ऋषिः। चतुर्थपादस्य विमल ऋषिः। गायत्री छन्दः। ब्रह्मविष्णुरुद्रपरमात्मानः देवता। ॐतत्सवितुर्वरेण्यं बीजम्। ॐ भर्गो देवस्य धीमहि शक्तिः। ॐ धियो यो नः प्रचोदयात् कीलकम्। तुरीयपादयुक्ता गायत्री द्वात्रिंशदक्षरा चतुष्पदाष्टकुक्षिः सप्तशीर्षा तदभीष्टफलप्राप्त्यर्थे न्यासे विनियोगः॥ परो हृदयाय नमः॥ रजसे शिरसे स्वाहा॥ असावदोम् शिखायै वषट्। परो रजसे कवचाय हुम्॥ असावदोम् नेत्रत्रयाय वौषट्॥ रजसेऽसावदोम् अस्त्राय फट्॥ ततः प्रणवादिसप्तव्याहृतिपूर्विकया गायत्र्या सशिरस्कया तुरीयपादसहितया पादादिमस्तकान्तं दशधा व्यापकं कुर्यात्॥ केचिन तुरीयपादपदैः प्रणवाद्येकैकव्याहृतिसहितैः सप्त व्यापकानि कुर्वन्ति॥ अथ पीठन्यासाः। ॐ मं मण्डूकाय नमो मूलाधारे। ॐ कं कालाग्निरुद्राय नमो लिङ्गे। ॐ मं मूलप्रकृत्यै नमो नाभौ। ॐ आं आधारशक्तिभ्यो नमो हृदि। पुनस्तत्रैव। ॐ कूं कूर्माय नमः। ॐ अं अनन्ताय नमः। ॐवं वराहाय नमः। ॐ धं धरण्यै नमः। ॐ सुं सुधासिन्धवे नमः। ॐ रं रत्नद्वीपाय नमः। ॐ कं कल्पवृक्षाय नमः। ॐ स्वं स्वर्णवेदिकायै नमः। ॐ रं रत्नसिंहासनाय नमः। ॐ धं धर्माय नमो दक्षांसे। ॐ ज्ञां ज्ञानाय नमो वामांसे। ॐ वैं वैराग्याय नमो वामोरौ। ॐ ऐं ऐश्वर्याय नमो दक्षोरौ। ॐ अं अधर्माय नमो मुखे। ॐ अं अज्ञानाय नमो वामपार्श्वे। ॐ अं अवैराग्याय नमो नाभौ। ॐ अं अनैश्वर्याय नमो दक्षपार्श्वे। पुनर्हृदि। ॐ अं अम्बुजाय नमः। ॐ आं आनन्दकन्दाय नमः। ॐ सं संविन्नालाय नमः। ॐ सं सर्वतत्त्वात्मकपद्माय नमः। ॐप्रं प्रकृतिमयपत्रेभ्यो नमः। ॐविं विकारमयकेसरेभ्यो नमः। ॐपं पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः। ॐ अं द्वादशकलात्मने सूर्यमण्डलाय नमः। ॐ सं षोडशकलात्मने सोममण्डलाय नमः। ॐ मं दशकलात्मने वह्निमण्डलाय नमः। ॐ सं सत्त्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ आं

१ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ॐ आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम्। ॐ परोऽरजसे सावदोम्॥

२ ॐ भूः परः ॐ भुवः रजसे ॐ स्वः असावदोम्॥

३ वामरे—श्रोद्धारबिन्दुमध्यस्थं नामधेयाद्यमक्षरम्। देवतानां सर्वाजं स्यात् प्रणवाद्यमिदिदिदम्।

आत्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ पं परमात्मने नमः । ॐ ह्रीं ज्ञानात्मने नमः । ॐ मां मायातत्त्वाय नमः । ॐ कं कलातत्त्वाय नमः । ॐविं विद्यातत्त्वाय नमः।ॐपं परतत्त्वाय नमः॥ ततो हृत्पद्माष्टपत्रेषु । पूर्वपत्रे—ॐरां दीप्तायै नमः। आग्नेयदले—ॐरीं सूक्ष्मायै नमः। दक्षिणदले—ॐरुं जयायै नमः । नैर्ऋत्यदले-ॐरें भद्रायै नमः।पश्चिमदले-ॐरैं विभूत्यै नमः।वायव्यदले-ॐरों विमलायै नमः। उत्तरदले—ॐरौं अमोघायै नमः। ईशानदले—ॐरं विद्युतायै नमः । मध्ये—ॐरः सर्वतोमुख्यै नमः। तदुपरि श्रीगायत्रीपूजायन्त्रं विभाव्य पूजयेत् । ॐब्रह्मविष्णुरुद्रविश्वात्मकाय सौरपीठाय नमः। इति पीठन्यासः॥ ततः स्वहृदये बिन्दुत्रिकोणषट्कोणवृत्ताष्टपत्रचतुर्द्वारोपेतं[1] श्रीगायत्रीयन्त्रं विभाव्य हस्ते गन्धाक्षतपुष्पाण्यादाय गायत्रीं ध्यायेत् ॥ अथ ध्यानम् ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाशुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥१॥हंसारूढां सिताब्जे त्वरुणमणिलसद्भूषणां साष्टनेत्रां वेदाख्यामक्षमालां स्रुवमथ कमलं दण्डमप्यादधानाम् । ध्याये दोर्भिश्चतुर्भिस्त्रिभुवनजननीं पूर्वसन्ध्यादिवन्द्यां गायत्रीमृक्सवित्रीमभिनववयसं मण्डले चन्द्ररश्मेः ॥ २ ॥ विश्वमातः सुराभ्यर्च्ये पुण्ये गायत्रि वैधसि ॥ आवाहयाम्युपास्त्यर्थमेह्येनोघ्नि पुनीहि माम् ॥ ३ ॥ वृषेन्द्रवाहना देवी ज्वलत्त्रिशिखधारिणी । श्वेताम्बरधरा श्वेतनागाभरणभूषिता ॥ ४ ॥ श्वेतस्रगक्षमालालङ्कृता रक्ता च शङ्करा । जटाधाराधरा धात्री धरेन्द्राङ्गभवाऽभवा ॥ ५ ॥ मातर्भवानि विश्वेशि आहूतैहि पुनीहि माम् । सन्ध्या सायन्तनी कृष्णा विष्णुदेवा सरस्वती ॥ ६ ॥ खगगा कृष्णवक्रा तु शङ्खचक्रधरा परा ॥ कृष्णस्रग्भूषणैर्युक्ता सर्वज्ञानमयी वरा॥ ७॥ वीणाक्षमालिका चारुहस्ता स्मितवरानना॥ मातर्वाग्देवते स्तुत्ये आहूतैहि पुनीहि माम् ॥ ८ ॥ इति ध्यात्वा स्वहृदयस्थितायै श्रीयन्त्रस्वरूपिण्यै भगवत्यै त्रितत्त्वस्वरूपिण्यै श्रीगायत्रीदेव्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । इति वदन् स्वहृदि पूजनं कुर्यात् ॥ ततो हस्ते जलं गृहीत्वा अनेन एभिर्ब्राह्मणैः सह मया यथाशक्ति भूशुद्धिभूतशुद्ध्यजपाजपसङ्कल्पपूर्वकान्तर्मातृकाबहिर्मातृकान्यासेन सह भगवत्याः श्रीगायत्रीदेव्या महान्यासेन कर्मणा भगवती श्रीगायत्रीदेवी प्रीयताम् । जापकाः जपत । पाठकाः पठत । होतारः होमं कुरुत ।

---

१ यद्यपि गायत्रीयन्त्रे बिन्दोरनुपादानं परन्तु ललितात्रिशत्यां बिन्दुत्रिकोणयोरेव शिवशक्त्यात्मकत्वद्योतनात् यन्त्रे त्रिकोणेन सह बिन्दोरुपादानमावश्यकं प्रतिभाति । अर्थात् यत्र यन्त्रे त्रिकोणं तत्र बिन्दुरपि ॥

ततः श्रीगायत्रीदेव्या बहिःपूजामारभेत ॥

तत्रादौ भगवत्याः श्रीगायत्रीदेव्याः पूजनार्थं कलशादिमधुपर्कान्तानां सप्तपात्राणां स्थापनार्थम् एकस्मिन्प्रक्षालिते शुद्धे समे काष्ठपीठे स्ववामहस्ततः आरभ्य दक्षिणसंस्थं सप्त यन्त्राणि कुर्यात् । तद्यथा । प्रथमं कलशस्थापनार्थं बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं यन्त्रं कुर्यात् । द्वितीयं सामान्यार्घपात्रस्थापनार्थं बिन्दुत्रिकोणवृत्तचतुरस्रात्मकं यन्त्रं कुर्यात् । तृतीयं विशेषार्घपात्रस्थापनार्थं बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं यन्त्रं कुर्यात् । पाद्यादिमधुपर्कान्तानां चतुर्णां पात्राणां स्थापनार्थं बिन्दुत्रिकोणवृत्तचतुरस्रात्मकानि चत्वारि यन्त्राणि कुर्यात् ॥ एवं सप्तयन्त्रनिर्मितां काष्ठपट्टिकां स्वदेवतयोर्मध्ये स्थापयित्वा स्ववामहस्ततः प्रथमे बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मके यंत्रे कलशस्थापनं कुर्यात् ॥ यन्त्रं शङ्खमुद्रयावष्टभ्य अक्षतैः पूजयेत् । भगवत्याः श्रीगायत्रीदेव्याः मूलमन्त्रमुच्चार्य यन्त्रस्य मध्यबिन्दुं पूजयेत् । ततः स्वपुरः पारिभाषिक( कल्पित )पूर्वादिक्रमेण स्वाग्रतः प्रादक्षिण्येन त्रिकोणस्य प्रतिकोणं पूजयेत् । यथा—पूर्वकोणे ( पश्चिमे ) ॐ भगवत्यै श्रीगायत्रीदेव्यै नमः । नैर्ऋत्यकोणे ( ईशान्यां ) ॐ भगवत्यै श्रीसावित्रीदेव्यै नमः ।

---

[1] "ध्यात्वा देवं प्रदर्श्याथ मुद्रा अपि विधानतः । पूजां च मानसीं कुर्यात् ततोऽर्घ्यस्थापनं चरेत् ॥ कलशादिस्थापनविधौ वामतो वह्निमण्डलम्" इति शारदातिलकोक्तवचनेन स्ववामहस्ततः इति स्पष्टतयैव बुध्यते ॥

[2] (बिन्दु)त्रिकोणषट्कोणवृत्तचतुरस्राणि कारयेत् । शङ्खमुद्रयावष्टभ्य पद्मानि प्रपूजयेत् । तथैवोक्तम् । अग्रे त्रिकोणमालिख्य षट्कोणञ्च ततो बहिः । वर्तुलं चतुरस्रञ्च मध्ये मायां विलिख्य च । शङ्खमुद्रां प्रदर्श्याथ कोणादिष्वापूजनम् ॥

[3] शङ्खमुद्रालक्षणम् । वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः । दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रा शङ्खस्य चोदिता ॥

[4] तन्त्रान्तरेऽपि । यत्रैव भानुस्तु वियत्युदेति प्राचीति तां वेदविदो वदन्ति ॥ तथाऽपरा पूजकस्याग्रतोऽथ सदागमज्ञाः प्रवदन्ति तां ( प्राचीं ) तु ॥ तथैव—देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् । तदादिपरिवाराणामङ्गाद्यावरणस्थितिः ॥ तथैव—होतुः पूर्वे पूर्वभागं प्रदिष्टं सव्यं भागं दक्षिणं स्वागमज्ञैः । दक्षं विद्यादुत्तरं भागमन्यं प्रज्ञावद्भिः पश्चिमं भागमुक्तम् ॥ अतो यन्त्रपूजनादौ स्वपुरः स्वप्राचीं त्रिकोणाग्रं निधाय देवतार्चकयोर्मध्ये प्राचीं प्रकल्प्य प्रादक्षिण्येन आरभतः आसमाप्ति यावत् [ आपृष्ठादि ] पर्यं पूजनं कर्तव्यम् ॥ तथैव देवतार्चकयोर्मध्ये प्राची ज्ञेया तत्र प्रमाणम् । देवतसाधकयोरन्तः प्राची सा दिगिहोच्यते ॥ अन्यत्रापि । देवताग्रे स्वस्य चाप्यग्रे प्राची प्रोक्ता तु देशिकैः । प्राच्येव प्राची कौर्यं मुखं तु देवतार्चनम् । अतः स्वसमीपे पूर्वादिदिग्विदिशः कल्पनीयास्तथैव पूज्याश्च । परन्तु पूर्वादिदिक्पालादीनां विदिग्वर्तीनाञ्च पूजने प्रसिद्धपूर्वादिदिशो विदिशश्च ग्राह्याः । तत्र प्रमाणं शारदातिलके-दिक्षु पूर्वादितः क्रमात् इति चतुर्थपटलस्य व्याख्यावसरे टीकायाम् अत्र प्रसिद्धा एव पूर्वादयो ग्राह्याः इत्युक्तम् । प्रयजेत् स्वदिक्ष्वनल्पधीः स्वजाल्पधीश्वरादीनिन्द्रपरिवारसंयुतान् ॥ तथैव नारायणीयेऽग्निकोणादिष्वाग्नेयादिषु समर्पयेत् ॥ तथैव यत्र यत्र विदिग्वाचकं पूजाक्रमे आग्नेयादिषु इति पदं तत्र तत्रैव प्रसिद्धाग्नेयकोणाः ज्ञेयाः ॥ यत्र दिक्षु इति पदं तत्र प्राग्दक्षिणपश्चिमोत्तरा दिशो ज्ञेयाः । आचार्यैरप्येवं सम्मन्त्र्य दिक्पूजनेन स्वादयः ।

वायव्यां (आग्नेय्यां) ॐभगवत्यै श्रीसरस्वतीदेव्यै नमः॥षट्कोणस्य परितः स्वाग्रादिक्रमेण षडङ्गानि पूजयेत् । आग्नेय्यां ( वायव्यां ) भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ईशान्यां (नैर्ऋत्यां) ॐ भूर्भुवः स्वः वरेणियं विष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः भर्गो देवस्य रुद्रात्मने शिखायै वषट् । वायव्यां ( आग्नेय्यां ) ॐ भूर्भुवः स्वः धीमहि ईश्वरात्मने कवचाय हुम् । पुरः ॐ भूर्भुवः स्वः धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट् । स्वपुरः कल्पितपूर्वदक्षिणपश्चिमोत्तरासु दिक्षु (पश्चिमोत्तरपूर्वदक्षिणदिक्षु) क्रमेण ॐ भूर्भुवः स्वः प्रचोदयात् सर्वात्मने अस्त्राय फट् ॥ वृत्तं मूलमन्त्रेण भगवत्यै श्रीगायत्रीदेव्यै नमः इति पूजयेत् । ततो यन्त्रस्य चतुरस्रे स्वाग्रतः कल्पितपूर्वादिदिक्षु पूर्वे (पश्चिमे) ॐ आदित्याय नमः । दक्षिणे (उत्तरे) ॐ भानवे नमः । पश्चिमे ( पूर्वे ) ॐ भास्कराय नमः । उत्तरे ( दक्षिणे ) ॐ रवये नमः ॥ तथैव चतुरस्रे स्वपुरतः कल्पिताग्नेयादिविदिक्षु । आग्नेय्यां (वायव्यां) ॐउषायै नमः । नैर्ऋत्यां ( ईशान्यां ) ॐप्रज्ञायै नमः । वायव्यां (आग्नेय्यां) ॐ प्रभायै नमः । ईशान्यां (नैर्ऋत्यां) ॐ सन्ध्यायै नमः । एवं कलशयन्त्रं सम्पूज्य तत्र ॐ अस्त्राय फडिति मन्त्रेण क्षालितां त्रिपदिकाम् ( आधारं ) ॐ मं वह्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः कलशपात्राधाराय नमः इति संस्थाप्य तदुपरि वह्नेः दश कलाः पश्चिमादिप्रादक्षिण्येन पूजयेत् ॥ ॐ यं धूम्रार्चिषे नमः ॥ १ ॥ ॐ रं उष्मायै नमः ॥ २॥ ॐ लं ज्वलिन्यै नमः ॥ ३ ॥ ॐ वं ज्वालिन्यै नमः ॥ ४॥ ॐ शं विस्फुलिङ्गिन्यै नमः ॥ ५ ॥ ॐ षं सुश्रियै नमः ॥ ६ ॥ ॐ सं सुरूपायै नमः ॥ ७ ॥ ॐ हं कपिलायै नमः ॥ ८ ॥ ॐ ळं हव्यवाहायै नमः ॥ ९ ॥ ॐ क्षं कव्यवाहायै नमः ॥ १० ॥ इति वह्नेः कलाः सम्पूज्य तदुपरि अस्त्राय फट् इति अस्त्रमन्त्रक्षालितं कलशपात्रं ॐ अं द्वादशकलात्मने सूर्यमण्डलाय भगवत्याः श्रीगायत्रीदेव्याः कलशपात्राय नमः इत्याधारोपरि संस्थाप्य पश्चिमादिप्रादक्षिण्येन

---

१ अङ्गपूजायाः स्थानम् । वह्न्यादीशान्तमङ्गानि हृदादिकवचान्तकम् । अर्चयेत्पुरतो नेत्रमस्त्रं दिक्षु बहिः पुनः ॥ तथैव । हुतवहेशाननिर्ऋतिसमीरणदिक्षु हृदादिवर्मान्तम् इति । अन्यत्रापि । इष्ट्वा हृदयमाग्नेय्याम् ईशान्यां तु शिरो यजेत् । नैर्ऋत्यां तु शिखा पूज्या वायव्यां कवचं यजेत् ॥ अभ्यर्च्य पुरतो नेत्रं दिक्षु स्वस्त्रमथार्चयेत् ॥ अन्यत्रापि । अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ अत्राग्नेयादयः पुरःकल्पितपूर्वादिदिशतो प्राह्या न तु प्रसिद्धाः ॥ कल्पान्तरे तु-ब्रह्मा विष्णु. क्रमाद्रुद्रः ईश्वरश्च सदाशिवः । सर्वात्मतेजसोऽन्तस्य व्याहृत्यादिपदङ्गके ॐ भूः ब्रह्मतेजसे हृदयाय नमः इत्यादि- ।

२ आधारं पावकमण्डलत्वेन पात्रं सूर्यमण्डलत्वेन तोयं चन्द्रमण्डलत्वेन ज्ञेयम् । इदं शारदातिलके चतुर्थपटले उक्तम्-आधारं पावकं शंखं ( पात्रं ) सूर्यं तोयं सुधामयम् ॥

३ वह्नेर्दश कला यादिक्षान्ताः पश्चिमादिप्रादक्षिण्येन पूज्या इति नित्योत्सवे ।

तत्र सूर्यस्य द्वादशकलाः पूजयेत्॥ ॐ कं भं तपिन्यै नमः । ॐ खं वं तापिन्यै नमः। ॐ गं फं धूम्रायै नमः। ॐ घं पं मरिच्यै नमः। ॐ ङं नं ज्वालिन्यै नमः। ॐ चं धं रुच्यै नमः। ॐ छं दं सुषुम्णायै नमः। ॐ जं थं भोगदायै नमः। ॐ झं तं विश्वायै नमः। ञं णं बोधिन्यै नमः। ॐ टं ढं धारिण्यै नमः। ॐ ठं डं क्षमायै नमः। इति सूर्यस्य द्वादश कलाः सम्पूज्य तस्मिन्पात्रे पात्रान्तरेण विलोममातृकया गायत्री-मूलमंत्रेण च जलं पूरयेत् ॥ ॐ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं त् या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ मू ष्य णि रे व तुः वि स त् त स्वः वः भु भूः ॐ। इति शुद्धोदकेन कलशपात्रं सम्पूर्य तस्मिञ्जले सोमस्य ( चन्द्रस्य ) षोडश कलाः पश्चिमादिप्रादक्षिण्येन गन्धाक्षतपुष्पैः पूजयेत्॥ ॐ अं[२] अमृतायै नमः । ॐ आ मानदायै नमः। ॐ इं पूषायै नमः । ॐ ईं तुष्ट्यै नमः। ॐ उं पुष्ट्यै नमः। ॐ ऊं रत्यै नमः। ॐ ऋं धृत्यै नमः । ॐ ॠं शशिन्यै नमः । ॐ ऌं चन्द्रिकायै नमः । ॐ ॡं कान्त्यै नमः । ॐ एं ज्योत्स्नायै नमः। ॐ ऐं श्रियै नमः । ॐ ओं प्रीत्यै नमः। ॐ औं अङ्गदायै नमः। ॐ अं पूर्णायै नमः । ॐ अः पूर्णामृतायै नमः। इति चन्द्रकलाः संपूज्य। ॐ उं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः कलशपात्रामृताय नमः इति जलं सम्पूज्य तस्मिञ्जले भगवत्याः श्रीगायत्रीदेव्या बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं गायत्रीयन्त्रं विभाव्य तस्मिन् श्रीगायत्रीदेव्या यन्त्रदेवताः स्वाग्रतः कल्पितपूर्वादिक्रमेण पूजयेत्[१] मध्ये बिन्दुं मूलमंत्रेण पूजयेत्। त्रिकोणस्य पूर्वकोणे ( पश्चिमे ) ॐ श्रीगायत्रीदेव्यै नमः । नैर्ऋत्यां ( ईशान्यां ) ॐ श्रीसावित्रीदेव्यै नमः। वायव्यां (आग्नेय्यां) ॐ श्रीसरस्वतीदेव्यै नमः॥ ततः षट्कोणेषु स्वाग्रतः कल्पिताग्नेय्यादिक्रमेण षडङ्गानि पूजयेत्। आग्नेय्या ( वायव्या ) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः। ईशान्यां ( नैर्ऋत्यां ) ॐ वरेणियं विष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्यां ( ईशान्यां ) ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट्। वायव्यां ( आग्नेय्यां ) ॐ धीमहि ईश्वरात्मने कवचाय हुम् । पुरः ॐ धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्। ततः स्वाग्रतः कल्पितपूर्वादिदिक्षु । पूर्वे (पश्चिमे) ॐ प्रचोदयात् अस्त्राय फट्। दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट् पश्चिमे (पूर्वे) ॐ प्रचोदयात् अस्त्राय फट्। उत्तरे (दक्षिणे) ॐ प्रचोदयात् अस्त्राय

१ पूर्वे कल्पितपूर्वादय इति पश्चिमादयो दिग्विदिशो भाव्या इति निर्लोतग्रंथे ।
२ अकारादिविसर्गान्तं षोडशेन्दुकला सम्पूजयेत् इति निलोत्पन ।

फट् ।' एवं षडङ्गानि संपूज्य षट्कोणस्य परितः स्वाग्रतः कल्पितपूर्वादिक्क्रमेण प्रथमं दिक्षु आदित्यादीनावाह्य आग्नेयादिक्क्रमेण विदिक्षूषादीन् आवाहयेत् ॥ पूर्वे ( पश्चिमे ) ॐ आदित्याय नमः । दक्षिणे ( उत्तरे ) ॐ भानवे नमः । पश्चिमे ( पूर्वे ) ॐ भास्कराय नमः । उत्तरे (दक्षिणे) ॐ रवये नमः । आग्नेये ( वायव्यां ) ॐ उषायै नमः । नैर्ऋत्ये ( ईशान्यां ) ॐ प्रज्ञायै नमः । वायव्ये (आग्नेय्यां) ॐप्रभायै नमः । ईशाने (नैर्ऋत्यां) ॐसन्ध्यायै नमः । एवं भगवत्याः श्रीगायत्रीदेव्या यंत्रदेवताः संपूज्य तस्मिन्कलशजले भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रेण आवाहनादिमुद्राः प्रदर्शयन् भगवतीं श्रीगायत्रीदेवीमावाहयेत् ॥ मूलमंत्रेण भो गायत्रि त्वम् अस्मिन्कलशजले [1]आवाहिता भव। भो गायत्रि त्वम् अस्मिन्कलशजले [2]संस्थापिता भव। भो गायत्रि त्वम् अस्मिन्कलशजले [3]संनिहिता भव। भो गायत्रि त्वम् अस्मिन्कलशजले [4]सन्निरुद्धा भव। भो गायत्रि त्वम् अस्मिन्कलशजले [5]सम्मुखीकृता भव । भो गायत्रि त्वम् अस्मिन्कलशजले षडङ्गेन [6]सकलीकृता भव। भो गायत्रि त्वम् अस्मिन्कलशजले [7]अवगुण्ठिता भव। भो गायत्रि त्वम् अस्मिन्कलशजले [8]अमृतीकृता भव । भो गायत्रि त्वम् अस्मिन्कलशजले [9]परमीकृता भव। इति कलशे नव आवाहनादिमुद्राः प्रदर्श्य। ततस्तस्मिञ्जले "ॐगङ्गे च यमुने चैव०" इति [10]अंकुशमुद्रया सूर्यमण्डलात्तीर्थान्यावाह्य। तज्जलं [11]गालिनीमुद्रया निरीक्ष्य। ॐहुं फट् इति अवगुण्ठ्य। [12]धेनुमुद्रयाऽमृतीकृत्य। [13]शङ्खमुद्रयाऽवष्टभ्य ।

१ शारदातिलके—सम्यक्सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः । आवाहनी समाख्याता मुद्रा देशिकसत्तमैः । आवाहनीमुद्राया द्वितीयं लक्षणम्—हस्ताभ्यामञ्जलिंकृत्वाऽनामिकामूलपर्वणोः । अङ्गुष्ठौ निःक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥ एव एष साम्प्रदायिकः पक्ष. । २ अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ।

३ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका । सन्निधाने समुद्दिष्टा मुद्रेयन्तन्त्रवेदिभिः ।

४ अङ्गुष्ठगर्भिणी सैव सन्निरोधा समीरिता ।(सन्निरुद्धमुद्रा) ५ उत्तानौ द्वौ करौ मुष्टी सम्मुखीकरणी तथा॥

६ गायत्रीमूलमन्त्रस्य विभागान्कृत्वा स्वपुर. कल्पिताग्नेयादिक्रमेण हृदयादिशिखान्तं न्यस्य पुरः नेत्रं चतुर्दिक्ष्वस्त्रमितिक्रमेण हृदय–शिरः–शिखा–कवच–नेत्रा–स्त्रादिभिः न्यासैः सकलीकरणम् ॥ देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः ॥

७ सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितो भ्रामिता सती । ८ अमृतीकरणं कुर्यात्तथा देशिकसत्तमः । अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ ९ करसम्पुटेन नमस्कारः परमीकरणम् ॥

१० दक्षमुष्टिगृहीतस्य वाममुष्टेस्तु मध्यमाम् । प्रसार्य तर्जनीं कुर्वेत्सेयमङ्कुशमुद्रिका ॥ यद्वा । ऋजुमध्यामध्यपर्वाक्रान्ता तर्जन्यधोमुखी । विज्ञेयाङ्कुशमुद्रेयं कुञ्चितामध्यपर्वतः ॥

११ कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरौ । तर्जनीमध्यमानामाः संहता भुग्नसञ्जिताः । एषा तु गालिनीप्रोक्ता शङ्खस्योपरि चालिता ॥

१२ वामाङ्गुलीर्दक्षिणानामङ्गुलीनाञ्च सन्धिषु । प्रवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वौ प्रवेशयेत् । कनिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात् सा धेनुमुद्रिका । १३ शङ्खमुद्राया लक्षणं १७५ पृष्ठे । (टिप्पण्यां ( ३ ) द्रष्टव्यम् ।

योनिमुद्रयोद्दीप्य[1]। गन्धाक्षतपुष्पैर्भगवत्यै श्रीगायत्रीदेव्यै नम इति भगवतीं श्रीगायत्रीदेवीं सम्पूज्य । अस्त्रमंत्रेण तज्जलं चक्रमुद्रया[2] संरक्ष्य । मत्स्यमुद्रयाऽऽच्छाद्य[3]। गायत्रीमूलमन्त्रेणाष्टवारमभिमन्त्रयेत् ॥ इति कलशस्थापनविधिः ॥ १ ॥

ततस्तद्दक्षिणे (२) सामान्यार्घपात्रस्थापनार्थं विन्दुत्रिकोणवृत्तचतुरस्रात्मकं यन्त्रं विलिख्य। शङ्खमुद्रयाऽवष्टभ्य। मध्ये विन्दौ भगवतीं श्रीगायत्रीदेवीं मूलमन्त्रेण सम्पूज्य । ततस्त्रिकोणे स्वाग्रतः पूर्वकोणे ( पश्चिमे ) ॐभगवत्यै श्रीगायत्रीदेव्यै नमः।नैर्ऋत्यकोणे(ईशानकोणे)ॐ भगवत्यै श्रीसावित्रीदेव्यै नमः ।वायव्यकोणे (आग्नेयकोणे) ॐ भगवत्यै श्रीसरस्वतीदेव्यै नम इति पूजयेत्॥ ततो मूलमंत्रमुच्चार्य यन्त्रस्य वृत्तं पूजयेत्। ततः चतुरस्रे षडङ्गानि आग्नेय्यादिक्रमेण पूजयेत्। तद्यथा॥ आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ।।ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः वरेणियं विष्ण्वात्मने शिरसे स्वाहा। नैर्ऋत्यां (ईशान्यां) ॐभूर्भुवः स्वः भर्गो देवस्य रुद्रात्मने शिखायै वषट् । वायव्यां (आग्नेय्यां ) ॐ भूर्भुवः स्वः धीमहि ईश्वरात्मने कवचाय हुम् ॥ पुरः पूर्वे ( पश्चिमे ) ॐ भूर्भुवः स्वः धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्। चतुर्दिक्षु पूर्वादिक्रमेण। पूर्वे (पश्चिमे) ॐप्रचोदयात् अस्त्राय फट् । दक्षिणे ( उत्तरे ) ॐ प्रचोदयात् अस्त्राय फट् । पश्चिमे ( पूर्वे ) ॐ प्रचोदयात् अस्त्राय फट् । उत्तरे ( दक्षिणे ) ॐ प्रचोदयात् अस्त्राय फट्॥ एवं यन्त्रे षडङ्गानि सम्पूज्य । ॐ अस्त्राय फट् इत्याधारं प्रक्षाल्य । यन्त्रोपरि ॐ मं अग्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः सामान्यार्घपात्राधाराय नम इति सामान्यार्घपात्राधारं संस्थाप्य । गायत्रीमूलमंत्रेणाधारं सम्पूज्य । ततः अस्त्राय फट् इति सामान्यार्घपात्रं प्रक्षाल्य । ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः सामान्यार्घपात्राय नम इति सामान्यार्घपात्रम् आधारे प्रतिष्ठाप्य। ततो गायत्रीमूलमंत्रेण सामान्यार्घपात्रं सम्पूज्य तत्र विलोममातृकया भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रेण च शुद्धजलं प्रपूरयेत्॥ तद्यथा।ॐ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं त्

[1] योनिमुद्रालक्षणम् । मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके । अनामिकोर्द्ध्वगाश्लिष्टदीर्घमध्यमयोरधः । अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ॥

[2] विपर्यस्ते तले कृत्वा वामदक्षिणहस्तयोः । अङ्गुष्ठौ ग्रथयेच्चैव कनिष्ठानामिकान्तरे । चक्रमुद्रेयमुद्दिष्टा सर्वसिद्धिकरी शुभा ॥ इति शारदातिलके चतुर्थपटले टीकायाम् ॥

[3] मत्स्यमुद्रालक्षणम् । अधोमुखावुभौ हस्तौ स्वस्योपरि च संस्थितौ । पार्श्वद्वयगताङ्गुष्ठौ मत्स्यमुद्रेयमीरिता ॥ इति शारदातिलके चतुर्थपटले टीकायाम् ॥ ४ ॐ अं आं इत्यादि षोडशस्वरैरपि केचित् वृत्तपूजनं कुर्वन्ति ।

त्या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ यं णि रे व तुः वि स त् त स्वः वः भु भूः ॐ ॥ इति जलं प्रपूर्य । तत्र ॐ उं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः सामान्यार्घपात्रामृताय नम इति जलं सम्पूज्य तत्र "गंगे च यमुने चैव०" इति अङ्कुशमुद्रया सूर्यमण्डलात्तीर्थान्यावाह्य । तज्जलं गालिनीमुद्रया निरीक्ष्य हुं फट् इति अवगुण्ठ्य मत्स्यमुद्रया आच्छाद्य । भगवत्याः श्रीगायत्र्याः मूलमंत्रेणाष्टवारम् अभिमन्त्र्य धेनुमुद्रां योनिमुद्राञ्च प्रदर्शयेत् ॥ इति सामान्यार्घस्थापनम् ॥ २ ॥ ततस्तद्दक्षिणे (३) विशेषार्घ्यपात्रस्थापनार्थं बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं श्रीगायत्रीयन्त्रं विलिख्य अक्षतैः पूजयेत् ॥ ततो यन्त्रं शङ्खमुद्रयाऽवष्टभ्य । भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रमुच्चारयन् यन्त्रस्य मध्ये बिन्दुं पूजयेत् । ॐभूर्भुवः स्वः तत्० । ॐ भगवत्यै श्रीगायत्रीदेव्यै नम इति बिन्दुं सम्पूज्य । ततस्त्रिकोणे स्वाग्रतः प्रादक्षिण्येन कल्पितपूर्वादिक्रमेण । पूर्वे (पश्चिमे) ॐ भगवत्यै श्रीगायत्रीदेव्यै नमः । नैर्ऋत्यां (ईशान्यां) ॐ श्रीसावित्रीदेव्यै नमः । वायव्यां (आग्नेय्यां) ॐश्रीसरस्वतीदेव्यै नमः । ततः स्वपुरतः कल्पिताग्नेय्यादिक्रमेण षट्कोणेषु षडङ्गानि पूजयेत् ॥ ॐ आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ईशान्यां (नैर्ऋत्यां) ॐवरेणियं विष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्यां (ईशान्यां) ॐभर्गो देवस्य रुद्रात्मने शिखायै वषट् । वायव्यां (आग्नेय्यां) ॐ धीमहि ईश्वरात्मने कवचाय हुम् । पुरः (पश्चिमे) ॐधियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट् । ततः स्वपुरः कल्पितपूर्वादिचतुर्दिक्षु । पूर्वे (पश्चिमे) ॐप्रचोदयात् अस्त्राय फट् । दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट् । पश्चिमे (पूर्वे) ॐ प्रचोदयात् अस्त्राय फट् । उत्तरे (दक्षिणे) ॐ प्रचोदयात् अस्त्राय फट् ॥ एवं षडङ्गानि संपूज्य ततः षट्कोणस्य परितः स्वाग्रतः कल्पितपूर्वादिचतुर्दिक्षु आदित्यादीन् आग्नेय्यादिविदिक्षु उषादीश्चावाहयेत् । पूर्वे (पश्चिमे) ॐआदित्याय नमः । दक्षिणे (उत्तरे) ॐभानवे नमः । पश्चिमे (पूर्वे) ॐभास्कराय नमः । उत्तरे (दक्षिणे) ॐरवये नमः । तथैव कल्पिताग्नेय्यादिक्रमेण विदिक्षु । आग्नेय्यां (वायव्यां) ॐ उषायै नमः । नैर्ऋत्यां (ईशान्यां) ॐप्रज्ञायै नमः । वायव्यां (आग्नेय्यां) ॐ प्रभायै नमः । ईशान्यां (नैर्ऋत्यां) ॐसन्ध्यायै नमः । एवं गायत्र्या विशेषार्घयन्त्रं सम्पूज्य । तत्र ॐअस्त्राय फट् इति अस्त्रमंत्रक्षालितम् (त्रिपदीम्) आधारं ॐ मं वह्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्या विशेषार्घपात्राधाराय नम इति संस्थाप्य तदुपरि वह्नेर्दशकलाः

पश्चिमादिप्रादक्षिण्येन पूजयेत्। ॐ यं धूम्रार्चिषे नमः। ॐ रं उष्मायै नमः। ॐ लं ज्वलिन्यै नमः। ॐ वं ज्वालिन्यै नमः। ॐ शं विस्फुलिङ्गयै नमः। ॐ षं श्रियै नमः। ॐ सं सुरूपायै नमः। ॐ हं कपिलायै नमः। ॐ ळं हव्यवाहायै नमः। क्षं कव्यवाहायै नमः। इति वह्नेः कलाः सम्पूज्य तदुपरि अस्त्राय फट् इति अस्त्रमंत्रेण क्षालितं विशेषार्घपात्रं ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्या विशेषार्घपात्राय नम इति संस्थाप्य। तदुपरि पश्चिमादिप्रादक्षिण्यक्रमेण सूर्यस्य द्वादश कलाः पूजयेत् ॥ ॐ कं भं तपिन्यै नमः। ॐ खं बं तापिन्यै नमः। ॐ गं फं धूम्रायै नमः। ॐ घं पं मरीच्यै नमः। ॐ ङं नं ज्वालिन्यै नमः। ॐ चं धं रुच्यै नमः। ॐ छं दं सुषुम्णायै नमः। ॐ जं थं भोगदायै नमः। ॐ झं तं विश्वायै नमः। ॐ ञं णं बोधिन्यै नमः। ॐ टं ढं धारिण्यै नमः। ॐ ठं डं क्षमायै नमः। इति सूर्यस्य द्वादश कलाः समभ्यर्च्य। तस्मिन्पात्रे पात्रान्तरेण विलोममातृकया गायत्रीमूलमंत्रेण च जलं पूरयेत्। ॐ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं त् या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ म्य णि रे व तु: वि स त् त स्वः वः भु भूः ॐ। इति शुद्धोदकेन विशेषार्घपात्रं सम्पूर्य। तस्मिञ्जले सोमस्य ( चन्द्रस्य ) षोडशकलाः पश्चिमादिप्रादक्षिण्येन गन्धाक्षतपुष्पैः सम्पूजयेत्। ॐ अं अमृतायै नमः। ॐ आं मानदायै नमः। ॐ इं पूषायै नमः। ॐ ईं तुष्ट्यै नमः। ॐ उं पुष्ट्यै नमः। ॐ ऊं रत्यै नमः। ॐ ऋं धृत्यै नमः। ॐ ॠं शशिन्यै नमः। ॐ ऌं चन्द्रिकायै नमः। ॐ ॡं कान्त्यै नमः। ॐ एं ज्योत्स्नायै नमः। ॐ ऐं श्रियै नमः। ॐ ओं प्रीत्यै नमः। ॐ औं अङ्गदायै नमः। ॐ अं पूर्णायै नमः। ॐ अः पूर्णामृतायै नमः। इति चन्द्रस्य षोडशकलाः संपूज्य। ॐ उं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्या विशेषार्घामृताय नम इति जलं सम्पूज्य॥ तस्मिञ्जले भगवत्याः श्रीगायत्रीदेव्याः बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं यन्त्रं विभाव्य तस्मिन् श्रीगायत्रीयन्त्रदेवताः स्वाग्रतः कल्पितपूर्वादिक्रमेण पूजयेत् ॥ मध्ये बिन्दुं मूलमन्त्रेण पूजयेत्। त्रिकोणस्य पूर्वकोणे ( पश्चिमे ) ॐ श्रीगायत्रीदेव्यै नमः। नैर्ऋत्यां ( ईशान्यां ) ॐ श्रीसावित्रीदेव्यै नमः। वायव्यां ( आग्नेय्यां ) ॐ श्रीसरस्वतीदेव्यै

१ वह्रिदशान्तेः कैः प्रतिपत्त्म् इति मिश्रोत्तरे।

नमः । ततः स्वाग्रतः कल्पिताग्नेय्यादिक्रमेण षट्कोणेषु षडङ्गानि पूजयेत् । ॐ आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ईशान्यां ( नैर्ऋत्यां ) ॐ वरेणियं विष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्यां ( ईशान्यां ) ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट् । वायव्यां ( आग्नेय्यां ) ॐ धीमहि ईश्वरात्मने कवचाय हुम् । पुरः ( पश्चिमे ) ॐ धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट् । स्वाग्रतः कल्पितपूर्वादिचतुर्दिक्षु । पूर्वे ( पश्चिमे ) ॐ प्रचोदयात् अस्त्राय फट् ॥ दक्षिणे ( उत्तरे ) ॐ प्रचोदयात् अस्त्राय फट् । पश्चिमे ( पूर्वे ) ॐ प्रचोदयात् अस्त्राय फट् । उत्तरे ( दक्षिणे ) ॐ प्रचोदयात् अस्त्राय फट् ॥ एवं षडङ्गानि संपूज्य । षट्कोणस्य दिक्षु स्वाग्रतः कल्पितपूर्वादिक्रमेण चतुर आदित्यादिदेवान् पूजयेत् ॥ पूर्वे ( पश्चिमे ) ॐ आदित्याय नमः । दक्षिणे ( उत्तरे ) ॐ भानवे नमः । पश्चिमे ( पूर्वे ) ॐ भास्कराय नमः । उत्तरे ( दक्षिणे ) ॐ रवये नमः । तत्रैव कल्पिताग्नेय्यादिक्रमेण विदिक्षु । आग्नेय्यां ( वायव्यां ) ॐ उषायै नमः । नैर्ऋत्यां ( ईशान्यां ) ॐ प्रज्ञायै नमः । वायव्यां ( आग्नेय्यां ) ॐ प्रभायै नमः । ईशान्यां ( नैर्ऋत्यां ) ॐ सन्ध्यायै नमः । एवं भगवत्याः श्रीगायत्रीदेव्या यन्त्रं सम्पूज्य । तस्मिन्विशेषार्घजले मूलेनावाहनादिमुद्रया भगवतीं श्रीगायत्रीदेवीमावाहयेत् । भो गायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते आवाहिता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते संस्थापिता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते सन्निहिता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते सन्निरुद्धा भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि अस्मिन्विशेषार्घपात्रामृते सम्मुखीकृता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते षडङ्गेन सकलीकृता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते अवगुण्ठिता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते अमृतीकृता भव । पुनर्मूलेन । भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्विशेषार्घपात्रामृते परमीकृता भव । इति आवाहनादिमुद्राः प्रदर्श्य । तज्जले ॐ "गंगे च यमुने चैव०"

---

१ विततोत्तान ऊर्ध्वोधोभ्यापारितोऽञ्जलिः आवाहनी मुद्रा । २ तथाविधो न्युब्जाञ्जलिः संस्थापिनी मुद्रा । ३ उदग्रयोर्मुष्ट्योः अभिमुखयोगे सन्निधापिनी । ४ सैवान्तर्निष्ठिकामूलम् अन्तःप्रविष्टाङ्गुष्ठमिथःस्पृष्टनखा सन्निरोधिनी । ५ सन्निधापिन्येव तिरःप्रयोजिता सम्मुखीकरणी ॥

६ सकलीकरणं १७८ पृष्ठे टिप्पण्याम् (६) उक्तम् ॥

७ अधोमुखस्य दक्षवाममुष्टिद्वयस्य प्रसारिततर्जन्योः स्वस्वभागमारभ्य क्रमेण लक्ष्यं परितः प्रादक्षिण्यवामावर्ताभ्यां परिभ्रमणे अवगुण्ठनी॥ ८धेनुमुद्रयाऽमृतीकरणम्॥ ९ परमीकरणमपि १७८ पृष्ठे टिप्पण्याम्(९)उक्तम्॥

[illegible]। सूर्यमण्डलात्तीर्थान्यावाह्य। ततस्तज्जलं गालिनीमुद्रया निरीक्ष्य फट् इति अवगुण्ठ्य। धेनुमुद्रयाऽमृतीकृत्य। शङ्खमुद्रयाऽवष्टभ्य। योनिमुद्र- [illegible]। ततस्तज्जलस्थितां भगवतीं श्रीगायत्रीदेवीं गन्धपुष्पैः सम्पूज्य। अस्त्र- चक्रमुद्रया जलं संरक्ष्य।मत्स्यमुद्रयाऽऽच्छाद्य। गायत्रीमूलमंत्रेणाष्टवारमभिमं- [illegible]ति [illegible] ॥३॥ ततस्तद्दक्षिणे(४)पाद्यपात्रस्थापनार्थं विन्दु- [illegible] ॐ यन्त्रं विलिख्य। मध्ये विन्दौ भगवतीं श्रीगायत्रीदेवीं मूल- [illegible] सम्पूज्य। ततस्त्रिकोणे स्वाग्रतः कल्पितपूर्वादिक्रमेण त्रिकोणस्य पूर्वकोणे [illegible]) ॐ भगवत्यै श्रीगायत्रीदेव्यै नमः। नैर्ऋत्यकोणे(ईशाने)ॐभगवत्यै श्रीसा- [illegible] नमः। वायव्यकोणे (आग्नेये) ॐ भगवत्यै श्रीसरस्वतीदेव्यै नमः। इति सम्पूज्य मूलमंत्रेण वृत्तं पूजयेत्। ततश्चतुरस्रे षडङ्गानि पूजयेत्। तद्यथा। स्वपुरतः पूर्ववत्कल्पिताग्नेय्यादिक्रमेण पूजयेत्। आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः। ईशान्यां (नैर्ऋत्यां) ॐ वरेणियं विष्ण्वात्मने शिरसे स्वाहा। नैर्ऋत्यां (ईशान्यां) ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट्। वायव्यां (आग्नेय्यां) ॐ धीमहि ईश्वरात्मने कवचाय हुम्। पुरः (पश्चिमे) ॐ धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्। ततः स्वाग्रतः कल्पितपूर्वादिचतुर्दिक्षु। पूर्वे (पश्चिमे) ॐप्रचोदयात् अस्त्राय फट्। दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट्। पश्चिमे (पूर्वे) ॐ प्रचोदयात् अस्त्राय फट्। उत्तरे (दक्षिणे) ॐ प्रचोदयात् अस्त्राय फट्॥ एवं यन्त्रे षडङ्गानि सम्पूज्य। ॐअस्त्राय फट् इति पाद्यपात्राधारं प्रक्षाल्य यन्त्रोपरि ॐमं अग्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः पाद्यपात्राधाराय नम इति पाद्यपात्राधारं संस्थाप्य गायत्र्या मूलमन्त्रेणाधारं संपूज्य तदुपरि अस्त्राय फट् इति अस्त्रमंत्रेण क्षालितं पाद्यपात्रं ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः पाद्यपात्राय नमः इति आधारे संस्थाप्य गायत्र्या मूलमंत्रेण पाद्यपात्रं संपूज्य तस्मिन्विलोममातृकया भगवत्याः श्रीगायत्रीदेव्याश्च मूलमंत्रेण शुद्धजलं पूरयेत्॥ ॐक्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं त् या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ यं णि रे व तुः वि स त् त स्वः वः भु भूः ॐ। ततः ॐउं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः पाद्यपात्रामृताय नम इति जलं सम्पूज्य ततः "ॐगंगे च यमुने चैव गोदावरि सरस्वति॰" इति अङ्कुशमुद्रया सूर्यमण्डलात्तीर्था-

न्यावाह्य । गालिनीमुद्रया जलं निरीक्ष्य । मत्स्यमुद्रया आच्छाद्य । भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रेण पाद्यपात्रजलम् अष्टवारमभिमंत्र्य धेनुमुद्रा योनिमुद्राञ्च प्रदर्शयेत् । इति पाद्यपात्रविधिः ॥४॥ ततस्तद्दक्षिणे (५) अर्घपात्रस्थापनार्थं पूर्वं विन्दुत्रिकोणवृत्तचतुरस्रात्मकं यन्त्रं गन्धैर्विलिख्य शङ्खमुद्रया अवष्टभ्य । भगवश्रीगायत्रीदेवीं मूलमंत्रेण मध्ये विन्दौ सम्पूज्य त्रिकोणे स्वाग्रतः कल्पितपूर्वदिक्रमेणाक्षतैः पूजयेत् ॥ पूर्वकोणे (पश्चिमे) ॐ श्रीगायत्रीदेव्यै नमः । नैर्ऋकोणे (ईशान्या) ॐ श्रीसावित्रीदेव्यै नमः । वायव्यकोणे (आग्नेय्यां) श्रीरुस्वतीदेव्यै नमः । ततः श्रीगायत्रीदेव्या मूलमन्त्रेण वृत्तं पूजयेत् । ततश्चतुरषडङ्गानि स्वपुरतः कल्पिताग्नेय्यादिक्रमेण पूजयेत् । तद्यथा । आग्नेय्या (वायव्या) ॐभूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ईशान्या (नैर्ऋत्या) वरेणियं श्रीविष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्या (ईशान्या) ॐ भर्गो देवस्य श्रीरुद्रात्मने शिखायै वषट् । वायव्या (आग्नेय्या) ॐ धीमहि ईश्वरात्मने कवचाय हुम् । पुरः (पश्चिमे) ॐ धियो यो नः श्रीसदाशिवात्मने नेत्रत्रयाय वौषट् । ततः कल्पितचतुर्दिक्षु स्वाग्रतः पूर्वादिक्रमेण । पूर्वे (पश्चिमे) ॐ प्रचोदयात् अस्त्राय फट् । दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट् । पश्चिमे (पूर्वे) ॐ प्रचोदयात् अस्त्राय फट् । उत्तरे (दक्षिणे) ॐ प्रचोदयात् अस्त्राय फट् । एवं षडङ्गानि सम्पूज्य ॥ ॐ अस्त्राय फट् इति आधारं प्रक्षाल्य यन्त्रोपरि ॐ मं अग्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्या अर्घपात्राधाराय नमः इति अर्घपात्राधारं संस्थाप्य । ततो गायत्र्या मूलमंत्रेणाधारं संपूज्य ततः अस्त्राय फट् इति अर्घपात्रं प्रक्षाल्य । ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्याः अर्घपात्राय नमः इति आधारे अर्घपात्रं संस्थाप्य । गायत्रीमूलमन्त्रेणार्घपात्रं सम्पूज्य तत्र विलोममातृकया भगवत्याः श्रीगायत्रीदेव्याश्च मूलमंत्रेण शुद्धजलं पूरयेत् । तद्यथा । ॐ क्षं ळं हं सं षं शं वं लं रं यं मं भ व फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं लॄं लृं ॠं ऋं ऊं उं ईं इं आ अं त् या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ यं णि रे व तु वि स त् त स्वः वः भु भूः ॐ ॥ ततः ॐ उं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्या अर्घपात्रामृताय नम इति जलं सम्पूज्य । ततो जले "ॐ गङ्गे च यमुने चैव०" इति अङ्कुशमुद्रया सूर्यमण्डलात्तीर्थान्यावाह्य गालिनीमुद्रया निरीक्ष्य । मत्स्यमुद्रया आच्छाद्य । भगवत्याः श्रीगायत्रीदेव्या मूल-

१ सर्वत्र पात्रासादने ॐ अ आ इत्यादिषोडशस्वरैरपि केचित् वृत्तपूजनं कुर्वन्ति न तत्र कापि क्षतिः ॥

ण अष्टवारमभिमंत्रयेत् ॥ ततो धेनुमुद्रां योनिमुद्राञ्च प्रदर्शयेत् ॥ इति अर्घ्यनविधिः ॥५॥ ततस्तद्दक्षिणे (६) आचमनीयपात्रार्थं विन्दुत्रिकोणवृत्तचयन्त्रं गन्धैर्विलिख्य। शङ्खमुद्रया यन्त्रमवष्टभ्य। भगवतीं श्रीगायत्रीदेवीं यन्त्रस्य मध्ये विन्दौ सम्पूज्य। ततस्त्रिकोणे स्वाग्रतः कल्पितपूर्वादिक्रमेयेत्। पूर्वकोणे ( पश्चिमे ) ॐ श्रीगायत्रीदेव्यै नमः। नैर्ऋत्यकोणे ॐ श्रीसावित्रीदेव्यै नमः। वायव्यकोणे (आग्नेय्यां) ॐ श्रीसरस्वतीदेव्यै ... गायत्र्या मूलमन्त्रेण वृत्तं पूजयेत्। ततश्चतुरस्रे स्वपुरतः कल्पिताग्नेय्यादिक्रमेण षडङ्गानि पूजयेत्। तद्यथा। आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः। ईशान्यां ( नैर्ऋत्यां ) ॐ वरेणियं श्रीविष्ण्वात्मने शिरसे स्वाहा। नैर्ऋत्यां ( ईशान्यां ) ॐ भर्गो देवस्य श्रीरुद्रात्मने शिखायै वषट्। वायव्यां ( आग्नेय्यां ) ॐ धीमहि ईश्वरात्मने कवचाय हुम्। पुरः (पश्चिमे) ॐ धियो यो नः श्रीसदाशिवात्मने नेत्रत्रयाय वौषट्। ततः स्वाग्रतः कल्पितचतुर्दिक्षु पूर्वादिक्रमेण। पूर्वे (पश्चिमे) ॐ प्रचोदयात् अस्त्राय फट्। दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट्। पश्चिमे ( पूर्वे ) ॐ प्रचोदयात् अस्त्राय फट्। उत्तरे ( दक्षिणे ) ॐ प्रचोदयात् अस्त्राय फट्। एवं षडङ्गानि सम्पूज्य अस्त्राय फट् इति आचमनीयपात्राधारं ( त्रिपदीं ) प्रक्षाल्य यन्त्रोपरि ॐ मं अग्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्या आचमनीयपात्राधाराय नम इति आचमनीयपात्राधारं संस्थाप्य। भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रेणाधारं सम्पूज्य। ॐ अस्त्राय फट् इति आचमनीयपात्रं प्रक्षाल्य। ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्या आचमनीयपात्राय नम इति आचमनीयपात्रम् आधारे प्रतिष्ठाप्य। भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रेण आचमनीयपात्रं सम्पूज्य तत्र विलोममातृकया भगवत्याः श्रीगायत्रीदेव्याश्च मूलमंत्रेण जलं पूरयेत्। तद्यथा। ॐ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं त् या द चो प्र नः यो यो धि हि म धी स्य व दे र्गो भ यं णि रे व तुः वि स त् त स्वः वः र्भु भूः ॐ॥ ततः ॐ उं सोममण्डलाय षोडशकलात्मने भगवत्याः श्रीगायत्रीदेव्या आचमनीयपात्रामृताय नम इति जलं सम्पूज्य। ततः "ॐ गंगे च यमुने चैव०" इति अङ्कुशमुद्रया सूर्यमण्डलात्तीर्थान्यावाह्य। गालिनीमुद्रया जलं निरीक्ष्य। हुं फट् इत्यवगुण्ठ्य। मत्स्यमुद्रयाऽऽच्छाद्य। भगवत्याः

१ उत्तानस्य वामकरस्य निरलम् आकुञ्चितैः अनामामध्यमातर्जन्यग्रैः तदुपरि अधोमुखस्य दक्षस्य तर्जनी

ग पु. २४

श्रीगायत्रीदेव्या मूलमंत्रेणाष्टवारमभिमंत्रयेत् ॥ ततो धेनुमुद्रां योनिमुद्राञ्च प्रदर्शयेत् ॥ इति आचमनीयपात्रविधिः॥ ६ ॥ ततस्तद्दक्षिणे (७) मधुपर्कपात्रस्थापनार्थं पूर्ववत् विन्दुत्रिकोणवृत्तचतुरस्रात्मकं यन्त्रं गन्धैर्विलिख्य । शङ्खमुद्रयाऽवष्टभ्य । भगवतीं श्रीगायत्रीदेवीं मूलमंत्रेण मध्ये विन्दौ सम्पूज्य । त्रिकोणे स्वाग्रतः कल्पितपूर्वादिक्रमेणाक्षतैः पूजयेत् । पूर्वकोणे ( पश्चिमे ) ॐ भगवत्यै श्रीगायत्रीदेव्यै नमः । नैर्ऋत्यकोणे (ईशान्यां) ॐ भगवत्यै श्रीसावित्रीदेव्यै नमः । वायव्यकोणे (आग्नेय्यां) ॐ भगवत्यै श्रीसरस्वतीदेव्यै नमः । ततो भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रेण वृत्तं पूजयेत् ॥ ततश्चतुरस्रे षडङ्गानि स्वपुरतः कल्पिताग्नेय्यादिक्रमेण पूजयेत् । तद्यथा । आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः । ईशान्यां ( नैर्ऋत्यां ) ॐ वरेणियं विष्ण्वात्मने शिरसे स्वाहा । नैर्ऋत्यां ( ईशान्यां ) ॐ भर्गो देवस्य श्रीरुद्रात्मने शिखायै वषट् । वायव्यां ( आग्नेय्यां ) ॐ धीमहि ईश्वरात्मने कवचाय हुम् । पुरः (पश्चिमे) ॐ धियो यो नः प्रचोदयात् नेत्रत्रयाय वौषट् । ततः कल्पितपूर्वादिचतुर्दिक्षु स्वाग्रतः पूर्वादिक्रमेण । पूर्वे ( पश्चिमे ) ॐ प्रचोदयात् अस्त्राय फट् । दक्षिणे (उत्तरे) ॐ प्रचोदयात् अस्त्राय फट् । पश्चिमे ( पूर्वे ) ॐ प्रचोदयात् अस्त्राय फट् । उत्तरे (दक्षिणे) ॐ प्रचोदयात् अस्त्राय फट् । एवं षडङ्गानि सम्पूज्य । अस्त्राय फट् इति भगवत्याः श्रीगायत्रीदेव्या मधुपर्कपात्राधारं ( त्रिपदीं ) प्रक्षाल्य यन्त्रोपरि ॐ मं अग्निमण्डलाय दशकलात्मने भगवत्याः श्रीगायत्रीदेव्या मधुपर्कपात्राधाराय नम इति मधुपर्कपात्राधारं संस्थाप्य । गायत्रीमूलमन्त्रेणाधारं सम्पूज्य। ॐ अस्त्राय फट् इति मधुपर्कपात्रं प्रक्षाल्य । ॐ अं सूर्यमण्डलाय द्वादशकलात्मने भगवत्याः श्रीगायत्रीदेव्या मधुपर्कपात्राय नम इति मधुपर्कपात्रम् आधारे प्रतिष्ठाप्य। भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रेण मधुपर्कपात्रं सम्पूज्य । ततस्तत्र दधिघृतमधुनि एकीकृत्य प्रक्षिपेत्। इति मधुपर्कपात्रस्थापनविधिः ॥७॥ एवं सप्त पात्राणि संस्थाप्य । तत्र चतुर्थे पाद्यपात्रे श्यामाकदूर्वाब्जविष्णुक्रान्तादीनि निःक्षिपेत् । पञ्चमे अर्घपात्रे दूर्वासर्षपतिलदर्भाग्रयवचन्दनादीनि निःक्षिपेत् । षष्ठे आचमनीय-

मध्यमानामिकाग्राणि वक्रीकृतानि संयोज्योभयोर्मिथः कनिष्ठाङ्गुष्ठाग्राणा मिथः संबन्धे गालिनीमुद्रा स्यात् ॥

१ पाद्यं पादाम्बुजे दद्याद्देवस्य हृदयाणुना । एतच्छ्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् । महाकपिलपञ्चरात्रेऽपि । दूर्वा च विष्णुपत्नी च श्यामाकं पद्ममेव च । पाद्याङ्गानि च चत्वारि कथितानि समासतः ॥

२ (अर्घपात्रे) अर्घं दिशेत्ततो मूर्ध्नि शिरोमन्त्रेण देशिकः । गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः । सदूर्वैः सर्वदेवानामेतदर्घ्यमुदीरितम् ॥ सर्वदेवानामितिपदेन पाद्याद्युक्तद्रव्याणि सर्वदेवेषु समानानि इत्यर्थो बोध्यः ॥ इति शारदातिलके ॥

पात्रे जातिफललवङ्गकङ्कोलादीनि निःक्षिपेत् । सप्तमे मधुपर्कपात्रे दधिमधुघृतानि निःक्षिपेत् । ततो विशेषार्घपात्रात्किञ्चिज्जलं पात्रान्तरेणादाय सर्वेषु पात्रेषु किञ्चित्किञ्चिन्निक्षिप्य गन्धाक्षतपुष्पाण्यपि प्रक्षिप्य भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रेण अष्टवारं प्रतिपात्रं पात्रजलम् अभिमन्त्रयेत् । तथैवान्यान्यपि पूजोपयोगीनि गन्धोद्वर्तनहरिद्राप्रभृतीनि पूजोपकरणानि स्वसमीपेऽवस्थाप्य भगवत्याः श्रीगायत्रीदेव्याः पूजामारभेत ॥

पूर्वं पात्रान्तरेण विशेषार्घपात्रामृतात् किञ्चिज्जलं गृहीत्वा स्वात्मानं पूजोपकरणादीनि प्रोक्षयेत् ॥ ततः स्वशरीरं तेजोमयं भगवतीश्रीगायत्रीदेव्यात्मकं (तत्स्वरूपसदृशं) विभाव्य गायत्रीमूलमन्त्रेण गन्धाक्षतपुष्पैः स्वहृदि आत्मानं (तां) सम्पूज्य निवर्तितदेवतावाहनपूजनस्य सर्वतोभद्रमण्डलस्य मध्यभागे गायत्र्याः स्थापनार्थं बृहत्कलशं कलशविधिना स्थापयित्वा तदुपरि तण्डुलपूरितं ताम्रादि पूर्णपात्रं निधाय तस्योपरि पीठपूजां कुर्यात्॥ पीठस्य मध्ये । ॐ मं मण्डूकाय नमः । ॐ कां कालाग्निरुद्राय नमः। ॐमूं मूलप्रकृत्यै नमः। ॐ आं आधारशक्तये नमः। ॐकूं कूर्माय नमः । ॐअं अनन्ताय नमः । ॐवं वराहाय नमः । ॐधं धरिण्यै नमः । ॐसुं सुधासिन्धवे नमः। ॐरं रत्नद्वीपाय नमः। ॐकं कल्पवृक्षाय नमः। ॐस्वं स्वर्णवेदिकायै नमः । ॐरं रत्नसिंहासनाय नमः ॥ आग्नेय्याम् । ॐधं धर्माय नमः । नैर्ऋत्याम् । ॐज्ञां ज्ञानाय नमः । वायव्याम् । ॐवैं वैराग्याय नमः । ईशान्याम् । ॐ ऐं ऐश्वर्याय नमः । पूर्वे । अं अधर्माय नमः । दक्षिणे । अं अज्ञानाय नमः । पश्चिमे । अं अवैराग्याय नमः । उत्तरे । अं अनैश्वर्याय नमः । अतः परं पुनर्मध्ये ॐअं अनन्ताय नमः । स्वाग्रतः कल्पिताग्नेय्यादिक्रमेण । आग्नेय्यां ( वायव्यां ) ॐ अं अम्बुजाय नमः । ईशान्यां ( नैर्ऋत्यां ) ॐ आं आनन्दकन्दाय नमः । नैर्ऋत्यां (ईशान्यां) ॐ सं संविन्नालाय नमः। वायव्यां ( आग्नेय्यां ) ॐसं सर्वतत्त्वात्मकपद्माय नमः । ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः । ॐविं विकारमयकेसरेभ्यो नमः । ॐ पं पञ्चाशद्वर्णबीजाढ्यकर्णिकायै नमः । ॐअं द्वादशकलात्मने सूर्यमण्डलाय नमः। ॐ उं षोडशकलात्मने सोममण्डलाय नमः। ॐमं दशकलात्मने वह्निमण्डलाय नमः। ॐसं सत्त्वाय नमः । ॐरं रजसे नमः। ॐतं तमसे नमः । ॐआं आत्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ पं परमात्मने नमः। ॐह्रीं ज्ञानात्मने नमः। ॐमां

---

१ सुधामन्त्रेण वदने दद्यादाचमनीयकम् । जातीलवङ्गकङ्कोलैस्त्वदुक्तं तन्त्रवेदिभिः ॥ महाकपिलपञ्चरात्रे । कर्पूरमगरुपुष्पद्रव्याण्याचमनीयकम् ॥ तथैव गर्गसंहितायाम् । तथाचमनपात्रे तु दद्याज्जातीफलं मुने । लवङ्गमपि कङ्कोलं शस्तमाचमनीयकम् ॥

मायातत्त्वाय नमः । ॐ कं कलातत्त्वाय नमः । ॐ विं विद्यातत्त्वाय नमः । ॐ पं परतत्त्वाय नमः । पीठस्य पूर्वाद्यष्टदलेषु । पूर्वे (पश्चिमे) ॐ रां दीप्तायै नमः । आग्नेय्यां (वायव्यां) ॐ रीं सूक्ष्मायै नमः । दक्षिणे ( उत्तरे ) ॐ रुं जयायै नमः । नैर्ऋत्यां ( ईशान्यां ) ॐ रें भद्रायै नमः । पश्चिमे (पूर्वे) ॐ रैं विभूत्यै नमः । वायव्यां (आग्नेय्यां) ॐ रों विमलायै नमः । उत्तरे (दक्षिणे) ॐ रौं अमोघायै नमः । ईशान्यां (नैर्ऋत्यां) ॐ रं विद्युतायै नमः । मध्ये ॐ रः सर्वतोमुख्यै नमः । पुनर्मध्ये भगवत्याः श्रीगायत्रीदेव्याः ॐ ब्रह्मविष्णुरुद्रात्मकबिम्बाय सौरपीठाय नमः । इति पीठं सम्पूज्य । ततः कलशस्य मध्यभागे बिन्दुत्रिकोणषट्कोणवृत्ताष्टपत्रचतुर्द्वारोपेतं भगवत्याः श्रीगायत्रीदेव्याः सौवर्णं राजतं ताम्रमयं वा यन्त्रं स्वसन्मुखत्रिकोणाग्रं पात्रे निधाय यन्त्रप्रतिष्ठां कुर्यात् ।



हस्ते जलमादाय ॥ देशकालौ सङ्कीर्त्य मया प्रारब्धस्य समग्रमलगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अस्याः भगवत्याः श्रीगायत्रीदेव्या यन्त्रस्य प्रतिष्ठां

करिष्ये । इति सङ्कल्पं विधाय । एकस्मिन्पात्रे पञ्चगव्यं कुर्यात् । ॐ तत्सवितु० इति गायत्रीमन्त्रेण गोमूत्रम्।ॐगन्धद्वाराम्० इति मन्त्रेण गोमयम्। ॐआप्यायस्व० इति मन्त्रेण क्षीरम्।ॐदधिक्राव्णो० इति मन्त्रेण दधि।ॐतेजोऽसि शुक्रमस्य० इति मन्त्रेण आज्यम्॥ ॐदेवस्य त्वा० इति मन्त्रेण कुशोदकम्। हौं इति बीजं पठन् यज्ञकाष्ठेनालोड्य । तस्मिन् पञ्चगव्ये प्रणवेन यन्त्रं निधाय। पुनर्बहिर्निष्कास्य मिश्रितेन पञ्चगव्येन पृथक् पृथक् वा दुग्धदधिघृतमधुशर्कराभिश्च तं संस्नाप्य धूपयेत् । ततः शुद्धोदकेन स्नापयित्वा धौतेन वाससा परिमृज्य पीठोपरि मध्ये स्थापयित्वा कुशाग्रैः स्पृशन् यन्त्रगायत्रीं पठेत् । ॐ यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् । इति यन्त्रगायत्रीम् अष्टोत्तरशतवारमावृत्य तत्र यन्त्रदेवता आवाहयेत् ॥ हस्तेऽक्षतान् गृहीत्वा प्रथमं मध्यबिन्दौ आदित्यस्वरूपायै श्रीगायत्रीदेव्यै नमः आदित्यस्वरूपां श्रीगायत्रीदेवीम् आवा० स्थाप०॥१॥इत्यावाह्य। स्वाग्रतः कल्पितपूर्वादिक्रमेण । पूर्वे (पश्चिमे) त्रिकोणाग्रभागे। ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः श्रीगायत्रीदेवीम् आवाहयामि स्थापयामि ॥ २॥ त्रिकोणस्य नैर्ऋत्यकोणे (ईशान्यां)। ॐ भूर्भुवः स्वः भगवत्यै श्रीसावित्रीदेव्यै नमः श्रीसावित्रीदेवीम् आवा० स्थाप०॥३॥त्रिकोणस्य वायव्यकोणे (आग्नेय्यां)। ॐ भूर्भुवः स्वः भगवत्यै श्रीसरस्वतीदेव्यै नमः श्रीसरस्वतीदेवीम् आवा० स्थापयामि ॥ ४ ॥ ततस्त्रिकोणस्यान्तरालेषु (बहिः)। आग्नेय्यां (वायव्यां)। ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्थाप० ॥५॥ पश्चिमे (पूर्वे)। ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुम् आवा० स्थाप०॥६॥ईशान्यां (नैर्ऋत्यां) ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थाप० ॥७॥ ततः षट्कोणेऽपि स्वाग्रतः पूर्वनैर्ऋत्यवायव्यकोणेषु । यथा षट्कोणस्य पूर्वे (पश्चिमे) ॐ भूर्भुवः स्वः श्रीगायत्रीदेव्यै नमः श्रीगायत्रीदेवीम् आवा० स्थाप० ॥८॥ षट्कोणस्य नैर्ऋत्यकोणे (ईशान्यां) ॐ भूर्भुवः स्वः श्रीसावित्रीदेव्यै नमः श्रीसावित्रीदेवीम् आवा० स्थाप० ॥९॥ षट्कोणस्य वायव्यकोणे (आग्नेय्यां)। ॐभूर्भुवः स्वः श्रीसरस्वतीदेव्यै नमः श्रीसरस्वतीदेवीम् आवा०

१ ग्रन्थान्तरे—षट्कोणत्रिषु प्राक् सावित्र्यै गायत्र्यै च नैर्ऋते । वायुकोणे सरस्वत्यै आग्नेये ब्रह्मणे नमः । ऐशाने विष्णवेऽधेशे रुद्राय प्रथमाहुतिः ॥ शारदातिलके तु—कोणेषु त्रिषु सम्पूज्या मन्त्राद्याः शक्तयो बहिः ॥ अत्र कोणपदस्य व्याख्यायां कोणेषु इति पदस्य [illegible] कृतः । तथैव पुनः कोणेषु त्रिषु इति [illegible] कृतः । अत्र [illegible] तथापि टीकायां "त्रिमूर्तिः प्रथमं समर्च्य" [illegible] । [illegible] पुनः पुनः [illegible] शारदातिलके । तथैव [illegible] ॥ [illegible] इति [illegible] इति [illegible] ।

स्थाप० ॥१०॥ पट्कोणस्याग्नेयकोणे (वायव्यां) ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्था०॥११॥पट्कोणस्य पश्चिमकोणे (पूर्वे) ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुम् आवा० स्था० ॥१२॥ पट्कोणस्येइशानकोणे (नैर्ऋत्याम्) ॐभूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थाप०॥१३॥ ततः पट्कोणस्य परितः स्वाग्रतः कल्पितपूर्वादिक्रमेण चतुर्दिक्षु आदित्यादींश्चतुरो देवान् स्थापयेत्॥ पूर्वे (पश्चिमे) ॐभूर्भुवः स्वः आदित्याय नमः आदित्यम् आवा० स्थाप० ॥१४॥ दक्षिणे ( उत्तरे ) ॐ भूर्भुवः स्वः भास्कराय नमः. भास्करम् आवा० स्थाप० ॥१५॥ पश्चिमे (पूर्वे) ॐ भूर्भुवः स्वः भानवे नमः भानुम् आवा० स्थाप० ॥१६॥ उत्तरे (दक्षिणे) ॐभूर्भुवः स्वः रवये नमः रविम् आवा० स्थाप० ॥१७॥ ततः पट्कोणस्य परितः कल्पिताग्नेय्यादिक्रमेण विदिक्षु चतस्रः उपादिदेवीः स्थापयेत्॥ आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः उपायै नमः उपाम् आवा० स्थाप० ॥१८॥ ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः प्रज्ञायै नमः प्रज्ञाम् आवा० स्थाप० ॥१९॥ नैर्ऋत्यां (ईशान्यां) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाम् आवा० स्थाप० ॥२०॥ वायव्यां (आग्नेय्यां) ॐभूर्भुवः स्वः सन्ध्यायै नमः सन्ध्याम् आवा० स्थाप० ॥ २१ ॥ ततः पट्कोणस्य कोणेषु परितः कल्पिताग्नेय्यादिक्रमेण षडङ्गानि स्थापयेत् ॥ आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः हृदयम् आवा० स्थाप० ॥ २२ ॥ ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः वरेणियं विष्ण्वात्मने शिरसे नमः शिरः आवा० स्थाप० ॥ २३ ॥ नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः भर्गो देवस्य धीमहि रुद्रात्मने शिखायै नमः शिखाम् आवा० स्थाप० ॥२४॥ वायव्यां (आग्नेय्यां) ॐभूर्भुवःस्वः धीमहि ईश्वरात्मने कवचाय नमः कवचम् आवा० स्थाप०॥२५॥ पुरः। ॐभूर्भुवः स्वः धियो यो नः सदाशिवात्मने नेत्रत्रयाय नमः नेत्रत्रयम् आवा० स्थाप०॥२६॥ ततः कल्पितपूर्वादिक्रमेण चतुर्दिक्षु प्रादक्षिण्येन। पूर्वे(पश्चिमे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप० ॥२७॥ दक्षिणे (उत्तरे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥२८॥पश्चिमे (पूर्वे) ॐभूर्भुव स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥२९॥उत्तरे (दक्षिणे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥३०॥एवं षडङ्गानि स्थापयित्वा अष्टपत्रेषु कल्पितपूर्वादिक्रमेण प्रह्लादिन्यादीरष्टौ देवीः स्थापयित्वा पुनर्द्विवारं तत्रै-

१ शारदातिलके—एकविंशतिपटले–ततः षडङ्गान्यभ्यर्चेत् केसरेषु यथाविधि ॥ २३ ॥ प्रह्लादिनी प्रभां पश्चान्नित्यां विश्वंभरां पुनः। विशालिनीप्रभावत्यौ जयां शान्तिं यजेत्पुनः ॥ २४ ॥ कान्तिं दुर्गासरस्वत्यौ विश्वरूपां ततः परम्। विशालसञ्ज्ञितामीशां व्यापिनीं विमलां यजेत् ॥ २५ ॥ तमो पहारिणीं सूक्ष्मां विश्व-

चाष्टौ अष्टौ पूर्वतः प्रादक्षिण्येनैवं चतुर्विंशतिदेवीः स्थापयेत्। यथा पूर्वपत्रे(पश्चिमे)ॐ भूर्भुवः स्वः प्रह्लादिन्यै नमः प्रह्लादिनीम् आवा० स्थाप०॥३१॥आग्नेयपत्रे(वायव्यां) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाम् आवा० स्थाप० ॥३२॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः नित्यायै नमः नित्याम् आवा० स्थाप० ॥३३॥नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः विश्वम्भरायै नमः विश्वम्भराम् आवा० स्थाप०॥३४॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः विशालायै नमः विशालाम् आवा० स्थाप० ॥३५॥ वायव्यपत्रे (आग्नेय्यां) ॐ भूर्भुवः स्वः प्रभावत्यै नमः प्रभावतीम् आवा० स्थाप० ॥३६॥ उत्तरपत्रे (दक्षिणे) ॐ भूर्भुवः स्वः जयायै नमः जयायै आवा० स्थाप० ॥३७॥ ईशानपत्रे (नैर्ऋत्यां) ॐ भूर्भुवः स्वः शान्त्यै नमः शान्तिम् आवा० स्थाप०॥३८॥ एवम् अष्टौ देवीः स्थापयित्वा पुनः कल्पितपूर्वादिक्रमेणाष्टदेवीः स्थापयेत्। पूर्वपत्रे (पश्चिमे) ॐ भूर्भुवः स्वः कान्त्यै नमः कान्तिम् आवा० स्थाप० ॥ ३९ ॥ आग्नेयपत्रे (वायव्यां) ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गाम् आवा० स्थाप० ॥ ४० ॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः सरस्वत्यै नमः सरस्वतीम् आवा० स्थाप० ॥ ४१ ॥ नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः विश्वरूपायै नमः विश्वरूपाम् आवा० स्थाप० ॥ ४२ ॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः विशालायै नमः विशालाम् आवा० स्थाप० ॥ ४३ ॥ वायव्यपत्रे (आग्नेय्यां) ॐ भूर्भुवः स्वः ईशायै नमः ईशाम् आवा० स्थाप० ॥४४॥ उत्तरपत्रे (दक्षिणे) ॐ भूर्भुवः स्वः व्यापिन्यै नमः व्यापिनीम् आवा० स्थाप० ॥ ४५ ॥ ईशानपत्रे (नैर्ऋत्यां) ॐ भूर्भुवः स्वः विमलायै नमः विमलाम् आवा० स्थाप० ॥ ४६ ॥ पुनरपि अष्टदले कल्पितपूर्वादिक्रमेण प्रादक्षिण्येनाष्टौ देवीः स्थापयेत् ॥ पूर्वपत्रे (पश्चिमे) ॐ भूर्भुवः स्वः तमोपहारिण्यै नमः तमोपहारिणीम् आवा० स्थाप० ॥४७॥ आग्नेयपत्रे (वायव्यां) ॐ भूर्भुवः स्वः सूक्ष्मायै नमः सूक्ष्माम् आवा० स्थाप० ॥४८॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः विश्वयोन्यै नमः विश्वयोनिम् आवा० स्थाप० ॥४९॥ नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः जयायै नमः जयाम् आवा० स्थाप० ॥५०॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः पद्मालयायै नमः पद्मालयामावा० स्थाप०॥५१॥वायव्यपत्रे(आग्नेय्यां) ॐ भूर्भुवः स्वः परायै नमः पराम् आवा० स्था० ॥५२॥उत्तरपत्रे(दक्षिणे)ॐ भूर्भुवः स्वः शोभायै नमः शोभाम् आवा० स्थाप०॥५३॥ ईशानपत्रे(नैर्ऋत्यां)ॐ भूर्भुवः स्वः पद्मरूपायै नमः पद्मरूपाम् आवा० स्थाप०॥५४॥

---

योनिं जयावहाम्। पद्मालयां परां शोभां पद्मरूपा ततोऽर्चयेत् ॥ २६ ॥ एवं चतुर्विंशति मातृः स्थापयेत्।

स्थाप० ॥१०॥ षट्कोणस्याग्नेयकोणे (वायव्यां) ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्था०॥११॥षट्कोणस्य पश्चिमकोणे (पूर्वे) ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुम् आवा० स्था० ॥१२॥ षट्कोणस्येइशानकोणे (नैर्ऋत्याम्) ॐभूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थाप०॥१३॥ ततः षट्कोणस्य परितः स्वाग्रतः कल्पितपूर्वादिक्रमेण चतुर्दिक्षु आदित्यादींश्चतुरो देवान् स्थापयेत्॥ पूर्वे (पश्चिमे) ॐभूर्भुवः स्वः आदित्याय नमः आदित्यम् आवा० स्थाप० ॥१४॥ दक्षिणे ( उत्तरे ) ॐ भूर्भुवः स्वः भास्कराय नमः भास्करम् आवा० स्थाप० ॥१५॥ पश्चिमे (पूर्वे) ॐ भूर्भुवः स्वः भानवे नमः भानुम् आवा० स्थाप० ॥१६॥ उत्तरे (दक्षिणे) ॐभूर्भुवः स्वः रवये नमः रविम् आवा० स्थाप० ॥१७॥ ततः षट्कोणस्य परितः कल्पिताग्नेय्यादिक्रमेण विदिक्षु चतस्रः उषादिदेवीः स्थापयेत्॥ आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः उषायै नमः उषाम् आवा० स्थाप० ॥१८॥ ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः प्रज्ञायै नमः प्रज्ञाम् आवा० स्थाप० ॥१९॥ नैर्ऋत्यां (ईशान्यां) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाम् आवा० स्थाप० ॥२०॥ वायव्यां (आग्नेय्यां) ॐभूर्भुवः स्वः सन्ध्यायै नमः सन्ध्याम् आवा० स्थाप० ॥ २१ ॥ ततः षट्कोणस्य कोणेषु परितः कल्पिताग्नेय्यादिक्रमेण षडङ्गानि स्थापयेत् ॥ आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः हृदयम् आवा० स्थाप० ॥ २२ ॥ ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः वरेणियं विष्ण्वात्मने शिरसे नमः शिरः आवा० स्थाप० ॥ २३ ॥ नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः भर्गो देवस्य धीमहि रुद्रात्मने शिखायै नमः शिखाम् आवा० स्थाप० ॥२४॥ वायव्यां (आग्नेय्यां) ॐभूर्भुवःस्वः धीमहि ईश्वरात्मने कवचाय नमः कवचम् आवा० स्थाप०॥२५॥पुरः। ॐभूर्भुवः स्वः धियो यो नः सदाशिवात्मने नेत्रत्रयाय नमः नेत्रत्रयम् आवा० स्थाप०॥२६॥ ततः कल्पितपूर्वादिक्रमेण चतुर्दिक्षु प्रादक्षिण्येन। पूर्वे(पश्चिमे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप० ॥२७॥ दक्षिणे (उत्तरे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥२८॥पश्चिमे (पूर्वे) ॐभूर्भुव स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥२९॥उत्तरे (दक्षिणे) ॐभूर्भुवः स्वः प्रचोदयात् अस्त्राय नमः अस्त्रम् आवा० स्थाप०॥३०॥एवं षडङ्गानि स्थापयित्वा अष्टपत्रेषु कल्पितपूर्वादिक्रमेण प्रह्लादिन्यादीरष्टौ देवीः स्थापयित्वा पुनर्द्विवारं तत्र-[1]

---

१ शारदातिलके—एकविंशतिपटले-ततः षडङ्गान्यभ्यर्चेत् केसरेषु यथाविधि ॥ २३ ॥ प्रह्लादिनीं प्रभां पश्चान्नित्यां विश्वम्भरां पुनः । विलासिनीप्रभावत्यौ जयां शान्तिं यजेत्पुनः ॥ २४ ॥ कान्तिं दुर्गासरस्वत्यौ विश्वरूपां ततः परम् । विशालसंज्ञितामीशां व्यापिनीं विमलां यजेत् ॥ २५ ॥ तमो पहारिणीं सूक्ष्मां विश्व-

वाष्टौ अष्टौ पूर्वतः प्रादक्षिण्येनैवं चतुर्विंशतिदेवीः स्थापयेत्। यथा पूर्वपत्रे(पश्चिमे)ॐ भूर्भुवः स्वः प्रह्लादिन्यै नमः प्रह्लादिनीम् आवा० स्थाप०॥३१॥आग्नेयपत्रे(वायव्यां) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाम् आवा० स्थाप० ॥३२॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः नित्यायै नमः नित्याम् आवा० स्थाप० ॥३३॥नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः विश्वम्भरायै नमः विश्वम्भराम् आवा० स्थाप०॥३४॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः विशालायै नमः विशालाम् आवा० स्थाप० ॥३५॥ वायव्यपत्रे (आग्नेय्यां) ॐ भूर्भुवः स्वः प्रभावत्यै नमः प्रभावतीम् आवा० स्थाप० ॥३६॥ उत्तरपत्रे (दक्षिणे) ॐ भूर्भुवः स्वः जयायै नमः जयायै आवा० स्थाप० ॥३७॥ ईशानपत्रे (नैर्ऋत्यां) ॐ भूर्भुवः स्वः शान्त्यै नमः शान्तिम् आवा० स्थाप०॥३८॥ एवम् अष्टौ देवीः स्थापयित्वा पुनः कल्पितपूर्वादिक्रमेणाष्टदेवीः स्थापयेत्। पूर्वपत्रे (पश्चिमे) ॐ भूर्भुवः स्वः कान्त्यै नमः कान्तिम् आवा० स्थाप० ॥ ३९॥ आग्नेयपत्रे (वायव्यां) ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गाम् आवा० स्थाप० ॥ ४० ॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः सरस्वत्यै नमः सरस्वतीम् आवा० स्थाप० ॥ ४१ ॥ नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः विश्वरूपायै नमः विश्वरूपाम् आवा० स्थाप० ॥ ४२ ॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः विशालायै नमः विशालाम् आवा० स्थाप० ॥ ४३ ॥ वायव्यपत्रे (आग्नेय्यां) ॐ भूर्भुवः स्वः ईशायै नमः ईशाम् आवा० स्थाप० ॥४४॥ उत्तरपत्रे (दक्षिणे) ॐ भूर्भुवः स्वः व्यापिन्यै नमः व्यापिनीम् आवा० स्थाप० ॥ ४५ ॥ ईशानपत्रे (नैर्ऋत्यां) ॐ भूर्भुवः स्वः विमलायै नमः विमलाम् आवा० स्थाप० ॥ ४६ ॥ पुनरपि अष्टदले कल्पितपूर्वादिक्रमेण प्रादक्षिण्येनाष्टौ देवीः स्थापयेत् ॥ पूर्वपत्रे (पश्चिमे) ॐ भूर्भुवः स्वः तमोपहारिण्यै नमः तमोपहारिणीम् आवा० स्थाप० ॥४७॥ आग्नेयपत्रे (वायव्यां) ॐ भूर्भुवः स्वः सूक्ष्मायै नमः सूक्ष्माम् आवा० स्थाप० ॥४८॥ दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः विश्वयोन्यै नमः विश्वयोनिम् आवा० स्थाप० ॥४९॥ नैर्ऋत्यपत्रे (ईशान्यां) ॐ भूर्भुवः स्वः जयायै नमः जयाम् आवा० स्थाप० ॥५०॥ पश्चिमपत्रे (पूर्वे) ॐ भूर्भुवः स्वः पद्मालयायै नमः पद्मालयामावा० स्थाप०॥५१॥वायव्यपत्रे(आग्नेय्यां) ॐ भूर्भुवः स्वः परायै नमः पराम् आवा० स्था० ॥५२॥उत्तरपत्रे(दक्षिणे)ॐ भूर्भुवः स्वः शोभायै नमः शोभाम् आवा० स्थाप०॥५३॥ ईशानपत्रे(नैर्ऋत्यां)ॐ भूर्भुवः स्वः पद्मरूपायै नमः पद्मरूपाम् आवा० स्थाप०॥५४॥

---

योनिं जयावह्वाम्। पद्मालयां परां शोभां पद्मरूपां ततोऽर्चयेत् ॥ २६ ॥ एवं चतुर्विंशति मातृः स्थापयेत्।

पुनस्तत्रैवाष्टदले पूर्ववत् ब्राह्म्यादीः स्थापयेत्॥पूर्वपत्रे (पश्चिमे) ॐभूर्भुवः स्वः ब्राह्म्यै नमः ब्राह्मीम् आवा० स्थाप० ॥५५॥ आग्नेयपत्रे (वायव्यां) ॐभूर्भुवः स्वः माहेश्वर्यै नमः माहेश्वरीम् आवा० स्थाप० ॥ ५६ ॥ दक्षिणपत्रे ( उत्तरे ) ॐभूर्भुवः स्वः कौमार्यै नमः कौमारीम् आवा० स्थाप०॥५७॥नैर्ऋत्यपत्रे (ईशान्यां) ॐभूर्भुवः स्वः वैष्णव्यै नमः वैष्णवीम् आवा० स्थाप० ॥५८॥ पश्चिमपत्रे (पूर्वे) ॐभूर्भुवः स्वः वाराह्यै नमः वाराहीम् आवा० स्थाप०॥५९॥वायव्यपत्रे (आग्नेय्यां) ॐभूर्भुवः स्वः इन्द्राण्यै नमः इन्द्राणीम् आवा० स्थाप० ॥६०॥ उत्तरपत्रे (दक्षिणे) ॐभूर्भुवः स्वः चामुण्डायै नमः चामुण्डाम् आवा० स्थाप० ॥ ६१ ॥ ईशानपत्रे ( नैर्ऋत्यां ) ॐभूर्भुवः स्वः अरुणायै नमः अरुणाम् आवा० स्थाप०॥६२॥ततोऽष्टपत्रस्य मध्ये बाह्ये च कल्पितपूर्वादिदिक्षु प्रादक्षिण्येन ग्रहान् स्थापयेत्। मध्ये। ॐभूर्भुवः स्वः सूर्याय नमः सूर्यम् आवा० स्थाप० ॥६३॥ पूर्वे (पश्चिमे) ॐभूर्भुवः स्वः सोमाय नमः सोमम् आवा० स्थाप०॥६४॥आग्नेय्यां (वायव्यां) ॐभूर्भुवः स्वः भौमाय नमः भौमम् आवा० स्थाप० ॥ ६५ ॥ दक्षिणे ( उत्तरे ) ॐ भूर्भुवः स्वः बुधाय नमः बुधम् आवा० स्थाप० ॥६६॥ नैर्ऋत्यां ( ईशान्यां ) ॐभूर्भुवः स्वः गुरवे नमः गुरुम् आवा० स्थाप० ॥६७॥ पश्चिमे (पूर्वे) ॐभूर्भुवः स्वः शुक्राय नमः शुक्रम् आवा० स्थाप० ॥६८॥ वायव्याम् (आग्नेय्यां) ॐ भूर्भुवः स्वः शनैश्चराय नमः शनैश्चरम् आवा० स्थाप०॥६९॥ उत्तरे (दक्षिणे) ॐभूर्भुवः स्वः राहवे नमः राहुम् आवा० स्थाप०॥७०॥ ईशान्यां (नैर्ऋत्यां) ॐभूर्भुवः स्वः केतवे नमः केतुम् आवा० स्था०॥७१॥ततः इन्द्रादीन्दश दिक्पालान् प्रसिद्धपूर्वादिक्रमेण प्रादक्षिण्येन स्वस्वदिक्षु स्थापयेत्॥प्रसिद्धपूर्वस्याम्। ॐभूर्भुवः स्वः इन्द्राय नमः इन्द्रम् आवा० स्थाप० ॥७२॥आग्नेय्याम्॥ॐभूर्भुवः स्वः अग्नये नमः अग्निम् आ० स्था०॥७३॥दक्षिणस्याम्। ॐभूर्भुवः स्वः यमाय नमः यमम् आ०स्था०॥७४॥नैर्ऋत्याम्। ॐभूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिम् आवा० स्थाप० ॥ ७५ ॥ पश्चिमायाम्। ॐभूर्भुवः स्वः वरुणाय

१ शारदातिलके–ब्राह्म्याद्याः सारुणा बाह्ये पूजयेत्प्रोक्तलक्षणाः। अस्य व्याख्यायां प्रोक्तलक्षणा इत्यस्य षष्ठपटलोक्ताः पूज्या इति कथितम् ॥ तथैव षष्ठपटले। ब्राह्मी माहेश्वरी भूयः कौमारी वैष्णवी तथा ॥ वाराह्यनन्तरैन्द्राणी चामुण्डा सप्तमी तथा ॥ अष्टमी स्यान्महालक्ष्मीः प्रोक्ताः स्युर्विश्वमातरः। परञ्च गायत्र्या यन्त्रदेवतावाहने महालक्ष्म्याः स्थाने अरुणाया आवाहनं कार्यम् इति विशेषः। पद्माचार्यास्तु 'तत्रारुणाऽधिका पूज्या' इत्यप्याहु'। इत्यपि शारदातिलके ॥

२ शारदातिलके एकविंशतिपटले–ततोऽर्चयेद् ग्रहान्बाह्ये शङ्खादीनायुधैः सह।

३ इन्द्रादींश्च स्वस्वदिक्षु। इन्द्रादिकांल्लोकपालान्स्वस्वदिक्षु समर्चयेत् ॥ इन्द्रेशानयोर्मध्ये ब्रह्माणं निर्ऋतिवरुणयोर्मध्येऽनन्तम् शारदाव्याख्यासहितायाम्–विधिमैशे विष्णुं नैर्ऋते ॥

नमः वरुणम् आवा० स्थाप० ॥७६॥ वायव्याम्। ॐ भूर्भुवः स्वः वायवे नमः वायुम् आवा० स्थाप० ॥ ७७ ॥ उत्तरस्याम्। ॐ भूर्भुवः स्वः कुबेराय नमः कुबेरम् आवा० स्थाप० ॥ ७८ ॥ ईशान्याम् । ॐ भूर्भुवः स्वः ईशानाय नमः ईशानम् आवा० स्थाप० ॥७९॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्। ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्थाप० ॥ ८० ॥ निर्ऋतिवरुणयोर्मध्ये अधः । ॐ भूर्भुवः स्वः अनन्ताय नमः अनन्तम् आवा० स्थाप० ॥ ८१ ॥ ततः प्रसिद्धपूर्वाद्यष्टदिक्षु । पूर्वस्याम्। ॐ भूर्भुवः स्वः वज्राय नमः वज्रम् आवा० स्थाप० ॥८२॥ आग्नेय्याम्। ॐ भूर्भुवः स्वः शक्तये नमः शक्तिम् आवा० स्थाप० ॥८३॥ दक्षिणस्याम् । ॐ भूर्भुवः स्वः दण्डाय नमः दण्डम् आवा० स्थाप० ॥८४॥ नैर्ऋत्याम् । ॐ भूर्भुवः स्वः खड्गाय नमः खड्गम् आवा० स्थाप० ॥ ८५ ॥ पश्चिमायाम्। ॐ भूर्भुवः स्वः पाशाय नमः पाशम् आवा० स्थाप० ॥ ८६ ॥ वायव्याम् । ॐ भूर्भुवः स्वः अङ्कुशाय नमः अङ्कुशम् आवा० स्थाप० ॥ ८७ ॥ उत्तरस्याम् । ॐ भूर्भुवः स्वः गदायै नमः गदाम् आवा० स्थाप० ॥ ८८ ॥ ईशान्याम् । ॐ भूर्भुवः स्वः त्रिशूलाय नमः त्रिशूलम् आवा० स्थाप० ॥ ८९ ॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्। ॐ भूर्भुवः स्वः अब्जाय नमः अब्जम् आवा० स्थाप० ॥ ९० ॥ निर्ऋतिवरुणयोर्मध्ये अधः । ॐ भूर्भुवः स्वः चक्राय नमः चक्रम् आवा० स्थाप० ॥९१॥ एवं भगवत्याः श्रीगायत्रीदेव्या यन्त्रे यन्त्रदेवता आवाह्य हस्ते अक्षतान् गृहीत्वा ॐ मनो जूतिर्जुषता० ॥ १/२ ॥ ॐ भूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्या यन्त्रे श्रीगायत्रीप्रभृतिचक्रायुधान्ताः सर्वा देवताः सुप्रतिष्ठिता वरदा भवत । एवं यन्त्रे देवताः प्रतिष्ठाप्य यन्त्रस्य प्राणप्रतिष्ठां कुर्यात् । यथा । हस्ते जलं गृहीत्वा । *अस्य श्रीप्राणप्रतिष्ठामहामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुःसामाथर्वाणि* छन्दांसि । चैतन्यं देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । अस्मिन् श्रीगायत्रीयन्त्रे प्राणप्रतिष्ठापनार्थे जपे विनियोगः ॥ ॐ अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः । ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः। ॐ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणप्राणात्मने ऊं मध्यमाभ्यां नमः। ॐ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः । ॐ ओं पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः। ॐ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः करतलकरपृष्ठाभ्यां नमः । एवं

हृदयादि । ॐ अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः । ॐ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा । ॐ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणप्राणात्मने ऊं शिखायै वषट् । ॐ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुम् । ॐ ओं पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं नेत्रत्रयाय वौषट् । ॐ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः अस्त्राय फट् ॥ ततो ध्यानम् । रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्च बाणान् ॥ बिभ्राणा सृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १ ॥ यन्त्रं स्पृष्ट्वा पठेत् । ॐआं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः अस्मिन्यन्त्रे श्रीगायत्र्यादिचक्रायुधान्तदेवतानां प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः अस्मिन्यन्त्रे श्रीगायत्र्यादिचक्रायुधान्तदेवतानां जीव इह स्थितः। ॐआं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः अस्मिन्यन्त्रे श्रीगायत्र्यादिचक्रायुधान्तदेवतानां सर्वेन्द्रियाणि वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ एवं यन्त्रे यन्त्राधिष्ठितदेवतानां प्राणप्रतिष्ठां कृत्वा भगवत्याः श्रीगायत्रीदेव्याः स्वर्णादिमूर्तिश्चेत् तस्या मूर्तेः अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठापनं कुर्यात् ॥ तद्यथा । एकस्मिन्पात्रे श्रीगायत्रीदेव्या मूर्तिं निधाय हस्ते जलं गृहीत्वा संकल्पं कुर्यात् । देशकालौ संकीर्त्य अस्या भगवत्याः श्रीगायत्रीदेवीमूर्तेः निर्माणेऽवघाताग्नितपनादिजनितदोषपरिहारार्थं देवतासान्निध्यार्थमग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये । मूर्तिं घृतेनाभ्यज्य तदुपरि जलधारां कुर्यात् ॥ समुद्रस्य त्वावकयाग्ने परि व्ययामसि ॥ पावकोऽअस्मभ्यं शिवो भव ॥ १८ ॥ हिमस्य त्वा जरायुणाग्ने परि व्ययामसि ॥ पावकोऽअस्मभ्यं शिवो भव ॥ १८ ॥ उपज्मन्नुप वेतसेऽवतर नदीष्वा ॥ अग्ने पित्तमपामसि मण्डूकि ताभिरा गहि सेमन्नो यज्ञं पावकवर्णं शिवं कृधि ॥ १८ ॥ अपामिदं न्ययनं समुद्रस्य निवेशनम् ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवो भव ॥ १८ ॥ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ॥ आ देवान्वक्षि यक्षि च ॥ १८ ॥ स नः पावक दीदिवोऽग्ने देवाँ २ ऽइहा वह ॥ उप यज्ञं हविश्च नः ॥ १८ ॥ पावकया यश्चितयन्त्या कृपा क्षामन्रुरुच ऽउषसो न भानुना ॥ तूर्वन्न यामन्नेतशस्य नू रणऽआ यो घृणे न ततृषाणोऽअजरः ॥ १८ ॥ नमस्ते

१ नात्र गर्भाधानादिसंस्कारार्थं षोडशप्रणवानां आवृत्तिः । गायत्र्यादीनां योनिसम्बन्धाभावात् ॥

हस्से शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवोभव ॥ ११ ॥ नृषदे वेडप्सुषदे वेड् बर्हिषदे वेड्वनसदे वेट् स्वर्विदे वेट् ॥ १२ ॥ ये देवा देवानाँय्यज्ञिया यज्ञियानाᳬं संवत्सरीणमुपभागमासते ॥ अहुतादो हविषो यज्ञेऽअस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥ १३ ॥ ये देवा देवेष्वधिदेवत्वमायन्ये ब्रह्मणः पुरऽएतारोऽअस्य ॥ येभ्यो नऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्याऽअधिस्नुषु ॥ १४ ॥ प्राणदाऽअपानदा व्यानदा वर्चोदा वरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यं शिवोभव ॥ १५ ॥

एवं जलधारां कृत्वा प्राणप्रतिष्ठापनं कुर्यात् ॥ हस्ते जलं गृहीत्वा । अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ॥ ऋग्यजुःसामानि छन्दांसि ॥ पराशक्तिर्देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । अस्या भगवत्याः श्रीगायत्रीदेव्या मूर्तौ प्राणप्रतिष्ठापने विनियोगः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों अस्या गायत्रीदेव्या मूर्तेः प्राणा इह प्राणाः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों अस्या गायत्रीदेव्या मूर्तेः जीव इह स्थितः ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं ॐ क्षं सं हं सः ह्रीं ॐ आं ह्रीं क्रों अस्या गायत्रीदेव्या मूर्तेः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ ततो हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा स्वहृदि स्थितां साङ्गां सावरणां सायुधां श्रीगायत्रीदेवीं नेत्रे निमील्य हृदि क्षणं ध्यात्वा तत्तेजः स्वकीयाञ्जलौ स्थितेषु पुष्पेष्वागतं विभाव्य तत् सौवर्णादिमूर्तौ गायत्रीदेवीस्वरूपेण प्रतिष्ठापयेत् ॥ तद्यथा । ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टँय्यज्ञᳬं समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ १२ ॥ ॐ एष वै प्रतिष्ठानामयज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितम्भवति । अस्यां सुवर्णमूर्तौ भगवती श्रीगायत्रीदेवी सुप्रतिष्ठिता वरदा भव ॥ एवं प्राणप्रतिष्ठां विधाय भगवत्याः श्रीगायत्रीदेव्या मूर्तिं पुनः पात्रे निधाय हस्तेऽक्षतान्गृहीत्वा आवाहनं कुर्यात् ॥ आवाहनम्—ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिᳬं सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि । गायत्रि छन्दसां मातर्ब्रह्मयोने नमोऽस्तु ते । जगन्मयत्वञ्च तथा ह्यजत्वं लोके प्रसिद्धं तव देवि जाने । तथापि मूर्तौ हृदयारविन्दादावाहनं ते जननि प्रकुर्वे ॥ १ ॥ आत्मसंस्थामजां शुद्धां त्वामहं परमेश्वरीम् । अरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ॥ आवाहये महादेवीं हृदयाम्बुजगह्वरात् । सूर्यमण्डल-

तो वाऽपि स्वीयाद्वा हृदयान्ततः । इति अक्षतान् भगवत्याः श्रीगायत्रीदेव्या मूर्तौ निधाय "भो गायत्रीदेवि त्वम् अस्यां मूर्तावावाहिता भव" इति आवाहनमुद्रां[1] प्रदर्शयेत् । ततो भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रमुच्चार्य । यावत्प्रकुर्यां तव देवि पूजां समन्वितायाः परिवारदेवैः । संस्थापिता त्वं भव देवि तावद्देवेऽत्र मूर्तौ हि समस्तदेवैः ॥ देवेशि भक्तिसुलभे परिवारसमन्विते । यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥ तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगां तथा ॥ भक्तिस्नेहसमाकृष्टां दीपवत्स्थापयाम्यहम् ॥ "भो गायत्रीदेवि त्वम् अस्यां मूर्तौ संस्थापिता भव" इति संस्थापनमुद्रां[2] प्रदर्शयेत् ॥ ततः स्वागतं कुर्यात् । आलोकनं क्रतुभुजो हृदयेन यस्या वाञ्छन्ति मातरनिशं करसम्पुटाभ्याम् ॥ त्रैलोक्यमातुरथ ते कनकस्य मूर्तौ सुस्वागतं भगवतीह हृदा प्रकुर्वे ॥ यस्या दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये । तस्यास्ते परमेशायाः कुर्वेऽहं स्वागतं बहु ॥ कृतार्थोऽनुगृहीतोऽस्मि सफलं जीवितं मम । आगतायास्तु देवेशि सुस्वागतमिदं पुनः ॥ भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ सुस्वागता भव । तत आसनम् । हस्तेऽक्षतानादाय पुनर्मूलमन्त्रमुच्चार्य । ॐ पुरु॑षऽए॒वेदꣳ सर्वं॒ यद्भू॒तं यच्च॒ भाव्य॑म् । उ॒तामृ॑त॒त्वस्ये॑शा॑नो॒ यदन्ने॑नाति॒रोह॑ति ॥ $\frac{२}{३१}$ ॥ अस्मिन्वरे स्वासनपीठयुक्ते सौवर्णवर्णे कुशकम्बलाढ्ये । त्वं तिष्ठ चास्मत्सुमुखी दयार्द्रे यावत्समर्चां तव देवि कुर्वे ॥ एतद्वरासनं देवि सर्ववीजमयं शुभम् । स्वात्मस्थायै मया दत्तं गृहाण चोत्तमोत्तमम् । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः आसनार्थे अक्षतान्सम० । ततः प्रार्थयेत् ॥ मातस्त्वां प्रार्थये नत्वा मूर्तावस्यां वरासने ॥ यावत्पूजां करिष्यामि तावत्स्यास्त्वं प्रतिष्ठिता । भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ सुप्रतिष्ठिता भव ॥ इति पुष्पाञ्जलिं अक्षतान् वा देव्यै दत्वा भगवत्याः श्रीगायत्रीदेव्याः सुप्रतिष्ठितत्वं भावयेत् । ततः पुनर्मूलमन्त्रमुच्चार्य । जगति जननि नास्ति त्वदृते दृश्यमानं विदितमपि हि सर्वैर्व्याप्य विष्वक् स्थिता त्वम् ॥ कनकविरचितायां सन्निधिं देवि मूर्तौ कुरु भगवति यावत्पूजनं ते प्रकुर्वे ॥ अनन्या तव देवेशि मूर्तिः शक्तिरियं भुवि ॥ सान्निध्यं

१ सम्यक्सम्पूरितः पुष्पैः कराभ्यां कल्पितोऽञ्जलिः । आवाहनी समाख्याता मुद्रा देशिकसत्तमैः ॥१०७॥ शारदातिलकस्य त्रयोविंशतिपटले तथैव तन्त्रान्तरे च—हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वयोः । अङ्गुष्ठौ विन्यसेत्सेयं मुद्रा त्वावाहनी स्मृता ॥

२ अधोमुखी कृता सैव प्रोक्ता स्थापनकर्मणि ॥ इदमपि शारदातिलके त्रयोविंशतिपटले । आवाहनीमुद्राया अधोकरणमेव संस्थापनमुद्राया लक्षणम् ॥

कुरु तस्यां त्वं भक्तानुग्रहतत्परा ॥ भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ सन्निहिता भव। इति सन्निहितमुद्रां प्रदर्शयेत् ॥ हस्तेऽक्षतानादाय । पुनर्मूलमंत्रमुच्चार्य। संव्याप्य काष्ठे परितः प्रविष्टः संरुद्ध आस्ते हुतभुग् यथा वै ॥ अस्यां तथा स्याः परिसन्निरुद्धा यावत्त्वदर्चां प्रकरोमि मातः ॥ आज्ञया तव देवेशि देवानां तृप्तिहेतवे। त्वामत्र मूर्तौ पूजार्थं संरुणध्मि सुरेश्वरि ॥ "भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ सन्निरुद्धा भव"। इति अक्षतान् देव्याः शिरसि दत्वा सन्निरुद्धमुद्रां प्रदर्शयेत् ॥ पुनर्मूलमन्त्रमुच्चार्य । न ज्ञायते तेऽर्चनकल्पशास्त्रं पूजोपहारा अपि नैव पूर्णाः ॥ भवेच्च पूर्णोऽभिमुखी भवेस्त्वं ह्यपूर्णकल्पश्च मया कृतश्चेत् ॥ अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च। अपूर्णं पूर्णतां याति त्वं यदाऽभिमुखी तदा॥ "भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ अभिमुखी भव" इति सन्मुखीमुद्रां प्रदर्शयेत् ॥ पुनर्मूलमन्त्रमुच्चार्य । हस्तेऽक्षतान्गृहीत्वा। ये ये न मातर्मनसाऽपि पूजां कुर्वन्ति ते ते मनसोऽपि दूराः ॥ यस्याश्च कान्तिर्ह्यमितप्रभाभिर्व्याप्ता त्वमस्यामवगुण्ठिता भव ॥ अमृतद्रववर्षिण्या दृष्ट्या मूर्तौ महेश्वरि। अस्यां लोकावलोकाय भव त्वमवगुण्ठिता ॥ "भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ अवगुण्ठिता भव"। इति वदन् अक्षतान् देव्याः शिरसि दत्वा अवगुण्ठनमुद्रां प्रदर्शयेत् ॥ ततः पूर्ववत् भगवत्याः श्रीगायत्रीदेव्याः षडङ्गन्यासेन सकलीकरणं कुर्यात् । तद्यथा। भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रमुच्चार्य। जगति किमपि नास्ति त्वद्दृते दृश्यमानं विदितमपि हि सर्वं व्याप्य विष्वक् स्थिता त्वम् ॥ कनकविरचितायां पूजनं देवि मूर्तौ तव जननि षडङ्गन्यासरूपेण कुर्वे। 'ॐ भूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्या हृदयाय नमः' इति भगवत्याः श्रीगायत्रीदेव्या हृदयं स्पृशेत् ॥ पुनर्मूलमंत्रमुच्चार्य। 'ॐ भूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्याः शिरसे स्वाहा' इति भगवत्याः श्रीगायत्रीदेव्याः शिरः स्पृशेत् ॥ पुनर्मूलमंत्रमुच्चार्य। 'ॐभूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्याः शिखायै वषट्' इति भगवत्याः श्रीगायत्रीदेव्याः शिखां स्पृशेत् ॥ पुनर्मूलमन्त्रमुच्चार्य। 'ॐभूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्याः कवचाय हुम्' इति भगवत्याः

१ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका। सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः।

२ अङ्गुष्ठगर्भिणी सैव सन्निरोधा प्रकीर्तिता।

३ उत्तानौ द्वौ कृतौ मुष्टी सन्मुखीकरणी स्मृता।

४ अवगुण्ठनं नाम अयोग्यदृष्ट्यविषयत्वापादनम् ॥ इयं मुद्रा १७८ पृष्ठे प्रदर्शिता।

५ तत्र देवताङ्गे षडङ्गन्यासात् ॥

श्रीगायत्रीदेव्या दक्षिणवामकरौ स्पृशेत् ॥ पुनर्मूलमंत्रमुच्चार्य । 'ॐ भूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्या नेत्रत्रयाय वौषट्' इति भगवत्याः श्रीगायत्रीदेव्या नेत्रत्रयं स्पृशेत् ॥ पुनर्मूलमन्त्रमुच्चार्य । 'ॐ भूर्भुवः स्वः भगवत्याः श्रीगायत्रीदेव्या अस्त्राय फट्' इति भगवत्याः श्रीगायत्रीदेव्याः समंताच्चतुर्दिक्षु अस्त्रमुद्रां प्रदर्शयेत् ॥ एवं षडङ्गन्यासेन सकलीकरणं[1] कृत्वा । पुनर्मूलमन्त्रमुच्चार्य । 'ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नम' इति "भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ अमृतीकृता भव इति अमृतीकरणमुद्रां[2] प्रदर्शयेत् ॥ पुनर्मूलमन्त्रमुच्चार्य । 'ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नम' इति "भो भगवति श्रीगायत्रीदेवि त्वम् अस्यां मूर्तौ परमीकृता भव" इति परमीकरणमुद्रां[3] प्रदर्शयेत् । एवं मुद्राः[4] प्रदर्श्य । किञ्चिदर्घोदकं गृहीत्वा । तेन जलेन भगवतीं श्रीगायत्रीदेवीं शिरसि सम्प्रोक्ष्य । पुनर्मूलमंत्रमुच्चार्य । वरदम् । अभयम् । अङ्कुशम् । कशाम् । कपालम् । गुणम् । शङ्खम् । चक्रम् । अब्जम् । कमलम् । इति मुद्राः प्रदर्श्य पाद्यादि दद्यात् ॥ तत्रादौ मूलमंत्रमुच्चार्य भगवतीं श्रीगायत्रीदेवीं पूजयेत् ॥ ततः पाद्यम् । मूलमंत्रेण पाद्यपात्राज्जलं गृहीत्वा । ॐ एतावानस्य महिमातोज्यायाँश्च पूरुषः ॥ पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ $\frac{३}{३}$ ॥ श्यामाकदूर्वाब्जपदार्थमिश्रं पाद्यं मया ते पदयोः प्रयुक्तम् । मातस्तथैवाशु ममापि नित्यं ते पादयोरस्त्वनिशं निवासः ॥ यद्भक्तिलेशसंपर्कात्परमानन्दसंभवे । भवत्यानन्दसंप्राप्तिस्तस्यै पाद्यं प्रकल्पये । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः पादयोः पाद्यं सम० ॥ कलशपात्राज्जलं गृहीत्वा । पाद्यान्ते शुद्धोदकं समर्प० ॥ शुद्धोदकान्ते आचमनीयपात्राज्जलं गृहीत्वा । आचमनीयं सम० ॥ ततोऽर्घः । मूलमन्त्रमुच्चार्य । अर्घपात्रात्किञ्चिज्जलं पात्रान्तरेणादाय ।

१ सकलीकरणं नाम पूर्णरूपत्वेन मूर्तावस्थितिप्रार्थनम् ॥

२ अन्योन्याभिमुखाश्लिष्टकनिष्ठाऽनामिका पुनः । तथा च तर्जनी मध्या धेनुमुद्रा समीरिता । अमृतीकरणं कुर्यात्तया देशिकसत्तम ॥ ३ अन्योन्यग्रथितांगुष्ठा प्रसारितकराङ्गुली । महामुद्रेयमुदिता परमीकरणे बुधैः ॥ प्रयोजयेदिमा मुद्रा देवतायागकर्मणि ॥

४ शारदातिलके तृतीयपटले आवाहनादिमुद्राणामावश्यकत्वं द्योतितं तत्तन्मुद्राप्रदर्शनपूर्वकं सर्वत्र मूर्तौ देवतासान्निध्यकरणं विधेयम् । आवाह्य पूजयेत्तस्यां मंत्री मन्त्रस्य देवताम् । मूलमन्त्रं समुच्चार्य सुषुम्णा वर्त्मना सुधी. ॥ आनीय तेजः स्वस्थानाद्नासिकारन्ध्रनिर्गतम् । करस्थमातृकाम्भोजे चैतन्यपुष्पसञ्चये ॥ संयोज्य ब्रह्मरन्ध्रेण मूर्तावावाहयेत्सुधी. । संस्थापनं सन्निधानं सन्निरोधनमतः परम् ॥ सकलीकरणं पश्चाद्दिग्ध्यादवगुण्ठनम् । अमृतीकरणं कृत्वा कुर्वीत परमीकृतिम् ॥ क्रमादेतानि कुर्वीत स्वमुद्राभिः समाहितः ॥ तथैव त्रयोविंशतिपटलेऽपि-मुदं ददातीति मुद्रा इति लक्षणमुक्त्वा "मोदन्त सर्वदेवता.", इत्यप्युक्त्वा देवतासान्निध्यार्थं जपादौ मुद्रायाः प्रदर्शनस्य प्रयोजनं चक्ति । पृथिव्यादीनि भूतानि कनिष्ठाद्याः क्रमान्मताः । तेषामन्योन्यसम्भेदप्रसरे स्वप्रपञ्चता । अर्चने जपकाले तु ध्याने काम्ये च कर्मणि । तत्तन्मुद्राः प्रयोक्तव्या देवतासन्निधापिकाः ।

ॐ त्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥ ततो विष्वङ् व्यक्रामत्साशनानशनेऽअभि ॥ ३।४ ॥ दर्भाग्रदूर्वातिलसर्षपाणि प्रक्षिप्य मातः कृतमर्घपात्रम् ॥ तस्माच्च ते मूर्ध्नि मया कराभ्यां सन्दीयते चार्घजलं गृहाण ॥ तापत्रयहरं दिव्यं परमानन्दलक्षणम् । तापत्रयापुते शीर्ष्णि तवार्घ्यं कल्पयाम्यहम् ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः हस्तयोः ( शिरसि ) अर्घ्यं समर्पयामि[1] ॥ इति अर्घ्यं हस्तयोः शिरसि वा दत्वा । अर्घ्यान्ते आचमनीयपात्रादाचमनीयं समर्प० ॥ तत आचमनीयम् । ॐ ततो विराडजायत विराजोऽअधिपूरुषः ॥ सजातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ३।५ ॥ श्रीसंज्ञकं कोललवङ्गमिश्रं सुस्वादु तत्तद्द्रवयुक्तशुद्धम् सम्मन्त्रितं वैदिकमन्त्रकैस्तद्गायत्रि देव्याचमनं गृहाण ॥ वेदानामपि वेद्यायै देवानां देवतात्मने । मया ह्याचमनं दत्तं गृहाण जगदीश्वरि ॥ ॐ भूर्भुवः स्वः श्रीगायत्रीदेव्यै नमः आचमनीयं समर्प० ॥ ततो मधुपर्कः । मधुपर्कपात्रात्किञ्चिन्मधुपर्कमादाय । ॐ यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानि ॥ कनकघटितपात्रे वेदमन्त्रैस्त्वदर्थं दधिमधुघृतभागान्देवि कृत्वा सुमिश्रान् । अमृतमयमिदं त्वद्दृष्टिपातेन कृत्वा भगवति मधुपर्कं दीयमानं गृहाण ॥ सर्वकालुष्यहीनायै परिपूर्णसुखात्मने । मधुपर्कमिदं तुभ्यं देवि दत्तं प्रसीद च ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः मधुपर्कं सम० । मधुपर्कान्ते आचमनीयपात्रादाचमनीयं सम०[2] ॥ ततः पञ्चामृतस्नानम् । तत्रादौ पयःस्नानम् । ॐ पयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयो धाः ॥ पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ १८।३६ ॥ येन क्रियन्ते सकलाः क्रिया वै यज्ञस्य होमादिविधौ प्रयुक्ताः । तुष्टानि भूतानि तथा भवन्ति स्नानाय तद्दुग्धमहं ददामि ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः पयःस्नानं समर्पयामि । पयःस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं सम० ॥ ततो दधिस्नानम् । ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः ॥ सुरभि नो मुखा करत्प्रण ऽआयूꣳषि तारिषत् ॥ २३।३२ ॥ सच्चन्द्र शुद्धं शशिना समप्रभं ह्याम्लञ्च किञ्चिन्मधुरं मनोहरम् । स्नानाय तुभ्यं दधि देवि दत्तं ह्यङ्गीकुरु त्वं परिवारयुक्ता । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः दधिस्नानं समर्प० । दधिस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं सम० । ततो घृतस्नानम् ॥ घृतेनाञ्जन्सम्पथो देवयानान्प्र-

१ अर्घ्यं शिरस्तो मूर्ध्नि शिरोनभेण देविद्धः ॥ इति शारदातिलके ।
२ दध्यं च मधुपर्के च स्नाने वस्त्रोपवीतयोः । भोजने चाचमनं देयम् । इति ज्ञानमालायाम् ॥

जानन्त्वाज्यप्प्यैतुदेवान् ॥ अनुत्वासन्तेप्प्रदिशं सचन्ताᳪस्वधामस्म्मैयजमानाय धेहि ॥ ३६ ॥ हव्यानि यस्मात्प्रभवन्ति लोके निवर्त्यतेऽग्नौ हवनञ्च येन। तृप्ता श्च येन द्विजदेवताता दास्ये घृतं तत्स्नपनाय देवि ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः घृतस्नानं समर्प० । घृतस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं समर्प० । ततो मधुस्नानम् ॥ स्वाहामरुद्भिःपरिं श्रीयस्वदिवःसᳪस्पृशस्पाहि ॥ मधुमधुमधु ॥ १३७ ॥ पुष्पेभ्य आदाय रसान् समग्रानेकीकृतं यन्मधुमक्षिकाभिः । तत्स्वादु तुभ्यं मधुरं वरेण्यं स्नानाय दास्ये मधु देवि मातः ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः मधुस्नानं सम० । मधुस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं सम० ॥ ततः शर्करास्नानम् । ॐ अपाᳪरसमुद्वयसᳫसूर्य्येसन्तᳫसमाहितम् ॥ अपाᳪरसस्ययोरसस्तम्वोगृह्णाम्म्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टंगृह्णाम्म्येपतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ ३६ ॥ अन्नानि मिष्टानि यया भवन्ति तृप्तिं तथा भूतगणा लभन्ते । तां शर्करां देवि शशिप्रभाभां स्नानाय दत्तां मधुरां गृहाण ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः शर्करास्नानं सम० । शर्करास्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं स० ॥ ततो गन्धोदकस्नानम् ॥ ॐगन्धर्वस्त्वाविश्वावसुः परिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरिडऽईडितः ॥ ३ ॥ सौगन्ध्ययुक्तं द्रवद्रव्यजातं घृष्टञ्च काश्मीरककस्तुरीभिः । गन्धोदकं तुभ्यमिदं प्रदत्तं स्नानार्थमङ्गीकुरु देवि मातः । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः गन्धोदकस्नानं सम० । गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं सम० ॥ ततस्तैलेनोद्वर्तनस्नानम्[1] ॥ ॐअᳫशुनातेऽअᳫशुःपृच्यताम्परुषापरुः ॥ गन्धस्तेसोममवतुमदायरसोऽअच्युतः ॥ २७ ॥ तैलं समाकृष्य कृतं तिलेभ्यः पुष्पाणि निक्षिप्य सुवासितानि । स्नेहं गृहाण स्नपनाय देवि स्नेहेन चास्मानवलोकयाशु ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः तैलेनोद्वर्तनस्नानं सम०[2] ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयपात्रादाचमनीयं सम० । ततो भगवतीं श्रीगायत्रीदेवीं मूलमन्त्रेण गन्धाक्षतपुष्पैः

१ मातः कुंकुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं भक्त्याऽहं कलयामि हेमरजसा सम्मिश्रितं केसरैः । केशानामलकैर्विशोध्य विशदान्कस्तूरिकार्चितैः स्नानं ते नवरत्नकुंभविधिना संवासितोष्णोदकैः ॥

२ रजनी सहदेवी च शिरीषो लक्ष्मणापि च । सदा भद्रा कुशाग्राणि उद्वर्तनमिहोच्यते । अथवा । गन्धतैलमथो दद्याद्देवस्याग्रविमं ततः । इति महाकपिलपञ्चरात्रे ॥

सम्पूज्य ॥ निर्माल्यं विसृज्य पुनः गन्धपुष्पैः सम्पूज्य गन्धमिश्रितैस्तोयैरभिषेकं कुर्यात्॥ तत्रादावभिषेकपात्रे एव भगवत्याः श्रीगायत्रीदेव्याः स्नानशालां भावयेत् ॥ हस्ते जलं गृहीत्वा । अस्य श्रीगायत्रीकवचस्तोत्रमन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुःसामाथर्वाणि छन्दांसि । परब्रह्मस्वरूपिणी गायत्री देवता । तद्बीजम् । भर्गः शक्तिः । धियः कीलकम् । मोक्षार्थे अभिषेके विनियोगः । ॐतत्सवितुर्ब्रह्मात्मने हृदयाय नमः। ॐवरेण्यं विष्ण्वात्मने शिरसे स्वाहा। ॐभर्गो देवस्य रुद्रात्मने शिखायै वषट् । ॐधीमहि ईश्वरात्मने कवचाय हुम् । ॐधियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट् । ॐ प्रचोदयात्परब्रह्मतत्त्वात्मने अस्त्राय फट् । अथ ध्यानम् । मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुकलानिबद्धमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥१॥ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे । ब्रह्मसंध्या तु मे पश्चादुत्तरस्यां सरस्वती ॥१॥ पावकीं च दिशं रक्षेत्पावमानी विलासिनी । दिशं रौद्रीं च मे पातु रुद्राणी रुद्ररूपिणी ॥ २ ॥ ऊर्ध्वं ब्रह्माणी मे रक्षेदधस्ताद्वैष्णवी तथा । एवं दश दिशो रक्षेत्सर्वाङ्गे भुवनेश्वरी ॥ ३ ॥ तत्पदं पातु मे पादौ जङ्घे मे सवितुः पदम् । वरेण्यं कटिदेशे तु नाभिं भर्गस्तथैव च ॥ ४ ॥ देवस्य मे तु हृदयं धीमहीति च गल्लयोः । धियःपदं च मे नेत्रे यःपदं मे ललाटके ॥ ५ ॥ नःपदं पातु मे मूर्ध्नि शिखायां मे प्रचोदयात् । तत्पदं पातु मूर्धानं सकारः पातु भालकम् ॥ ६ ॥ चक्षुषी तु विकारार्णं तुकारस्तु कपोलयोः । नासापुटे वकारश्च रेकारस्तु मुखे तथा ॥ ७ ॥ णिकार ऊर्ध्व ओष्ठे तु यकारस्त्वधरोष्ठके । आस्यमध्ये भकारस्तु र्गोकारश्चिबुके तथा ॥ ८ ॥ देकारः कण्ठदेशे तु वकारः स्कन्धदेशके । स्यकारो दक्षिणे हस्ते धीकारो वामहस्तके ॥ ९ ॥ मकारो हृदयं रक्षेद्धिकार उदरे तथा । धिकारो नाभिदेशे तु योकारस्तु कटिं तथा ॥१०॥ गुह्यं रक्षतु योकार ऊरुणी नःपदाक्षरम् । प्रकारो जानुनी रक्षेच्चोकारो जङ्घदेशकम् ॥ ११ ॥ दकारो गुल्फदेशेषु याकारः पादयुग्मकम् । तकारव्यञ्जनं चैव देवताभ्यो नमो नमः ॥ १२ ॥ इदं तु कवचं दिव्यं वद्ध्वा शत्रून्विनाशयेत् ।

१ शुद्धतोयाद्गन्धतोयं श्रेष्ठं शतगुणोत्तरम् । गङ्गादितीर्थतोयानां फलं शास्त्रप्रणोदितम् । इति मन्त्रप्रकाशे ॥ अर्थादभिषेकोऽपि गन्धमिश्रितेन तोयेनैव कर्तव्यः । तथैव महास्नानमपि कर्तव्यम् ॥

२ हेमरत्नवरणेन वेष्टितं विस्तृतारुणवितानशोभितम् । सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनोहरम् । कनककलशजालस्फाटिकस्नानपीठाद्युपकरणविशालं गन्धमत्तालिजालम् ॥ स्फुरदरुणवितानं [illegible]गन्धर्वगानश्रुतिजननि नमस्ते मज्जनागारमेहि ॥

चतुःषष्टिकला विद्या अङ्गाद्यखिलपातकैः ॥ मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥ १३ ॥ इति गायत्रीकवचं समाप्तम् ॥

अथ तान्त्रिकस्तोत्रं वसिष्ठसंहितायाम् ।

नमस्ते देवि गायत्रि सावित्रि त्रिपदेऽक्षरे । अजरे अमरे मातस्त्राहि मां भवसागरात् ॥ १ ॥ नमस्ते सूर्यसंकाशे सूर्यसावित्रिकेऽमले । ब्रह्मविद्ये महाविद्ये वेदमातर्नमोऽस्तु ते ॥ २ ॥ अनन्तकोटिब्रह्माण्डव्यापिनि ब्रह्मचारिणि । नित्यानन्दे महामाये परेशानि नमोऽस्तु ते ॥ ३ ॥ त्वं ब्रह्मा त्वं हरिः साक्षाद्रुद्रस्त्वमिन्द्रदेवता । मित्रस्त्वं वरुणस्त्वं च त्वमग्निरश्विनौ भगः ॥४॥ पूषाऽर्यमा मरुत्वांश्च ऋषयोऽपि मुनीश्वराः । पितरो नागा यक्षाश्च गन्धर्वाप्सरसां गणाः ॥ ५ ॥ रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि । ऋग्यजुःसामविद्याश्च ह्यथर्वाङ्गिरसानि च ॥ ६ ॥ त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिताः । पुराणानि च तन्त्राणि महागममतानि च ॥७॥ त्वमेव पञ्च भूतानि तत्त्वानि जगदीश्वरि । ब्राह्मी सरस्वती संध्या तुरीया त्वं महेश्वरि ॥ ८ ॥ तत्सद्ब्रह्मस्वरूपा त्वं किंचित्सदसदात्मिका । परात्परेशि गायत्रि नमस्ते मातरम्बिके ॥ ९ ॥ चन्द्रे कलात्मिके नित्ये कालरात्रि स्वधे स्वरे । स्वाहाकारेऽग्निवक्त्रे त्वां नमामि जगदीश्वरि ॥ १० ॥ नमो नमस्ते गायत्रि सावित्रि त्वां नमाम्यहम् । सरस्वति नमस्तुभ्यं तुरीये ब्रह्मरूपिणि ॥११॥ अपराधसहस्राणि त्वसत्कर्मशतानि च । मत्तो जातानि देवेशि त्वं क्षमस्व दिने दिने ॥ १२ ॥ इति गायत्रीस्तोत्रं समाप्तम् । ततः श्रीसूक्तेनाप्यभिषेकः कार्यः ।

हरिः ॐ ॥ हिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह ॥१॥ तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंविन्देयंगामश्वंपुरुषानहम् ॥२॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रबोधिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषताम् ॥३॥ कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् । पद्मेस्थितांपद्मवर्णांतामिहोपह्वयेश्रियम् । चंद्रांप्रभासांयशसाज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् ॥ ४ ॥ तांपद्मिनीमींशरणमहंप्रपद्येऽलक्ष्मीर्मेनश्यतांत्वांवृणे ॥ ५ ॥ आदित्यवर्णेतपसोऽधिजातोवनस्पतिस्तववृक्षोथबिल्वः ॥ तस्यफलानितपसानुदन्तुमायांतरायाश्चबाह्याऽअलक्ष्मीः ॥६॥ उपैतुमांदेवसखःकीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे ॥७॥ क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥८॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥९॥ मनसःकाममाकूतिंवाचःसत्य-

मद्धीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ १० ॥ कर्दमेनप्रजाभूतामयिसंभवकर्दम॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम्॥११॥आपःस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे । निचदेवींमातरंश्रियंवासयमेकुले॥१२॥आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममालिनीम् । सूर्यांहिरण्मयींलक्ष्मींजातवेदोमआवह॥१३॥आर्द्रांयःकरिणींयष्टिंपिंगलांपद्ममालिनीम् । चंद्रांहिरण्मयींलक्ष्मींजातवेदोमआवह॥१४॥तांमआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ यस्यांहिरण्यंप्रभूतंगावोदास्योश्वान्विन्देयंपुरुषानहम्॥१५॥ यःशुचिःप्रयतोभूत्वाजुहुयादाज्यमन्वहम् ॥ सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् । पद्माननेपद्मऊरूपद्माक्षींपद्मसंभवे ॥ तन्मेभजासिपद्माक्षीयेनसौख्यंलभाम्यहम् । अश्वदायैगोदायैधनदायैमहाधने ॥ धनंमेजुषतांदेविसर्वकामांश्चदेहिमे ॥ पद्माननेपद्मविपद्मपत्रेपद्मप्रियेपद्मदलायताक्षी॥विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसंनिधत्स्व ॥ पुत्रपौत्रधनंधान्यंहस्त्यश्वादिगवेरथम् ॥ प्रजानांभवसिमाताआयुष्मंतंकरोतुमे ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥ धनमिंद्रोबृहस्पतिर्वरुणंधनमस्तुमे ॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ नक्रोधोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवन्तिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ सरसिजनिलये सरोजहस्ते धवलतरांशुकगंधमाल्यशोभे ॥ भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥ विष्णुपत्नींक्षमांदेवीं माधवीं माधवप्रियाम्॥ लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्॥महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्शोभमानंमहीयते ॥ धनंधान्यंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥ इति श्रीसूक्तं समाप्तम् ॥ शान्तिः ॥ शान्तिः ॥ सुशान्तिर्भवतु ॥ अमृताभिषेकोऽस्तु ॥ ततः शुद्धोदकस्नानम् ॥ ॐशुद्धवालःसर्वशुद्धवालोमणिवालस्तऽआश्विनाःश्येतःश्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाऽअवलिप्तारौद्रानभोरूपाःपार्जन्याः ॥ २४ ॥ गाङ्गं कवन्धं यमुनाजलेन सम्मिश्रितं केशरचन्दनेन । स्नानाय मातस्तव देवि शुद्धं ह्युष्णं च शीतं सलिलं गृहाण ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ।ततो भगवतीं श्रीगायत्रीदेवीं सिंहासने स्थापयेत् ॥ ततः पादुकार्पणम् । उपास्य यस्याश्चरणौ सुरेशः स्वर्गस्य लक्ष्मीं बुभुजे सुखेन ।

१ बहुर्भरगन्धद्रवैः सुरभिणा कस्तूरिकावारिणा स्फुरज्जल्पौरभयक्षकर्दमजलैः काश्मीरनीलैरपि ॥ पुष्पाम्भोभिरसेषतीर्थसलिलैः कर्पूरपाथोभरैः स्नानं ते परिकल्पयामि जननी मातस्त्वदङ्घ्रिद्वय ॥ परमानन्दबोधाब्धिनिमग्ननिजमूर्तये । साङ्गोपाङ्गमिदं स्नानं कल्पयामि जगत्प्रसूः ॥

२ नवरत्नयूने मयार्पिते कमनीये तपनीयपादुके । सविलासमिदं पदद्वयं कृपया देवि तयोर्निधीयताम् ॥

भक्त्यैव जंतुः प्रभवेद्धराढ्यस्ते पादुके त्वं पदयोर्गृहाण ॥ ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः चरणयोः पादुके सम० ॥ ततो वस्त्रोपवस्त्रे ॥ ॐसुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥ ४/१ १/१ ॥ विचित्रवर्णं ह्युपवस्त्रयुक्तं कौशेयकं चारु नवं मनोहरम् ॥ गायत्रि संवीक्ष्य मदीयशक्तिं वस्त्रं गृहाणाशु मयार्पितं ते । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः उपवस्त्रसहितं वस्त्रं सम० ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥ ततोऽलङ्कारान् दद्यात् ॥ तत्रादौ हस्तयोः कङ्कणानि । माणिक्यमुक्तामणिखण्डयुक्ते सुवर्णकारेण च संस्कृते ये । ते किंकिणीभिः स्वरिते सुवर्णे मयार्पिते देवि गृहाण कंकणे॥ ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः हस्तयोः कङ्कणे सम० ॥ ततः कर्णयोः कर्णभूषणे ॥ ययोः शुभान्याखचितानि मातर्माणिक्यखण्डानि सुशोभनानि । ताटङ्कयुग्मे कनकस्य कृत्वा मयार्पिते देवि गृहाण चैते ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः कर्णयोः कुण्डले सम० ॥ ततः कण्ठे हारः ॥ मातस्त्वदर्थं मणिमौक्तिकाभिः कृतं मनोज्ञं कलकण्ठभूषणम् ॥ मयैव कण्ठे तव देवि चार्पितं ग्रैवेयकं नाम गृहाण भूषणम् ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः कण्ठे ग्रैवेयकं सम० ॥ ततो बाह्वोरङ्गदे ॥ हेम्ना कृतं ह्यङ्गदयुग्मकञ्च मनोहरं सुन्दरचित्रयुक्तम् ॥ बाह्वोर्गृहाणाशु मयार्पितं ते मनोज्ञमाभूषणभूषणोत्तमम् ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः बाह्वोः अङ्गदे सम० ॥ ततोऽङ्गुलीयकम् ॥ प्रवालगोमेदमयैश्च रत्नैः कृतां तथा हेममयीं मनोहराम् ॥ तस्यां कुरु त्वं मुखवीक्षणञ्च गृहाण देव्यङ्गुलिमुद्रिकां च ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः करयोरङ्गुलिमुद्रिकां सम० ॥ अथ कटिभूषणम् ॥ काञ्चीं शुभां हाटकनिर्मितां मया त्रैलोक्यमातः कटिभूषणाय ॥ दत्तां यथेमां त्वमजे च धत्से ह्युद्धर्तुमस्मान्वह मातृगर्भात् ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः कटिदेशे काञ्चीं सम० ॥ ततः पादाङ्गदे ( झांझरं ) नूपुरे ॥ सुसुन्दरे हाटकनिर्मिते द्वे पादाङ्गदे नूपुरनामधेये ॥ गृहाण मातः पदयोः प्रदत्ते सुकिङ्किणीभिश्च विराजिते ते ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः पादयोः नूपुरे समर्पयामि ॥

---

१ मञ्जीरान्पदयोर्निधाय रुचिरान्विन्यस्य काञ्चीं कटौ मुक्ताहारमुरोजयोरनुपमा नक्षत्रमाला गले ॥ केयूराणि भुजेषु रत्नवलयश्रेणीं करेषु क्रमात् ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥ धम्मिल्ले तव देवि हेमकुसुमान्याधाय भालस्थले मुक्ताराजिविराजि हेमतिलकं नासापुटे मौक्तिकम् ॥ मातर्मौक्तिकमालिकाय कुचयोः सर्वाङ्गुलीषूर्मिकाः कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसौ श्रुतौ ॥

अथ मुकुटम् ॥ मातस्तवेमं मुकुटं हरिन्मणिप्रवालमुक्तामणिभिर्विराजितम् । गारुत्मतैश्चापि मनोहरं कृतं गृहाण मातः शिरसो विभूषणम्॥ ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः शिरसि मुकुटं सम० ॥ अथ गन्धम् ॥ ॐत्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ ११ ॥ गन्धं सुगन्धं मृगनाभिवासितं तथैव काश्मीरकचूर्णमिश्रितम् । भाले त्वदीये जगदम्ब चार्पितं तथा त्वमङ्गीकुरु वेदगर्भे ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः भाले गन्धं सम० ॥ दक्षहस्तस्य कनिष्ठिकाङ्गुष्ठयोगेन गन्धमुद्रां प्रदर्शयेत् ॥ अथ कुंकुमम् ॥ स्वस्तिनऽइन्द्रो० ॥ १६ ॥ जातीपुष्पसमं रक्तं मुखकान्तिविवर्धकम् । कुंकुमं रक्तवर्णं ते देवि भाले ददाम्यहम् ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः भाले कुंकुमं सम० ॥ ततोऽक्षतान् ॥ ॐअक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१ ॥ क्षतैर्विहीनान्सितवर्णयुक्तान्तथा सुहव्ये प्रथितान्श्रुतौ च ॥ त्वमक्षतान्तानुररीकुरुष्व भाले त्वदीये शुभदेऽर्पयामि॥ ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः अक्षतान् सम० ॥ ततः पुष्पाणि ॥ ॐओषधीःप्रतिमोदद्ध्वम्पुष्पवतीःप्रसूवरीः ॥ अश्वाऽइवसजित्वरीर्वीरुधः पारयिष्ण्वः ॥ ९२ ॥ पुष्पाणि रक्तानि सिताब्जजातीजपाकरीरप्रभृतीनि देवि । गृहाण मातः कुरु सार्द्रदृष्टिं यथा मयाप्तानि तथार्पितानि ॥ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः यथालाभोपपन्नानि पुष्पाणि समर्पयामि । ततो दक्षहस्तस्य तर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् ॥

तत आवरणपूजार्थं भगवत्याः श्रीगायत्रीदेव्याः प्रार्थनां कुर्यात् ॥सच्चिन्मये परे देवि परामृतरसप्रिये । अनुज्ञां देहि मे मातः परिवारार्चनाय ते ॥ इति करसम्पुटं कृत्वाऽनुज्ञामादाय भगवतीं श्रीगायत्रीदेवीं सुप्रसन्नां विभाव्य तदाज्ञया आवरण-

---

१ प्रत्यङ्ग परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ॥ काश्मीरैरगरूद्भवमलयजैः सघर्ष्य संपादितं भक्तत्राणपरे त्रिलोकजननि श्रीचन्दनं गृह्यताम् ॥

२ रक्ताक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः । अखण्डितैर्देवि यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ॥

३ पुष्पौघैर्यातयन्ते सततपरिचलत्कान्तिकल्लोलजाले कुर्वाणा मज्जदन्तःकरणविमलता शोभितेव त्रिवेणी ॥ मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानैर्नित्यं हारत्रयी त्वं भगवति कमले गृह्यतां कण्ठमध्ये ॥

४ वस्तुतस्तु तर्पणे पूजने च तान्त्रिकसम्प्रदायस्तु यथा । ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः श्रीगायत्रीदेवीश्रीपादुकां पूजयामि तर्पयामि ॥ एवम् अस्माभिरपि सर्वत्र पूजनं तर्पणञ्च लिखितम् ॥ परञ्च येषां तन्नेष्टं ते ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः भगवतीं श्रीगायत्रीदेवीं पूजयामि तर्पयामि इति वदन् गन्धाक्षतपुष्पाणि देव्याः शिरसि दद्युः । एवं सर्वत्र ज्ञेयम् ॥

५ नित्यचारादेवात्रावरणदेवतानां पूजनं क्रियते । वस्तुतस्तु नैवेद्यान्तं पूजनं कृत्वैव तत् कर्तुं योग्यम् इति शारदातिलके ।

पूजामारभेत ॥ यथा तत्त्वमुद्रया स्वस्य वामकरे आर्द्रखण्डं गृहीत्वा तेन करेण विशेषार्घपात्रात्किञ्चिज्जलेन देव्याः शिरसि तर्पणं दक्षकरेण गन्धाक्षतपुष्पैश्च देव्याः शिरसि पूजनं विधेयम् । तत्रादौ देव्या मूलमन्त्रेण । ॐ भगवत्यै श्रीगायत्रीदेव्यै नमः भगवतीश्रीगायत्रीदेवीश्रीपादुकां पू० तर्प०। एवं त्रिवारं संपूज्य संतर्प्य च ततः कल्पिताग्नीशासुरवायव्यकोणेषु क्रमेण देव्याः षडङ्गानि हृदयशिरःशिखाकवचानि तस्याः पुरः नेत्रे पूर्वादिदिक्षु चास्त्रं पूजयेत्तर्पयेच्च ॥ तद्यथा । आग्नेय्यां (वायव्यां) ॐ भूर्भुवः स्वः तत्सवितुर्ब्रह्मात्मने हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि । ईशान्यां (नैर्ऋत्यां) ॐ भूर्भुवः स्वः वरेणियं विष्ण्वात्मने शिरसे स्वाहा शिरःशक्तिश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः भर्गो देवस्य रुद्रात्मने शिखायै वषट् शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि । वायव्यां ( आग्नेय्यां ) ॐ भूर्भुवः स्वः धीमहि ईश्वरात्मने कवचाय हुम् कवचशक्तिश्रीपादुकां पूजयामि तर्पयामि । पुरः ( स्वसमीपे ) ॐ भूर्भुवः स्वः धियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट् नेत्रत्रयशक्तिश्रीपादुका पूजयामि तर्पयामि । स्वाग्रतः चतुर्दिक्षु कल्पितपूर्वादिमदक्षिणक्रमेण । पूर्वे ( पश्चिमे ) ॐ भूर्भुवः स्वः प्रचोदयात् अस्त्राय फट् अस्त्रशक्तिश्रीपादुका पूजयामि तर्पयामि । दक्षिणे ( उत्तरे ) ॐ भूर्भुवः स्वः प्रचोदयात् अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि। पश्चिमे ( पूर्वे ) ॐ भूर्भुवः स्वः प्रचोदयात् अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । उत्तरे (दक्षिणे) ॐ भूर्भुवः स्वः प्रचोदयात् अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि तर्प० । एवं षडङ्गाना पूजनं तर्पणञ्च कृत्वा विन्दुत्रिकोणषट्कोणाष्टपत्रभूपुरे भगवत्याः श्रीगायत्रीदेव्या यन्त्रे मध्यविन्दुमारभ्यावरणपूजनं कुर्यात् ॥ तद्यथा ॥ भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रमुच्चार्य मध्ये विन्दौ ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः श्रीगायत्रीदेवीश्रीपादुकां पूजया० तर्पया० ॥ ततस्त्रिकोणे कल्पितपूर्वादिक्रमेण स्वाग्रतः । पूर्वकोणे ( पश्चिमे ) ॐ भूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः भगवतीश्रीगायत्रीदेवीश्रीपादुका पूजयामि तर्पयामि । ततः ( ईशान्यां ) त्रिकोणस्य नैर्ऋत्यकोणे ॐ भूर्भुवः स्वः भगवत्यै श्रीसावित्री देव्यै नमः भगवतीश्रीसावित्रीदेवीश्रीपादुका पूजयामि तर्पयामि

१ अनामिकाङ्गुष्ठयोग तत्त्वमुद्रा ।

२ भगवत्या श्रीगायत्रीदेव्या इमा अङ्गदेवता लयाङ्गत्वेन पूजमाराध्यावरणपूजादि कुर्यात् ॥ इति नित्योत्सव ॥ न तासामावरणदेवतानां मध्ये परिगणना ॥

त्रिकोणस्य वायव्यकोणे ( आग्नेय्याम् ) ॐ भूर्भुवः स्वः भगवत्यै श्रीसरस्वती-देव्यै नमः श्रीसरस्वतीदेवीश्रीपादुकां पूजयामि तर्पयामि ॥ ततस्त्रिकोणस्या-न्तरालेषु ( बाह्यभागे इत्यर्थः ) आग्नेय्यां ( वायव्याम् ) ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्मश्रीपादुकां पूजयामि तर्पया० ॥ त्रिकोणस्यान्तराले कल्पितपश्चिमे ( पूर्वे ) ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुश्रीपादुकां पूजयामि तर्पयामि । त्रिकोणस्यान्तराले कल्पितेशान्यां ( नैर्ऋत्यां ) ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रश्रीपादुकां पूजयामि तर्पयामि । ततो मूलमंत्रमुच्चार्याञ्जलौ गन्धाक्षत-पुष्पाण्यादाय । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्। इति पुष्पाञ्जलिं भगवत्याः श्रीगायत्रीदेव्याः शिरसि दत्वा । सामान्यार्घोदकं दक्षकरेणादाय । अनेन भगवत्याः श्रीगायत्रीदेव्याः प्रथमावरण-देवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम्॥ इति जलं देव्या वाम-करे समर्प्य प्रणमेत्। इति प्रथमावरणम्॥१॥ अथ द्वितीयावरणम्।षट्कोणेषु पूर्ववत् कल्पितपूर्वादिक्रमेण स्वाग्रतः सर्वत्र पूजनं तर्पणञ्च कुर्यात्॥ षट्कोणस्य कल्पितपूर्व-कोणे (पश्चिमे) ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः भगवतीश्रीगायत्रीदेवी-श्रीपादुकां पूजयामि तर्पया० ॥ षट्कोणस्य कल्पितनैर्ऋत्यकोणे(ईशान्यां)ॐभूर्भुवः स्वः भगवत्यै श्रीसावित्रीदेव्यै नमः भगवतीश्रीसावित्रीदेवीश्रीपादुकां पूजया० तर्पया० ॥ ततः कल्पितवायव्यकोणे(आग्नेय्यां) ॐभूर्भुवः स्वः भगवत्यै श्रीसरस्वती-देव्यै नमः भगवतीश्रीसरस्वतीदेवीश्रीपादुकां पूजया० तर्पया० ॥ तत्रैव षट्कोणस्य कल्पिताग्नेय्यादिक्रमेण आग्नेय्यां(वायव्यां)ॐभूर्भुवः स्वः ब्रह्मणे नमः ब्रह्मश्रीपादुकां पूजया० तर्पया० । षट्कोणस्य पश्चिमकोणे(पूर्वे) ॐ भूर्भुवः स्वः विष्णवे नमः विष्णु-श्रीपादुकां पूजया० तर्पया० । षट्कोणस्य ईशान्यां ( नैर्ऋत्या) ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रश्रीपादुकां पूजया० तर्पया० । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ इति पुष्पा-ञ्जलिं देव्याः शिरसि दत्वा । सामान्यार्घोदकं दक्षकरेण गृहीत्वा । अनेन भगवत्याः श्रीगायत्रीदेव्या द्वितीयावरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम्॥ इति जलं देव्या वामकरे समर्प्य प्रणमेत्। इति द्वितीयावरणम्॥२॥ अथ तृतीयावरणम्॥ततः षट्कोणस्य बहिः पूर्ववत्कल्पितपूर्वादिदिक्षु क्रमेण। पूर्वे(पश्चिमे) ॐ भूर्भुवः स्व आदित्याय नमः आदित्यश्रीपादुका पूजया० तर्पयामि । षट्कोणस्य बहिर्दक्षिणे (उत्तरे) ॐभूर्भुवः स्वः भानवे नमः भानुश्रीपादुकां पूजया० तर्पया० ।

षट्कोणस्य बहिः समीपे पश्चिमे (पूर्वे) ॐ भूर्भुवः स्वः भास्कराय नमः भास्कर-श्रीपादुकां पूजया० तर्पयामि । षट्कोणस्य बहिः उत्तरे ( दक्षिणे ) ॐ भूर्भुवः स्वः रवये नमः रविश्रीपादुकां पूजया० तर्पया० । ततः षट्कोणस्य आग्नेय्यादिविदिक्षु प्रदक्षिणक्रमेण । आग्नेय्यां ( वायव्यां ) ॐ भूर्भुवः स्वः उषायै नमः उषाश्रीपादुकां पूजयामि तर्पया० । नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः प्रज्ञायै नमः प्रज्ञाश्रीपादुकां पूजया० तर्पया० ॥ वायव्यां ( आग्नेय्यां ) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाश्रीपादुका पूजया० तर्पया० ॥ ईशान्या ( नैर्ऋत्यां ) ॐ भूर्भुवः स्वः सन्ध्यायै नमः सन्ध्याश्रीपादुकां पूजया० तर्पया० । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥ इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा। ततः सामान्यार्घोदकं दक्षिणकरेण गृहीत्वा । अनेन भगवत्याः श्रीगायत्री-देव्यास्तृतीयावरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम् ॥ इति जलं देव्या वामकरे समर्प्य प्रणमेत् ॥ इति तृतीयावरणम् ॥ ३ ॥ अथ चतु-र्थावरणम् । अष्टपत्रेषु स्वाग्रतः कल्पितपूर्वादिक्रमेण प्रादक्षिण्येन प्रह्लादिन्यादी-श्चतुर्विंशतिदेवीः पुनः पुनः क्रमशस्त्रिवारं पूजयेत् ॥ पूर्वे । पूर्वपत्रे (पश्चिमे) ॐ भूर्भुवः स्वः प्रह्लादिन्यै नमः प्रह्लादिनीश्रीपादुकां पूजया० तर्पया० । आग्नेय्याम् आग्नेयपत्रे (वायव्यां) ॐ भूर्भुवः स्वः प्रभायै नमः प्रभाश्रीपादुकां पूजया० तर्पया० । दक्षिणस्यां दक्षिणपत्रे ( उत्तरे ) ॐ भूर्भुवः स्वः नित्यायै नमः नित्याश्रीपादुकां पूजया० तर्पया० । नैर्ऋत्या नैर्ऋत्यपत्रे ( ईशान्यां ) ॐ भूर्भुवः स्वः विश्वम्भरायै नमः विश्वम्भराश्रीपादुकां पूजया० तर्पया० । पश्चिमपत्रे ( पूर्वे ) ॐ भूर्भुवः स्वः विशालायै नमः विशालाश्रीपादुकां पूजयामि तर्पयामि । वायव्यां वायव्यपत्रे ( आग्नेय्यां ) ॐ भूर्भुवः स्वः प्रभावत्यै नमः प्रभावतीश्रीपादुकां पूजयामि तर्पयामि । उत्तरस्याम् उत्तरपत्रे ( दक्षिणे ) ॐ भूर्भुवः स्वः जयायै नमः जयाश्रीपादुकां पूजयामि तर्पयामि । ईशान्याम् ईशानपत्रे ( नैर्ऋत्यां ) ॐ भूर्भुवः स्वः शान्त्यै नमः शान्तिश्रीपादुकां पूजयामि तर्पयामि । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥ इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा । सामान्यार्घो-दकं दक्षकरेण गृहीत्वा । अनेन यथाशक्ति भगवत्याः श्रीगायत्रीदेव्याश्चतुर्था-वरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम् ॥ इति जलं

देव्या वामकरे समर्प्य प्रणमेत् ॥ इति चतुर्थावरणम् ॥ ४ ॥ अथ पञ्चमावरणम् । पुनरष्टपत्रेषु स्वाग्रतः कल्पितपूर्वादिक्रमेण दिग्विदिक्षु प्रादक्षिण्येन । पूर्वे पूर्वपत्रे ( पश्चिमे ) ॐभूर्भुवः स्वः कान्त्यै नमः कान्तिश्रीपादुकां पूजयामि तर्पयामि । आग्नेय्याम् आग्नेयपत्रे ( वायव्यां ) ॐ भूर्भुवः स्वः दुर्गायै नमः दुर्गाश्रीपादुकां पूजयामि तर्पयामि । दक्षिणस्यां दक्षिणपत्रे (उत्तरे) ॐ भूर्भुवः स्वः श्रीसरस्वत्यै नमः श्रीसरस्वतीश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्या नैर्ऋत्यपत्रे ( ईशाने ) ॐ भूर्भुवः स्वः विश्वरूपायै नमः विश्वरूपाश्रीपादुकां पूजयामि तर्पयामि । पश्चिमायां पश्चिमपत्रे ( पूर्वे ) ॐ भूर्भुवः स्वः विशालायै नमः विशालाश्रीपादुकां पूजया० तर्पया० । वायव्यां वायव्यपत्रे (आग्नेय्यां) ॐ भूर्भुवः स्वः ईशायै नमः ईशाश्रीपादुकां पूजयामि तर्पयामि । उत्तरस्याम् उत्तरपत्रे ( दक्षिणे ) ॐ भूर्भुवः स्वः व्यापिन्यै नमः व्यापिनीश्रीपादुकां पूजयामि तर्पयामि । ईशान्याम् ईशानपत्रे ( नैर्ऋत्यां ) ॐ भूर्भुवः स्वः विमलायै नमः विमलाश्रीपादुकां पूजयामि तर्पयामि । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥ इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा । सामान्यार्घोदकं दक्षहस्तेन गृहीत्वा । अनेन भगवत्याः श्रीगायत्रीदेव्याः पञ्चमावरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम् । इति जलं देव्या वामकरे समर्प्य प्रणमेत् । इति पञ्चमावरणम् ॥५॥ अथ षष्ठावरणम् ॥ पुनरष्टपत्रेषु स्वाग्रतः । पूर्ववत्कल्पितपूर्वादिक्रमेण दिग्विदिक्षु प्रादक्षिण्येन । पूर्वस्यां पूर्वपत्रे (पश्चिमे) ॐभूर्भुवः स्वः तमोपहारिण्यै नमः तमोपहारिणीश्रीपादुकां पूजया० तर्पया० । आग्नेय्याम् आग्नेयपत्रे ( वायव्यां ) ॐ भूर्भुवः स्वः सूक्ष्मायै नमः सूक्ष्माश्रीपादुकां पूजयामि तर्पयामि । दक्षिणस्यां दक्षिणपत्रे ( उत्तरे ) ॐ भूर्भुवः स्वः विश्वयोन्यै नमः विश्वयोनिश्रीपादुकां पूजयामि तर्पया० । नैर्ऋत्यां नैर्ऋत्यपत्रे ( ईशान्यां ) ॐभूर्भुवः स्वः जयायै नमः जयाश्रीपादुकां पूजयामि तर्पयामि । पश्चिमस्यां पश्चिमपत्रे ( पूर्वे ) ॐ भूर्भुवः स्वः पद्मालयायै नमः पद्मालयाश्रीपादुकां पूजया० तर्पया० । वायव्यां वायव्यपत्रे ( आग्नेय्यां ) ॐ भूर्भुवः स्वः परायै नमः पराश्रीपादुकां पूजया० तर्पया० । उत्तरस्याम् उत्तरपत्रे (दक्षिणे) ॐभूर्भुवः स्वः शोभायै नमः शोभाश्रीपादुकां पूजया० तर्पया० । मूलमन्त्रेण हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं षष्ठावरणपूजनम् ॥ इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा ॥

सामान्यार्घोदकं दक्षकरेण गृहीत्वा । अनेन भगवत्याः श्रीगायत्रीदेव्याः षष्ठावरण-देवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम् । इति जलं देव्या वामकरे समर्प्य प्रणमेत् । इति षष्ठावरणम् ॥ ६ ॥ अथ सप्तमावरणम् । पुनरष्टदला-द्बहिः अष्टदलस्य पूर्वादिदलसमीपतः स्वाग्रतः प्रादक्षिण्येन ब्राह्म्यादयोऽष्टौ देव्यः । पूर्वे ( पश्चिमे ) ॐ भूर्भुवः स्वः आं ब्राह्म्यै नमः ब्राह्मीश्रीपादुकां पूजया० तर्पया० । आग्नेय्यां ( वायव्यां ) ॐभूर्भुवः स्वः ईं माहेश्वर्यै नमः माहेश्वरीश्रीपादुकां पूजया० तर्पया० । दक्षिणस्यां ( उत्तरे ) ॐभूर्भुवः स्वः ऊं कौमार्यै नमः कौमारीश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः ॠं वैष्णव्यै नमः वैष्णवीश्रीपादुकां पूजयामि तर्पयामि । पश्चिमायां ( पूर्वे ) ॐ भूर्भुवः स्वः ॡं वाराह्यै नमः वाराहीश्रीपादुकां पूजयामि तर्पयामि । वायव्यां ( आग्नेय्यां ) ॐ भूर्भुवः स्वः ऐं इन्द्राण्यै नमः इन्द्राणी-श्रीपादुकां पूजयामि तर्पयामि । उत्तरस्यां ( दक्षिणे ) ॐभूर्भुवः स्वः औं चामुण्डायै नमः चामुण्डाश्रीपादुकां पूजयामि तर्पयामि । ईशान्यां (नैर्ऋत्यां) ॐ भूर्भुवः स्वः अः अरुणायै नमः अरुणाश्रीपादुकां पूजयामि तर्पयामि ॥ मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् । इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा । हस्ते सामान्यार्घोदकं गृहीत्वा । अनेन भगवत्याः श्रीगायत्रीदेव्याः सप्तमावरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी प्रीयताम् ॥ इति जलं देव्या वामकरे समर्प्य प्रणमेत् ॥ इति सप्तमावरणम् ॥ ७ ॥ अथ अष्टमावरणम् । पूर्वं भगवत्याः श्रीगायत्रीदेव्या यन्त्रस्य मध्यबिन्दौ सूर्यं संपूज्य च संतर्प्य ततो यन्त्रस्याष्टदलाद्बाह्ये स्वाग्रतः कल्पितपूर्वादिक्रमेणाष्टदिक्षु ग्रहान् । यन्त्रस्य मध्यबिन्दौ ॐ भूर्भुवः स्वः भगवते सूर्याय नमः सूर्यश्रीपादुकां पूजया० तर्पया० । पूर्वे ( पश्चिमे ) ॐ भूर्भुवः स्वः सोमाय नमः सोमश्रीपादुकां पूजयामि तर्पयामि । आग्नेय्यां(वायव्यां) ॐ भूर्भुवः स्वः भौमाय नमः भौमश्रीपादुकां पूजयामि तर्पयामि । दक्षिणे ( उत्तरे ) ॐ भूर्भुवः स्वः बुधाय नमः बुधश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्यां ( ईशान्यां ) ॐ भूर्भुवः स्वः गुरवे नमः गुरुश्रीपादुकां पूजयामि तर्पयामि । पश्चिमे ( पूर्वे ) ॐ भूर्भुवः स्वः शुक्राय नमः शुक्रश्रीपादुकां पूजयामि तर्पयामि । वायव्यां ( आग्नेय्यां ) ॐ भूर्भुवः स्वः शनैश्चराय नमः शनैश्चरश्रीपादुकां पूजयामि तर्पयामि । उत्तरे ( दक्षिणे ) ॐभूर्भुवः स्वः राहवे नमः राहुश्रीपादुकां

पूजयामि तर्पयामि ॥ ईशान्यां ( नैर्ऋत्यां ) ॐ भूर्भुवः स्वः केतवे नमः केतुश्रीपादुकां पूजयामि तर्पयामि । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यम् अष्टमावरणार्चनम् । इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा । दक्षिणकरे सामान्यार्घोदकं गृहीत्वा । अनेन यथाशक्ति भगवत्याः श्रीगायत्रीदेव्या अष्टमावरणदेवतानां पूजनेन तर्पणेन च भगवती श्रीगायत्रीदेवी प्रीयताम् ॥ इति जलं देव्या वामकरे समर्प्य प्रणमेत् ॥ इति अष्टमावरणम् ॥ ८ ॥ अथ नवमावरणम् ॥ प्रसिद्धपूर्वादितः इन्द्रादीन् । पूर्वे—वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय भगवतीश्रीगायत्रीपार्षदाय लं इन्द्राय नमः इन्द्रश्रीपादुकां पूजयामि तर्पयामि । आग्नेय्यां—शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय रां अग्नये नमः अग्निश्रीपादुकां पूजयामि तर्पयामि । दक्षिणस्यां—दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय यां यमाय नमः यमश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्यां—खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय क्षां निर्ऋतये नमः निर्ऋतिश्रीपादुकां पूजयामि तर्पयामि । पश्चिमायां—पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय वां वरुणाय नमः वरुणश्रीपादुकां पूजयामि तर्पयामि । वायव्याम्—ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय यां वायवे नमः वायुश्रीपादुकां पूजयामि तर्पयामि । उत्तरस्यां—शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय सां सोमाय नमः सोमश्रीपादुकां पूजयामि तर्पयामि । ईशान्याम्—त्रिशूलहस्ताय विद्याधिपतये वृषभवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय हां ईशानाय नमः ईशानश्रीपादुकां पूजयामि तर्पयामि । पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्—पद्महस्ताय लोकाधिपतये हंसवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय ॐ ब्रह्मणे नमः ब्रह्मश्रीपादुकां पूजयामि तर्पयामि । निर्ऋतिवरुणयोर्मध्ये अधः—चक्रहस्ताय नागाधिपतये गरुडवाहनाय सपरिवाराय श्रीगायत्रीपार्षदाय ॐ श्रीविष्णवे नमः विष्णुश्रीपादुकां पूजयामि तर्पयामि । मूलेन हस्ते गन्धाक्षतपुष्पाणि गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥ इति पुष्पाञ्जलिं देव्याः शिरसि दत्वा । दक्षिणकरे सामान्यार्घोदकं गृहीत्वा । अनेन भगवत्याः श्रीगायत्रीदेव्या नवमावरणदेवतानां पूजनेन तर्पणेन च भगवतीश्रीगायत्रीदेवी

प्रीयताम् । इति जलं देव्या वामकरे समर्प्य प्रणमेत् ॥ इति नवमावरणम् ॥ ९ ॥ अथ दशमावरणम् ॥ प्रसिद्धपूर्वादितो दिग्विदिक्षु क्रमेणायुधान् ॥ पूर्वे–ॐ भूर्भुवः स्वः वज्राय नमः वज्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । आग्नेय्याम्–ॐ भूर्भुवः स्वः शं शक्तये नमः शक्ति शक्तिश्रीपादुकां पूजयामि तर्पयामि । दक्षिणस्याम्–ॐ भूर्भुवः स्वः दं दण्डाय नमः दण्डशक्तिश्रीपादुकां पूजयामि तर्पयामि । नैर्ऋत्याम्–ॐ भूर्भुवः स्वः खं खड्गाय नमः खड्गशक्तिश्रीपादुकां पूजयामि तर्पयामि । पश्चिमायाम्–ॐ भूर्भुवः स्वः पां पाशाय नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि । वायव्याम्–ॐ भूर्भुवः स्वः अं अङ्कुशाय नमः अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि । उत्तरस्याम्–ॐ भूर्भुवः स्वः गां गदायै नमः गदाशक्तिश्रीपादुकां पूजयामि तर्प० । ईशान्याम्–ॐ भूर्भुवः स्वः त्रिं त्रिशूलाय नमः त्रिशूलशक्तिश्रीपादुकां पूजयामि तर्पयामि । पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्–ॐ भूर्भुवः स्वः पं पद्माय नमः पद्मशक्तिश्रीपादुकां पूजयामि तर्पयामि । निर्ऋतिवरुणयोर्मध्ये अधः–ॐ भूर्भुवः स्वः चं चक्राय नमः चक्रशक्तिश्रीपादुकां पूजयामि तर्पयामि । मूलेन हस्ते पुष्पाञ्जलिं गृहीत्वा । अभीष्टसिद्धिं मे देहि शरणागतवत्सले । भक्त्या समर्पये तुभ्यं दशमावरणार्चनम् ॥ इति देव्याः शिरसि पुष्पाञ्जलिं दत्वा । दक्षकरे सामान्यार्घपात्राजलं गृहीत्वा अनेन यथाशक्ति भगवत्याः श्रीगायत्रीदेव्या दशमावरणदेवतानां पूजनेन तर्पणेन च भगवती श्रीगायत्रीदेवी प्रीयताम् ॥ इति जलं देव्या वामहस्ते समर्प्य प्रणमेत् ॥ इति दशमावरणम् ॥ १० ॥ ततः श्रीगायत्रीदेव्या आयुधानि पूजयेत् ॐ वरदाय नमः । ॐअभयाय नमः । ॐअङ्कुशाय नमः । ॐ कशायै नमः । ॐकपालाय नमः । ॐगुणाय नमः । ॐशंखाय नमः । ॐ चक्राय नमः । ॐ अब्जाय नमः । ॐकमलाय नमः । इति आयुधानि सम्पूज्य । ततो देव्यै यथाप्राप्तान्यन्यानि सुरभीणि कुसुमानि पुष्पमालाश्चार्पयित्वा तथैव भगवत्याः श्रीगायत्रीदेव्याः सहस्रनामभिः कुंकुमं कुंकुमाक्षतान् बिल्वदलानि वा समर्पयेत् । ततः पुष्पमालाम् ॥ याम्माहरञ्जमदग्निःसीःपृथिव्यासम्भव । अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय । अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा विवयं रुहेम ॥ ५ ॥ शुभ्रैश्च पीतैः कुसुमैरनेकै रक्तैस्तथाऽनेकसुवर्णयुक्तैः । कृतां त्वदर्थं च मया सुमाला गृहाण कण्ठे विनिवेदितां तव ॥ ॐ भूर्भुवः स्वः सावित्र्यै

१ आवरणदेवतान्यं पूजनानन्तरं शाक्तये उपरिवाराणे आयुधाने इत्यादि विशेषणानि गुणन्ति कश्चो वदन्ति ।

सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः पुष्पमालां सम० । साभाग्यद्रव्याणि । ॐ अहिरिव भोगैः पर्य्येति बाहुञ्ज्यायाहेतिम्परिबाधमानः ॥ हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमा<ंसम्परिपातु विश्वतः ॥ ६१ ॥ श्वेतं तथा रक्तमहं गुलालं सौभाग्यलाभाय तथा हरिद्राम् । भाले तवाम्ब स्वकरेण देवि सिन्दूरबिन्दुं ह्यपि वै ददामि ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः सौभाग्यपरिमलद्रव्याणि सम० ॥ कज्जलम् ॥ चाम्पेयकर्पूरकचन्दनादिकैर्नानाविधैर्गन्धचयैः सुवासितम् । नेत्राञ्जनार्थाय हरिन्मणिप्रभं गायत्रि हे स्वीकुरु कज्जलं शुभम् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः अक्षिभ्यां कज्जलं सम० ॥ अत्तरम् ॥ मातस्त्वदर्थं तु सुवासितेभ्यः पुष्पेभ्य आकृष्य कृतं मनोहरम् । तैलं तवाङ्गेषु विलेपनार्थं लोके ददाम्यत्तरनामधेयम् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः अङ्गेषु विलेपनार्थम् अत्तरं सम० ॥ ततो धूपः ॥ एकस्मिन्पात्रे निर्धूमाग्निं निधाय तन्निर्धूमाङ्गारपात्रं भगवत्याः श्रीगायत्रीदेव्याः पुरतो निधाय तस्मिन्गुग्गुलादिकं धूपद्रव्यं प्रक्षिप्य विशेषार्घपात्रात्किञ्चिज्जलं गृहीत्वा । 'ॐ अस्त्राय फट्' इति सम्प्रोक्ष्य । 'ॐ नमः' इति गन्धपुष्पैर्धूपं सम्पूज्य वामहस्तस्य तर्जन्या धूपपात्रं स्पृष्ट्वा दक्षिणहस्तेन सामान्यार्घपात्राज्जलं गृहीत्वा भगवत्याः श्रीगायत्रीदेव्या मूलमंत्रमुच्चार्य धूपं निवेदयेत् । ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः धूपं निवेदयामि । एवं देव्यै धूपं निवेद्य वामहस्ते घण्टां गृहीत्वा तां वादयन् दक्षिणकरेण धूपपात्रमादाय भगवत्यै श्रीगायत्रीदेव्यै धूपमाघ्रापयेत्[1] ॥ ॐ वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु ॥ ६१ ॥ ततो मूलेन पुष्पाञ्जलिं दत्वा दक्षकरस्य तर्जन्यङ्गुष्ठयोगेन धूपमुद्रां प्रदर्शयेत् ॥ ततो दीपः । ततो दीपपात्रं स्ववामभागाग्रे निधाय । 'ॐ अस्त्राय फट्' इति अस्त्रमंत्रेण विशेषार्घपात्रजलेन दीपं सम्प्रोक्ष्य । 'ॐ नमः' इति तं सम्पूज्य । वामहस्तस्य मध्यमया दीपपात्रं संस्पृश्य । दक्षिणहस्तेन सामान्यार्घपात्राज्जलं गृहीत्वा श्रीगायत्र्या मूलमंत्रमुच्चारयन्[2] । सुप्रकाशो महातेजाः सर्वत्र तिमिरापहः । स बाह्याभ्यन्तरज्योतिर्दीपोऽयं

[1] एषाग्रधूपं तव रञ्जनार्थं नाशाय मे विघ्नविधायकानाम् । दत्तं मया सौरभपूर्णयुक्तं गृहाण मातस्तव सन्निधौ यः

[2] गृहाण दीपः सितवर्तियुक्तो घृतेन पूर्णस्तव दक्षभागे । तथा भवत्तश्च सुरक्तवर्त्या तैलेन युक्तस्तव वामभागे ॥

प्रतिगृह्यताम् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः दीपं निवेदयामि। इति दीपं निवेद्य दक्षिणकरस्थं जलमुत्सृज्य ततो वामहस्ते घण्टां गृहीत्वा तां वादयन् दक्षिणहस्ते दीपपात्रमादाय देव्यै पञ्चसप्तकृत्वो दर्शयेत् ॥ ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा। अग्निर्वर्चो ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा। ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ [1]३ ॥ इति दीपं दर्शयित्वा मूलेन पुष्पाञ्जलिं दत्वा ॥ दक्षिणकरस्य मध्यमाङ्गुष्ठयोगेन दीपमुद्रां प्रदर्शयेत् । ततो नैवेद्यम्। भगवत्याः श्रीगायत्रीदेव्या अग्रभागे जलेन चतुरस्रं मण्डलं कृत्वा मूलमन्त्रेण सम्पूज्य तदुपरि यथाशक्ति स्वर्णादिपात्रे मध्वाज्यशर्करादिसहितं पायसादिविविधं नैवेद्यं धृत्वा तत्र स्थापयित्वा तस्मिन् बिल्वादिकं प्रक्षिप्य । चक्र[2]मुद्रया संरक्ष्य विशेषार्घपात्राज्जलं गृहीत्वा। "ॐ अस्त्राय फट्" इति अस्त्रमन्त्रेण नैवेद्यं सम्प्रोक्ष्य। वमिति धेनुमुद्रया अमृतीकृत्य। गायत्र्या मूलमंत्रेणाष्टवारं नैवेद्यम् अभिमंत्र्य । ततो नैवेद्यपात्रं वामहस्तस्याङ्गुष्ठेन स्पृष्ट्वा दक्षिणकरे सामान्यार्घपात्राज्जलं गृहीत्वा मूलमंत्रमुच्चार्य। ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ॥ प्रप्रं दातारन्तारिष ऊर्ज्जं नो धेहि द्विपदे चतुष्पदे ॥ [1]३ ॥ सत्पात्रस्थं सुनैवेद्यं विविधानेकभक्षणम्। निवेदयामि देवेशि सानुगायै गृहाण तत् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै भगवत्यै श्रीगायत्रीदेव्यै नमः यथाशक्ति नैवेद्यं निवेदयामि। इति जलमुत्सृज्य। पुनः किञ्चित् जलम् ॐ अमृतोपस्तरणमसि स्वाहा। इति दत्त्वा वामहस्तं पद्माकारं कृत्वा दक्षिणहस्तेन पञ्च ग्रा[1]सामुद्राः प्रदर्शयेत् ॥ तर्जनीमध्यमाङ्गुष्ठयोगेन—ॐ प्राणाय स्वाहा।

---

१ पुष्पादिमुद्राणां लक्षणानि । ज्येष्ठाङ्गुष्ठेन पुष्पस्य युक्ता धूपस्य तर्जनी ॥ दीपस्य मध्यमाऽनामा नैवेद्यस्य प्रकीर्तिता ॥ मुद्रया कर्म यद्दत्तं तदक्षय्यफलप्रदम् ॥ इति शारदातिलके तृतीयपटले ।

(कनिष्ठिकाङ्गुष्ठयोगे गन्धमुद्रा । मध्यमाङ्गुष्ठसंयोगे पुष्पमुद्रा । तर्जन्यङ्गुष्ठयोगे धूपमुद्रा । मध्यमाङ्गुष्ठयोगे दीपमुद्रा । अनामिकाङ्गुष्ठयोगे नैवेद्यमुद्रा । ताः दक्षिणहस्तेन कार्याः । )

२ चक्रमुद्रया नैवेद्यं संरक्ष्य । विशेषार्घपात्राज्जलं गृहीत्वा यमिति वायुबीजेन द्वादशवारमावर्तितेन जलमभिमंत्र्य तेन जलेन नैवेद्यं सम्प्रोक्ष्य । तदुत्थितवायुना तद्दोषं संशोष्य दक्षिणकरतले रम् इति अग्निबीजं विचिन्त्य तत्पृष्ठलग्नं वामकरं कृत्वा देव्यै नैवेद्यं प्रदर्श्य तदुत्थिताग्निना तद्दोषं दग्ध्वा वामकरेऽमृतबीजं वमिति विचिन्त्य तत्पृष्ठलग्नं दक्षिणकरतलं कृत्वा नैवेद्यं प्रदर्श्य तदुत्थितामृतधारया प्लावितं विभाव्य मूलमंत्राभिमन्त्रितेन जलेन सम्प्रोक्ष्य तदपि छन्नमृतात्मकं ध्यात्वा दक्षिणकरेण नैवेद्यं स्पृष्ट्वा मूलमंत्रेणाष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्श्य गन्धपुष्पं समभ्यर्च्य देवतायै पुष्पाञ्जलिं दत्वा तन्मुखात्तेजो निर्गतमिति भावयन् वामाङ्गुष्ठेन नैवेद्यं स्पृष्ट्वा दक्षिणकरेण देव्या मूलमन्त्रं स्वाहान्तं पठन् "सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् । निवेदयामि देवेशि सानुगायै गृहाण तत्" इति पठित्वा साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः, नैवेद्यं निवेदयामि इति जलमुत्सृज्य ततः पञ्च ग्रासमुद्राः प्रदर्शयेत् । इति शारदातिलके ॥

१ ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् । । प्रदर्शयन्दक्षिणेन प्राणादीनाञ्च दर्शयेत् ॥

मध्यमानामिकाङ्गुष्ठयोगेन—ॐ अपानाय स्वाहा । कनिष्ठानामिकाङ्गुष्ठयोगेन—ॐ व्यानाय स्वाहा । तर्जन्यनामिकाङ्गुष्ठयोगेन—ॐ उदानाय स्वाहा । सर्वाङ्गुलिभिः—ॐ समानाय स्वाहा । एवं पञ्च ग्रासमुद्राः प्रदर्श्य । ततः स्वात्मदेव्योर्मध्ये जवनिकां धृत्वा देवीं भुञ्जानां भावयन् पठेत् ॥ ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैः समन्तात्सख्या सिञ्जद्वलयकरया सादरं वीज्यमाना । नर्मक्ष्वेलैः प्रहसनमुखी हासयन्ती स्वमोकृन्भुङ्क्ते पात्रे कनकघटिते पड्रसान् विश्वमाता ॥ १ ॥ शालीभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं लेह्यं पेयञ्च चोष्यं सितममृतफलं धारिकाद्यं सुखाद्यम् ॥ आज्यं प्राज्यं समज्यं नयनरुचिकरं राजिकैलामरीचस्वादीयश्शाकराजीपरिकरममृताहारजोषं जुषस्व ॥ २ ॥ मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तालिकापूपासूपसितावृतैः सवटकैः सक्षौद्ररम्भाफलैः । एलाजीरकहिङ्गुनागरनिशाकौस्तुंभरीसंस्कृतैः शाकैः साकमहं सुधाधिकरसैः संतर्पयाम्यर्पितैः ॥ ३ ॥ सापूपसूपदधिदुग्धसमन्वितानि स्वादूनि भक्ष्यपरमान्नपुरःसराणि ॥ शाकोल्लसन्मरिचजीरकबाह्लिकानि भक्ष्याणि भक्ष जगदम्ब मयाऽर्पितानि ॥ ४ ॥ क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्वलं मधु । मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ॥ इति पठित्वा मूलमन्त्रं पठन् देवीं क्षणं भुञ्जानां भावयेत् । ततः पूजाङ्गहोमसाङ्गतासिद्ध्यर्थम् आज्यस्य सङ्कल्पं कुर्यात् ॥ यजमानो हस्ते जलं गृहीत्वा मया कृतस्य भगवत्याः श्रीगायत्रीदेव्याः पूजनकर्मणः साङ्गतासिद्धये पूजनकर्मणि विहितस्य पूजाङ्गहोमस्याकरणजनितप्रत्यवायपरिहारार्थं पूजाङ्गहोमकरणजनितफलप्राप्त्यर्थञ्च इदमाज्यम् आचार्याय दातुमहमुत्सृजे । इति सङ्कल्पजलं घृतञ्चाचार्याय दद्यात् ॥ ततः श्रीगायत्रीप्रीतये पार्षदेभ्यः सर्वभूतेभ्यश्च बलिदानं कुर्यात् । यथा—भगवत्याः श्रीगायत्र्याः समीपे भूमौ जलेनोपलिप्य पार्षदेभ्यः सर्वभूतेभ्यश्च बलिदानार्थं पृथक् पृथक् पत्रपुटे पायसादिकं दध्यक्षतान्वा धृत्वा तत्र निधाय पृथक् पृथक् गन्धपुष्पैरभ्यर्च्य हस्ते सामान्यार्घपात्राज्जलं गृहीत्वा प्रथमं श्रीगायत्रीपार्षदेभ्यो बलिदानं दद्यात् ॥ ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः । योगिन्योऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥ १ ॥ विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ॥ ते सर्वे तृप्तमनसो भूता गृह्णन्त्विमं बलिम् ॥ इति जलं बलिदानस्योपरि दत्वा प्रणमेत् ॥ पुनः सामान्यार्घपात्राज्जलं गृहीत्वा भूतानि यानीह वसन्ति भूमौ बलिं गृहीत्वा विधिवत्प्रयुक्तम् । अन्यत्र वासं परिकल्पयन्तु क्षाम्यन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥ २ ॥ इति द्वितीये सर्वभूतबलिदाने

जलं दत्वा प्रणमेत् ॥ ततो नाराचमुद्रया सर्वभूतबलिं विसृजेत्। ततो जवनिकाम् अपाकृत्य मूलमन्त्रं पठित्वा 'ॐअमृतापिधानमसि स्वाहा' । इत्युत्तरापोशानं दत्वा। एकस्मिन् सनालपात्रे[1] शुद्धजलं पूरयित्वा भगवत्याः श्रीगायत्रीदेव्याः समीपे निधाय हस्ते सामान्यार्घोदकं गृहीत्वा । समस्तदेवदेवेशि सर्वतृप्तिकरं परम्। अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम्॥ एलादिचूर्णसम्मिश्रं कर्पूरेण च वासितम् ॥ शीतं स्वादु गृहाणेदं गायत्रि जलमुत्तमम् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः मुखप्रक्षालनार्थे जलं समर्पयामि । ततः करोद्वर्तनार्थे गन्धं दद्यात्॥ गृहाण देवदेवेशि गन्धं ह्यामोदनिर्भरम्। प्रकरोद्वर्तनार्थाय मया दत्तं हि भक्तितः॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः करोद्वर्तनार्थे गन्धं सम० ॥ ततो नैवद्यमध्यादुच्छिष्टभोक्त्र्यै उच्छिष्टचाण्डाल्यै किञ्चिन्निर्माल्यसहितं नैवेद्यं दद्यात्[2] । देव्या वामभागे ईशान्यां जलेन किञ्चिदुपलिप्य तदुपरि पत्रपुटादिकं निधाय तस्मिन्नैवेद्यमध्यात्सर्वम् अन्नं किञ्चित्किञ्चिदुद्धृत्य दत्त्वा तत्र भगवत्याः श्रीगायत्रीदेव्याः निर्माल्यपुष्पञ्च निक्षिप्य द्वितीयं जलपूरितं पानीयपात्रमपि तत्सन्निधौ निधाय गन्धाक्षतपुष्पाणि गृहीत्वा ॐ उच्छिष्टभोक्त्र्यै उच्छिष्टचाण्डाल्यै नमः इति तत्र सम्पूज्य । हस्ते जलमादाय । भक्ष्यभोज्यान्नपानादि चन्दनं सविलेपनम् । निर्माल्यभोजनं तुभ्यं दत्तमस्तु शिवाज्ञया । इति जलमुत्सृज्य प्रणमेत् ॥ ततः स्वकरौ प्रक्षाल्याचम्य गायत्र्यै मुखवासताम्बूलं दद्यात् ॥ ॐउतस्मांस्यद्रवतस्तुरण्यतः पूर्णन्नवेरनुवातिप्रगर्द्धिनः ॥ श्येनस्येवद्ध्रजतोऽअङ्कसम्परिदधिक्राव्णः सहोर्जातरित्रतःस्वाहा ॥ ६५ ॥ कर्पूरजातीफलजायकेन ह्येलालवङ्गेन समन्वितेन । मया प्रदत्तं मुखवासनाथ ताम्बूलमङ्गीकुरु मातरेतत् ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः मुखवासार्थे एलालवङ्गादिभिर्युतं ताम्बूलं सम० । ततः पूगीफलम्। ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ ६३ ॥ भगवति तव भक्तिर्जायतां मानसे मे जगति तव कृपाया भाजनं स्यां सदाऽहम्। इति मम खलु मातः केवला ह्यन्तिमेच्छा क्रमुकमिदमपि त्वां ह्यर्पये तत्फलाय ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः पूगीफलं सम० ॥ ततो

१ सनालपात्रस्य चर्करीशब्देन व्यवहारः ।

२ उद्धृत्य-पुष्पाद्यैर्जलतः पात्रार्धवेद्यां समुद्धरेत् । गणेशे वक्रतुण्डाय सर्वे चण्डांशवेऽर्पयेत् । उच्छिष्टचाण्डाल्यै शिवे चण्डेश्वराय च । भगवत्याः श्रीगायत्रीदेव्याः शक्तित्वात् ।

दक्षिणाम् ॥ ॐ यद्दत्तं यत्परादानं यत्पूर्तं याश्च दक्षिणाः । तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषुनोदधत् ॥ ६६ ॥ तव जननि जगत्यां विद्यते कार्यजातं तव चरणकृपातः प्राप्यते सर्वमेतत् ॥ भगवति किमकुर्या नास्ति किञ्चिन्मदीयं कथय जगति कां ते दक्षिणामर्पयामि ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः यथाशक्ति सुवर्णपुष्पदक्षिणां सम० ॥ अथ राजोपचारानर्पयेत् ॥ छत्रम् । कनकमयमिदं ते देवि रम्यं सुछत्रं खचितमपि सुवर्णैः सर्वतो रत्नखण्डैः। जयतु जयतु रावैः शब्दितं किङ्किणीनां शिरसि जननि दत्तं दण्डयुक्तं गृहाण ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः छत्रं समर्प० ॥ अथ चामरे ॥ श्वेतैः शिरोजैश्चमरीमृगाणां वालैः सुसूक्ष्मैर्मृदुभिः कृते ये। ताभ्यां सुवर्णाकृतिदण्डयुग्भ्यां त्वा चामराभ्यां परिवीजयामि । ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः चामरे समर्पयामि ॥ अथादर्शः । देव्यर्पितस्ते मुकुरः सुचारुश्चैतस्तथा हाटकदण्डयुक्तः। पूर्णेन्दुवत्पूर्णकलासमेतस्तस्मिन्समालोकय मातरास्यम्॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः आदर्शं सम० ॥ ततस्तालवृन्तम् ॥ रौप्येण दण्डेन युतेन शब्दैर्युक्तेन वै रौप्यसुकिङ्किणीनाम् । सुतालवृन्तेन तवाङ्गकानि मातः सुमन्दं परिवीजयामि ॥ १ ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः तालवृन्तं सम० ॥ तत आरार्तिक्यं कुर्यात् ॥ एकस्मिन्प्रशस्ते कांस्यादिपात्रे रक्तचन्दनैरष्टदलम् अन्यत्किञ्चिद्यन्त्रादिकं वा कृत्वा तस्मिन्पिष्टमयीर्नव सप्त पञ्च वा चतुरस्रा दीपवाटिका निधाय तासु कार्पासेन कृताः कर्पूरगर्भवर्तिका निधाय ता घृतपूर्णाः कृत्वा । ॐ ह्रीं इति मन्त्रेण ताः प्रज्वाल्य। वमिति धेनुमुद्रया अमृतीकृत्य। अस्त्रमन्त्रेण चक्रमुद्रया संरक्ष्य। "ह्रीं श्रीं ह्रीं स्लूं प्लूं ग्लूं म्लूं ह्रीं श्रीं रत्नेश्वर्यै नमः" इति पृथक् पृथक् अभ्यर्च्य तत्पात्रं कराभ्यामादायोत्थाय भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रेण वैदिकमन्त्रैः पौराणिकैश्च श्रीगायत्रीं नीराजयेत् ॥ नीराजनम्—ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ॥ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ ६७ ॥ आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ॥ दिवः सदाꣳसि बृहती वि तिष्ठस ऽ आ त्वेषं वर्त्तते तमः ॥ ६८ ॥ इदꣳ हविः प्रजननं मे ऽ अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये ॥ आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि ॥ अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो ऽ अस्मासु धत्त ॥ ६९ ॥

## ॥ श्रीगायत्रीदेवीनीराजनम् ॥

जय देवि जय देवि, वन्दे गायत्रीं वन्दे गायत्रीम्

त्वश्वासान्संसारात् ( २ ) ह्युद्धर सावित्रि । जय देवि जय देवि, वन्दे० ॥ १ ॥
जननि त्वं गायत्र्याः, सावित्र्या रूपम् ( २ )
त्वञ्च सरस्वतिरूपं, ( २ ) धत्से बहुरूपम् । जय देवि जय देवि, वन्दे० ॥ २ ॥
त्रिपदां त्रिदशैः सर्वैं, नित्यार्चितचरणाम् ( २ )
त्रिगुणातीतां वन्दे, ( २ ) भवसागरपोताम् । जय देवि जय देवि, वन्दे० ॥ ३ ॥
नित्यं द्विजकुलवृन्दैः, प्रातर्मध्याह्ने ( २ )
सायं ध्यानासक्तै ( २ ) रघ्यैः कृतपूजाम् । जय देवि जय देवि, वन्दे० ॥ ४ ॥
मुक्ताविद्रुमहाटक, नीलश्वेतमुखाम् ( २ )
आसनसितपद्मस्थां, ( २ ) पद्मासनबद्धाम् । जय देवि जय देवि, वन्दे० ॥ ५ ॥
पञ्चमुखीं त्वां वन्दे, देवीं गायत्रीम् ( २ )
शशधरशेखरबद्धां, ( २ ) नयनत्रययुक्ताम् । जय देवि जय देवि, वन्दे० ॥ ६ ॥

---

## ॥ श्रीगायत्रीनीराजनम् ॥

जय देवि जय देवि वन्दे गायत्रीं वन्दे गायत्रीम् ॥ ( २ )

गायन्तं त्रात्री त्वं ( २ ) नमामि चिच्छक्तिम् ॥ जय देवि जय देवि, वन्दे० ॥ १ ॥
यत्तद्भर्गस्त्वपति, रविमण्डलमध्ये ( २ ) तदधिष्ठात्री शक्तिः ( २ )
सा त्वं गायत्री ॥ जय देवि जय देवि, वन्दे० ॥ २ ॥
सर्गस्थितिलयकर्त्री, त्वमसि हि चिन्माया ( २ ) सत्यचिदानंदमयी ( २ )
निगमागमरूपा ॥ जय देवि जय देवि, वन्दे० ॥ ३ ॥
जगदाश्रेयवरेण्यं, सृष्टेराधारः ( २ ) भर्गः साक्षाद्रूपं ( २ )
पर्मदहनभूतम् ॥ जय देवि जय देवि, वन्दे० ॥ ४ ॥
देवि ज्ञानस्वरूपे, स्वानन्दे वससि ( २ ) देवस्य धीमहीति ( २ )
त्वमसि हि भवजननि ॥ जय देवि जय देवि, वन्दे० ॥ ५ ॥
यो नो धिय इति बुद्धिः, प्रेरयति प्रबला ( २ ) धीमहीति ध्याता ( २ )
मन्त्रमयी शक्तिः ॥ जय देवि जय देवि, वन्दे० ॥ ६ ॥
निर्गुणरूपे धात्रि, गुणमयि जगदम्बे ( २ ) हंसारूढे भगवति ( २ )
ॐकारैकमये ॥ जय देवि जय देवि, वन्दे० ॥ ७ ॥
सायं केशवरूपे, मध्ये हररूपे ( २ ) प्रातर्ब्रह्मस्वरूपे ( २ )
स्वगाद्यपदसयुते ॥ जय देवि जय देवि, वन्दे० ॥ ८ ॥

व्याहृत्यादिर्मातर्, ह्यास्ते तव मन्त्रः ( २ )
पूर्वचतुष्पदयुक्तः, ( २ ) विंशतिवर्णयुतः। जय देवि जय देवि, वन्दे० ॥ ७ ॥
स्तवनं ते प्रतिमन्त्रं, विहितं वेदार्थे ( २ )
यो यद्ध्यायति मनसा ( २ ) तत्पूर्णं कुरुषे । जय देवि जय देवि वन्दे० ॥ ८ ॥
वरदं ह्यभयं धत्से, जननि ह्यङ्कुशकम् ( २ )
कशां कपालं रज्जुं, ( २ ) कमलद्वयमपि शम्। जय देवि जय देवि, वन्दे० ॥ ९ ॥
भगवति ते सौन्दर्यं, ह्युपमासमतीतम् ( २ )
त्वच्चरणाम्बुजयुग्मं, ( २ ) नमामि बहुवारम् । जय देवि जय देवि, वन्दे० ॥ १० ॥
घृतपूर्णैरेतैस्ते, ज्योतिर्मयदीपैः ( २ )
आरार्तिक्यं कुर्वे, ( २ ) शिरसस्त्वाचरणम् । जय देवि जय देवि, वन्दे० ॥ ११ ॥

ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः नीराजनं समर्पयामि ॥ जलेन प्रदक्षिणां कृत्वा हस्तेनात्मवन्दनं च कृत्वा हस्तं प्रक्षाल्य मन्त्रपुष्पाञ्जलिं कुर्यात् ॥ मन्त्रपुष्पाञ्जलिः—अञ्जलौ पुष्पाण्यादाय तिष्ठन्—ॐ गणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधि-

हिरण्मयं ते पात्रं, सत्ये पिहितास्यं ( २ ) योऽसावादित्ये इति ( २ )
ब्रह्ममयं रूपम् ॥ जय देवि जय देवि, वन्दे० ॥ ९ ॥
सवितुर्वरेणियस्य, चित्रां सुमतिं त्वां ( २ ) वृणे विश्वसावित्रि ( २ )
पीनां शतधाराम् ॥ जय देवि जय देवि, वन्दे० ॥ १० ॥
यामस्य कण्वो अदुहत्, सा त्वं गोरूपा ( २ ) मंत्रार्थमयी देवी ( २ )
जय कर्पूराभे ॥ जय देवि जय देवि, वन्दे० ॥ ११ ॥
इषेत्वा ऊर्जेत्वा, जय अग्निमीडे ( २ ) अग्न आयाहि त्वं ( २ )
शन्नो देवीति ॥ जय देवि जय देवि, वन्दे० ॥ १२ ॥
तव गुणगणने मातः, ननु कोऽपि हि नेशः ( २ ) विश्वामित्रवसिष्ठौ ( २ )
ब्रह्मा किमु शेषः । जय देवि जय देवि, वन्दे० ॥ १३ ॥
आत्मा देवि त्वमसि, प्रज्ञानं ब्रह्म ( २ ) अयमात्माऽहं ब्रह्म ( २ )
सोऽहं सोऽहमिति ॥ जय देवि जय देवि, वन्दे० ॥ १४ ॥
अयि कृपया पाहि त्वं, त्वं देवि त्रात्री ( २ ) जय जय जय चिद्विवे ( २ )
अम्बे सुरवरणि ॥ जय देवि जय देवि, वन्दे० ॥ १५ ॥
जम्बूग्रामनिवासी, महाशंकरशर्मा ( २ ) ब्रह्मानन्दतनूजः ( २ )
आरार्तिककर्ता । जय देवि जय देवि, वन्दे० ॥ १६ ॥

पतिᳯहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ २१९ ॥ ॐसम-
ख्येदेव्याधियासन्दक्षिणयोरुचक्षसा । मामऽआयुःप्रमोषीर्मोऽअहन्तववीरंविदेय-
तवदेविसन्दृशि ॥ २४३ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ
व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ३२२ ॥ अम्बेऽअम्बिके-
म्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ २१८ ॥
तन्तेऽएतमनुजोषम्भराम्येषनेत्यदपचेतयाताऽअग्नेःप्प्रियम्पाथोपीतम् ॥ सᳫंव-
भागास्त्थेषाबृहन्तःप्प्रस्तरेष्ठाःपरिधेयाश्चदेवाः ॥ १७२१८ ॥ मूर्द्धानन्दिवोऽअर-
तिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥ कविᳯसम्राजमतिथिञ्जनानामासन्ना-
पात्रञ्जनयन्तदेवाः ॥ २३८ ॥ प्रोह्यमाणःसोमऽआगतोवरुणऽआसन्द्यामासन्नोग्नि-
राग्नीध्रऽइन्द्रोहविर्द्धानेथर्वोपावह्रियमाणोविश्वेदेवाः ॥ ५८६ ॥ विश्वेदेवाऽअᳯशु-
पुन्युप्तोविष्णुराप्प्रीतपाऽआप्प्याय्यमानोयमःसूयमानोविष्णुःसम्भ्रियमाणो-
वायुःपूयमानःशुक्रःपूतःशुक्रःक्षीरश्रीर्म्मन्थीसक्तुश्रीर्विश्वेदेवाः ॥ ५८७ ॥ पितेवें-
धिसूनवऽआसुशेवोस्वावेशातन्वासंविशस्वाश्विनाध्वर्य्यूसादयतामिहत्त्वा ॥ पृथि-
व्याःपुरीषमस्यप्सोनामतान्त्वाविश्वेऽअभिगृणन्तुदेवाः ॥ ३४४ ॥ षोडशीस्तोमऽओ-
जोद्रविणञ्चतुश्चत्वारिᳯशस्तोमोवर्चोद्रविणम् ॥ अग्नेःपुरीषमस्यप्सोनामतान्त्वा-
विश्वेऽअभिगृणन्तुदेवाः ॥ १५ ॥ समिद्धेऽअग्नावधिमामहानऽउक्थपत्रऽईड्योगृ-
भीतः ॥ तप्तङ्घर्म्मम्परिगृह्यायजन्तोर्जायद्यज्ञमयजन्तदेवाः ॥ १५६ ॥ यस्येमाः-
प्प्रदिशोयस्यवाहकस्मैदेवायहविषाविधेम ॥ यऽआत्मदावलदायस्यविश्वऽउपासते
प्प्रशिषंयस्यदेवाः ॥ १३२३ ॥ अनागास्त्वन्नोऽअदितिःकृणोतुक्षत्त्रन्नोऽअश्वोवन-
ताᳯहविष्मान् ॥ इमानुकम्भुवनासीषधामेन्द्रश्चविश्वेचदेवाः ॥ ४५४६ ॥ बृह-
स्पतेसवितर्बोधयैनᳯसᳯशितञ्चित्सन्तराᳯसᳯशिशाधि ॥ वर्द्धयैनम्महतेसौभगाय-
विश्वऽएनमनुमदन्तुदेवाः ॥ २७ ॥ प्रजापतेस्तपसावावृधानःसद्योजातोदधिषेयज्ञ-
मग्ने ॥ स्वाहाकृतेनहविषापुरोगायाहिसाद्ध्याहविरदन्तुदेवाः ॥ ३२१ ॥ सद्योजातो-
व्यमिमीतयज्ञमग्निर्देवानामभवत्पुरोगाः ॥ अस्यहोतुःप्प्रदिश्यृतस्यवाचिस्वाहा-
कृतᳯहविरदन्तुदेवाः ॥ ३१६ ॥ अरम्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥
यःशᳯसतेस्तुवतेधायिपज्रऽइन्द्रज्ज्येष्ठाऽअस्माँ२ऽअवन्तुदेवाः ॥ ३२ ॥ नहिस्प-
शमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमर्त्यंवैश्वा-
नरङ्क्षैत्रजित्यायदेवाः ॥ ३२१ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्या-
सन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥ ३१६ ॥ ॐ राज्ञा-

धिराजायप्रसह्यसाहिने । नमोवयंवैश्रवणायकुर्महे । समेकामान्कामकामायमह्यम् । कामेश्वरोवैश्रवणोददातु । कुवेरायवैश्रवणाय । महाराजायनमः॥ ॐस्वस्ति। साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुप आन्तादापरार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराडिति । तदप्येष श्लोकोभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥ ॐविश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १६ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिवद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ॥ गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ जानामि पूजनमहं नहि शास्त्रसिद्धं शक्तिस्तु ते परिचिता मम सर्वतश्च ॥ पुष्पाञ्जलिर्जननि यच्चरणाब्जयोस्ते संदीयते परिगृहाण विसृज्य दोषान् ॥ ॐभूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः मन्त्रपुष्पाञ्जलिं सम० ॥ ततः प्रदक्षिणाम् । ॐ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः कृताः । देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥१॥ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ॥ २ ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः प्रदक्षिणां सम० ॥ ततो यथाशक्ति गायत्रीमूलमन्त्रम् अष्टोत्तरशतम् अष्टाविंशतिवारम् दशवारं वा जपेत् ॥ ततः सामान्यार्घोदकं गृहीत्वा । गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ अनेन यथाशक्ति भगवत्याः श्रीगायत्रीदेव्याः प्रीतये गायत्रीमूलमन्त्रस्य कृतेन जपकर्मणा भगवती श्रीगायत्रीदेवी प्रीयतां न मम ॥ इति जलं भगवत्याः श्रीगायत्रीदेव्या वामकरे समर्प्य स्तुतिं कुर्यात् ॥ कर्तुश्च ये प्रणयबद्धहृदः स्वकार्यं स्वार्थाश्रयाज्जगति तान्किमु देवि वच्मि ॥ एवंविधे जगति सर्वत आप्तयुक्ते मातस्त्वमेव मम केवल आश्रयोऽसि ॥ १ ॥ पूजा परा बहुविधा विबुधैः प्रयुक्ता शक्या सदैव नहि देवि निवर्तितुं सा ॥ वादो विधावपि च वैदिकतान्त्रिकाणां मातस्त्वमेव मम केवल आश्रयोऽसि ॥ २ ॥ विद्यन्त एव विधिविष्णुशिवाश्च देवाः पुत्रस्य कार्यकरणे पितृवत्प्रसिद्धाः । बालस्य मातरि यथा न तथैव तेषु मातस्त्वमेव मम केवल आश्रयोऽसि ॥ ३ ॥ मातर्गतेति जननीह विहाय बालं लोके श्रुतं नहि कदाप्यति-

दोषदुष्टम् ॥ त्यक्तुं त्वमर्हसि नहीह तवार्भकं मां मातस्त्वमेव मम केवल आश्रयोऽसि ॥ ४ ॥ स्तोतुं तु मे जननि नास्ति सुशास्त्रबोधः साहित्यशास्त्रमपि नैव मया व्यलोकि॥ मातः स्तुतिं कथमतस्तव देवि कुर्वे मातस्त्वमेव मम केवल आश्रयोऽसि ॥ ५ ॥ न ध्यातं तव चास्यमम्ब रुचिरं चेतःसमाकर्षणं नो मन्त्रस्तव देवि निर्जनवने स्थित्वा प्रजप्तो मया ॥ नो पूजा ह्यपि वेदशास्त्रविहिता पञ्चामृताद्यैः कृता लोके केवलमेव देवि शरणं मातस्त्वमेकाऽस्ति मे॥ ६ ॥ भगवति मम चित्तं पादयोस्तेऽस्तु नित्यं रमतु नयनयुग्मं दर्शने ते च मूर्त्याः ॥ प्रतिभवमभया मे केवला तेऽस्तु भक्तिश्चरणकमलमध्ये मेऽस्तु नित्यं निवासः ॥ ७ ॥ इमां मया कृतां पूजां यथाशक्त्योपहारकैः ॥ त्वमेव पूर्णां तां कर्तुं समर्था देवि मातृवत् ॥ ८ ॥ ॐ भूर्भुवः स्वः साङ्गायै सपरिवारायै सायुधायै भगवत्यै श्रीगायत्रीदेव्यै नमः स्तुतिपाठं सम० ॥ ततो मानसीं परापूजां निवेदितुं पुनः प्रार्थयेत् ॥ नमस्ते करुणामूर्ते नमस्ते भक्तवत्सले ॥ नमस्ते त्रिगुणातीते नमस्ते ज्ञानरूपिणि ॥ १ ॥ बुद्धिः सवासना क्लृप्ता दर्पणं मङ्गलानि च ॥ मनोवृत्तिर्विचित्रा मे नृत्यरूपेण कल्पिता ॥ २ ॥ ध्वनयो गीतरूपेण शब्दावाद्यप्रभेदतः ॥ छत्राणि तव पद्मानि कल्पितानि मयाऽम्ब ते ॥ ३ ॥ सुषुम्णा ध्वजरूपेण प्राणाद्याश्चामरात्मना ॥ अहङ्कारो गजत्वेन वेगः क्लृप्तो रथात्मना ॥ ४ ॥ इन्द्रियाण्यश्वरूपाणि शब्दादि रथवर्त्मना ॥ मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ॥ ५ ॥ सर्वमन्यत्तथा क्लृप्तं तवोपकरणात्मना॥ इमां मे मानसीं पूजां गृहाण जगदीश्वरि॥६॥ हृदयकमलमध्ये दीपवद्वेदसारां प्रणवयुजमतर्क्यां योगिभिर्ध्यानगम्याम् । हरिशिवगुरुयोगां सर्वभूतस्थितां त्वां सकृदपि मनसा यो ध्यायते सोऽपि मुक्तः ॥ ७ ॥ शशिसमसितवर्णं वर्णरूपादिहीनं निखिलसुगुणयुक्तं गुह्यरूपं सुसूक्ष्मम् ॥ हृदयकमलमध्ये देवि रूपं तवेदं जननि भवभयघ्नं सन्ततं चिन्तयामि ॥ ८ ॥ अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ॥ विपरीतञ्च तत्सर्वं क्षमस्व परमेश्वरि ॥ ९ ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि॥ यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ १० ॥ आवाहनञ्च पूजाञ्च त्वन्माहात्म्यं जपं तथा ॥ विसर्जनं न जानामि देवि सर्वं क्षमस्व मे॥ ११ ॥ यदक्षरपदभ्रष्टं स्वरव्यंजनवर्जितम् ॥ तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ १२ ॥ यस्याः स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति वन्दे तां जगदीश्वरीम् ॥ १३ ॥ एवं स्तुत्वा पूजानिवेदनं कुर्यात्॥ हस्ते सामान्यार्घोदकं गृहीत्वा। इतः पूर्वं प्राणबुद्धि-

देहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यावस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना च यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं तथैव मदीयं सकलं भगवत्याः श्रीगायत्रीदेव्याश्चरणकमले समर्पितमस्तु ॥ इति जलं देव्यै निवेदयेत्। ततो ब्राह्मणभोजनसङ्कल्पं कुर्यात् ॥ हस्ते जलमादाय । मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अद्येऽह्नि यथासङ्ख्याकान् ब्राह्मणान्यथासङ्ख्याकाः सुवासिनीः यथासङ्ख्याकान् वटुकान् यथासङ्ख्याकाः कुमारिकाश्च भोजयिष्ये तेन कर्माधीश्वरी जगद्धात्री परामा वेदजननी साङ्गा सपरिवारा सायुधा भगवती श्रीगायत्रीदेवी प्रीयतां न मम ॥ ततो विशेषार्घपात्रमुत्थाप्य । साधु वा साधु वा कर्म यद्यदाचरितं मया ॥ तत्सर्वं कृपया देवि गृहाणाराधनं मम ॥ गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि । पूजाराधनकाले त्वं पुनरागमनं कुरु ॥ इति पात्रं देव्या उपरि त्रिवारं भ्रामयित्वा तस्मात्किञ्चिज्जलं देव्याः शिरसि दत्त्वा तस्मात्स्वात्मानं साधकांश्च सम्प्रोक्ष्य विशेषार्घपात्रेण सहान्येषां सर्वपात्राणाञ्च स्थानादुत्थापनं कुर्यात्॥ तत आचार्यादिवृतानां ब्राह्मणानां पूजनं कुर्यात्॥ हस्तेऽक्षतान्गृहीत्वा । ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ इति पठित्वा सर्वेभ्यो ब्राह्मणेभ्यो नमः इति तानक्षतैः सम्पूज्य भूयसीदक्षिणासङ्कल्पं कुर्यात् ॥ हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं वृतेभ्यो ब्राह्मणेभ्यो यथाशक्ति भूयसीं दक्षिणां दातुमहमुत्सृजे॥ इति सङ्कल्पं विधाय तेभ्यो दक्षिणां दद्यात्॥ तत आचार्यः सपत्नीकस्य यजमानस्य भाले तिलकं कुर्यात् । तद्यथा । ॐ स्वस्तिनऽइन्द्रो० ॥ ¹/₂ ॥ तत आचार्यो वृतेभ्य ऋग्यजुःसामाथर्वविद्भ्यो ब्राह्मणेभ्यो हस्तेऽक्षतान्दत्वा तैः सह यजमानाय आशीर्वादं दद्यात् ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते । धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ अक्षतान्विप्रहस्तस्थान्नित्यं वन्दन्ति ये नराः । आयुः श्रीश्च बलं तेषां वर्धयन्ति दिने दिने ॥ इति आचार्यः सर्वेभ्य ऋत्विग्भ्य अक्षतान् गृहीत्वा सपत्नीकाय यजमानाय दद्यात् ॥ ततो यजमानः भगवत्याः श्रीगायत्रीदेव्याः पञ्चामृतं चरणोदकं प्रसादञ्च भोजनरूपं गृहीत्वा यथासुखं विहरेत् । ततो ब्राह्मणैः स्वकीयसम्बन्धिवर्गैर्भृत्यवर्गैश्च सह स्वयमपि भुञ्जयात् ॥

॥ इति श्रीगायत्रीदेवीपूजनप्रयोगः समाप्तः ॥

---

## ॥ अथ गायत्रीमन्त्रनित्यजपविधिः ॥

आचार्यः पूर्वोक्तरीत्या सर्वान्ब्राह्मणान्भूतशुद्ध्यादिमहान्यासान्कारयित्वा भगवत्याः श्रीगायत्रीदेव्याश्च पूजनमपि यजमानद्वारा निर्वर्त्य पूर्वं वा पङ्क्त्याकारेण कुशकम्बलाद्यन्यतमास्तृते काष्ठपट्टे जपार्थं वृतान्ब्राह्मणानुपवेश्य जपसङ्कल्पं[1] भगवत्याः श्रीगायत्रीदेव्याः शापमोचनं चतुर्विंशतिमुद्राणां प्रदर्शनादिकञ्च कर्तुं सर्वान् ब्राह्मणान् मूलमंत्रेण आचमनं प्राणायामञ्च कारयेत् ॥ तद्यथा ॥ ॐ भूर्भुवः स्वः तत्स० ॐआत्मतत्त्वं शोधयामि नमः स्वाहा ॥ १ ॥ ॐभूर्भुवः स्वः तत्स० ॐ विद्यातत्त्वं शोधयामि नमः स्वाहा ॥ २ ॥ ॐभूर्भुवः स्वः तत्स० ॐशिवतत्त्वं शोधयामि नमःस्वाहा ॥ ३ ॥ इति त्रिराचमनं कारयित्वा सशिरस्कसप्तव्याहृतिसहितेन मूलमंत्रेण प्राणायामं कारयेत् । ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐजनः ॐ तपः ॐ सत्यं ॐ तत्सवि० ॐ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम् ॥ एवं यथाशक्ति नव त्रीन् वा प्राणायामं विधाय ब्राह्मणा हस्ते जलं गृहीत्वा जपसंख्यासङ्कल्पं कुर्युः । तद्यथा । देशकालौ सङ्कीर्त्य अस्मद्यजमानस्य मनःकामनापरिपूर्णार्थं स्वात्मनः श्रेयोऽर्थञ्च तेन प्रारब्धस्य श्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं कृतसङ्कल्पमध्यात् पृथक् पृथक् अमुकसहस्र[2]संख्याकं जपं करिष्यामहे[3] । इति सङ्कल्पं विधाय गायत्रीशापविमोचनं कुर्यात् ॥ अस्य श्रीब्रह्मशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता प्रजापतिर्ऋषिः । भुक्तिमुक्तिप्रदा ब्रह्मशापविमोचनी गायत्रीशक्तिर्देवता । गायत्रीच्छन्दः। ब्रह्मशापविमोचनार्थे जपे विनियोगः॥ ॐगायत्रीं ब्रह्मेत्युपासीत यद्रूपं ब्रह्मविदो विदुः । तां पश्यन्ति धीराः सुमनसा वाचामग्रतः ॥ ॐ वेदान्तनाथाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रह्म प्रचोदयात् ॥ ॐदेवि गायत्रि त्वं ब्रह्मशापविमुक्ता भव । पुनर्हस्ते जलं गृहीत्वा । अस्य श्रीविश्वामित्रशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता विश्वामित्र ऋषिः । विश्वामित्रानुगृहीता गायत्रीशक्तिर्देवता । वाग्देहा गायत्रीच्छन्दः । विश्वामित्रशापविमोचनार्थे जपे विनियोगः ॥ ॐ गायत्रीं भजाम्यग्निमुखीं विश्वगर्भां यदुद्भवा देवाश्चक्रिरे विश्वसृष्टिम् । तां कल्याणीमिष्टकरीं

---

१ जपादौ शिवसङ्कल्पवाचकान् षड् मन्त्रान् यज्जाग्रतः इत्यादि पठित्वा ततो गायत्रीजपं कुर्यात् । तथैव जपारम्भात्प्राक् शताक्षरीमपि गायत्रीं सकृज्जपेत् । तद्यथा । तत्सवितुरिति चतुर्विंशतिवर्णात्मको गायत्रीमन्त्रः । ततो जातवेदसे० इति चतुश्चत्वारिंशद्वर्णात्मको मन्त्रः । ततः त्र्यम्बकम् इति त्रयस्त्रिंशद्वर्णात्मको मन्त्रः ॥ एवं तिस्र ऋचो मिलित्वा शताक्षरी गायत्री कथिता ॥ २ गायत्रीमन्त्रस्य जपोऽपि त्रिसहस्रसंख्याक उत्तमः । चतुःसहस्रसंख्याको मध्यमः । तदधिकसंख्याकः कनिष्ठः । उत्तममध्यमकनिष्ठानाम् उत्तममप्यनो कार्यो न कनिष्ठ ॥ ३ जपकर्ता एक एव विप्रो भवेत् । मम यजमानेन० इत्यादिपुण्या अपमहं कारये । एवं सङ्कल्पं कुर्यात्॥

प्रपद्ये यन्मुखान्निःसृतोऽखिलवेदगर्भः । ॐदेवि गायत्रि त्वं विश्वामित्रशापविमुक्ता भव ॥ अस्य श्रीवसिष्ठशापविमोचनमन्त्रस्य निग्रहानुग्रहकर्ता श्रीवसिष्ठ ऋषिः । शक्तिर्देवता । गायत्रीच्छन्दः । श्रीवसिष्ठशापविमोचनार्थे जपे विनियोगः । सोऽहमर्कमयं ज्योतिरात्मज्योतिरहं शिवः । आत्मज्योतिरहं शुक्रः सर्वज्योतीरसोऽस्म्यहम् ॥ योनिमुद्रां प्रदर्श्य गायत्रीमन्त्रं पठित्वा । ॐ देवि गायत्रि त्वं वसिष्ठशापविमुक्ता भव ॥ एवं शापविमोचनं कृत्वा चतुर्विंशतिमुद्राः प्रदर्शयेत् ॥ सुमुखं सम्पुटं चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखं चैव चतुःपञ्चमुखं तथा ॥ १ ॥ षण्मुखाधोमुखं चैव व्यापकाञ्जलिकं तथा । शकटं यमपाशञ्च ग्रथितं चोन्मुखोन्मुखम् ॥ २ ॥ प्रलम्बं मुष्टिकञ्चैव मत्स्यः कूर्मो वराहकम् । सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥ ३ ॥ एताश्चतुर्विंशतिमुद्राः प्रदर्श्य रुद्राक्षमालां मूलमन्त्रेण संप्रोक्ष्य । ॐमां माले महामाये सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव । इति सम्प्रार्थ्य । ॐह्रीं सिद्ध्यै नमः इति मालां सम्पूज्य भगवत्याः श्रीगायत्रीदेव्या ध्यानं कुर्यात् ॥ ॐमुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥ अथ प्रातर्मध्याह्नसायंकालिकादिध्यानम् ॥ ब्रह्माणी चतुराननाऽक्षवलया कुम्भकरा स्रुक्स्रुवौ बिभ्राणाऽरुणकान्तिरिन्दुवदना ऋग्रूपिणी बालिका । हंसारोहणकेलिरम्बरमणेर्बिम्बाश्रिता भूतिदा गायत्री हृदि भाविता भवतु नः सम्पत्समृद्ध्यै सदा ॥ १ ॥ रुद्राणी नवयौवना त्रिनयना वैयाघ्रचर्माम्बरा खट्वाङ्गत्रिशिखाक्षसूत्रवलया ध्येया यजूरूपिणी ॥ विद्युद्दामजटाकलापविलसद्बालेन्दुमौलिर्मुदा सावित्री वृषवाहना शिततनूर्भूत्यै श्रियै चास्तु नः ॥ २ ॥ ध्येया सा च सरस्वती भगवती पीताम्बरालङ्कृता श्यामातन्विजयादिभिः परिलसद्गात्राञ्चिता वैष्णवी ॥ तार्क्ष्यस्था मणिनूपुराङ्गदशतग्रैवेयभूषोज्वला हस्तालम्बितशङ्खचक्रसुगदा भूत्यै श्रियै चास्तु नः ॥ ३ ॥ इति ध्यात्वा मानसोपचारैः पूजयेत् ॥ तद्यथा । भगवत्यै श्रीगायत्रीदेव्यै नमः लं पृथिव्यात्मकं गन्धं परि० । हं आकाशात्मकं पुष्पं परि० । यं वाय्वात्मकं धूपं परि० । रं वह्न्यात्मकं दीपं परि० । वं अमृतात्मकं नैवेद्यं परि० । सं सोमात्मकं ताम्बूलं परि० । छत्रचामरमुकुरमुकुटपादुकाः परि०॥ एवं मानसोपचारैः सम्पूज्य । ततः सर्वे ब्राह्मणा मूलमंत्रस्यार्थं यजमानस्य कल्याणञ्च चिन्तयन्तः श्रीगायत्रीजपं कुर्युः ॥ ततो जपान्ते मालां शिरसि निधाय

१ प्रणवं पूर्वमुच्चार्य भूर्भुवःस्वस्तथा परम् । गायत्री प्रणवं चान्ते जप एव उदाहृतः ।

भगवत्याः श्रीगायत्रीदेव्या मूलमन्त्रस्य न्यासान् कुर्युः। तद्यथा॥ हस्ते जलं गृहीत्वा। ॐ तत्सवितुरित्यस्या गायत्र्या विश्वामित्र ऋषिः। सविता देवता। गायत्रीच्छन्दः। अग्निर्मुखम्। ब्रह्मा शिरः। विष्णुर्हृदयम्। रुद्रो ललाटम्। पृथ्वी योनिः। त्रैलोक्यं चरणौ। वरेणीति बीजम्। यम् इति शक्तिः। यात् इति कीलकम्। सकलपापक्षयार्थे न्यासे विनियोगः। श्रीविश्वामित्रर्षये नमः शिरसि। गायत्रीच्छन्दसे नमः मुखे। सवितृदेवतायै नमः हृदये॥ विनियोगाय नमः सर्वाङ्गे॥ अथ करादिन्यासाः। ॐ तत्सवितुर्ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः। ॐ वरेणियं विष्णवात्मने तर्जनीभ्यां नमः। ॐ भर्गो देवस्य रुद्रात्मने मध्यमाभ्यां नमः। ॐ धीमहि ईश्वरात्मनेऽनामिकाभ्यां नमः। ॐ धियो यो नः सदाशिवात्मने कनिष्ठिकाभ्यां नमः। प्रचोदयात्सत्यात्मने करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि॥ ॐ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः। ॐ वरेणियं विष्णवात्मने शिरसे स्वाहा। ॐ भर्गो देवस्य रुद्रात्मने शिखायै वषट्। ॐ धीमहि ईश्वरात्मने कवचाय हुम्। ॐधियो यो नः सदाशिवात्मने नेत्रत्रयाय वौषट्। ॐप्रचोदयात् सत्यात्मने अस्त्राय फट्॥ ततः सव्याहृतिगायत्रीन्यासान् कुर्यात्। ॐभूः अङ्गुष्ठाभ्यां नमः। ॐभुवः तर्जनीभ्यां नमः। ॐ स्वः मध्यमाभ्यां नमः। ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः। ॐभर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः। ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः। ततो हृदयादि॥ ॐभूः हृदयाय नमः। ॐ भुवः शिरसे स्वाहा। ॐ स्वः शिखायै वषट्। ॐ तत्सवितुर्वरेण्यं कवचाय हुम्। ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट्। ॐ धियो यो नः प्रचोदयात् अस्त्राय फट्। ततः करसम्पुटौ कृत्वा प्रार्थयेत्॥ ॐ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्। गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥ एवं सम्प्रार्थ्य अष्टौ मुद्राः प्रदर्शयेत्। सुरभिर्ज्ञानवैराग्ये योनिः कूर्मोऽथ पङ्कजम्। लिङ्गं निर्वाणकं चैव जपान्तेऽष्टौ प्रदर्शयेत्॥ इत्यष्टौ मुद्राः प्रदर्श्य। सर्वे ब्राह्मणाः हस्ते जलं गृहीत्वा। अस्माभिः यथाशक्ति सङ्कल्पानुसारं कृतेन जपकर्मणा भगवती श्रीगायत्रीदेवी प्रीयतां न मम॥ इत्युक्त्वा तज्जलं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्। सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि॥ इति देव्यै निवेद्य प्रार्थयेत्॥ हीनो विभक्तिवर्णैश्च व्यञ्जनैश्च स्वरैरपि। जपो मे क्षम्यतां देवि प्रसादं कुरु किङ्करे॥ इति प्रार्थयेयुः॥

॥ इति श्रीगायत्रीमन्त्रनित्यजपविधिः॥

## ॥ अथ कुण्डस्थदेवतापूजनप्रयोगः ॥

सपत्नीको यजमानः कुण्डस्य समीपे कुण्डपश्चिमदिग्भागे उपविश्य आचमनं प्राणायामञ्च कृत्वा हस्ते जलं गृहीत्वा देशकालौ सङ्कीर्त्य सङ्कल्पं कुर्यात् । अद्येत्यादि० शुभपुण्यतिथौ भगवत्या जगदम्बिकायाः श्रीगायत्रीदेव्याः प्रीत्यर्थं सव्याहृतिचतुर्विंशतिवर्णात्मकस्य श्रीगायत्रीमन्त्रस्य ब्राह्मणद्वारा कृतस्य अमुकलक्षजपा[1]नुष्ठानकर्मणो देशांशेन होमार्थं मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अस्मिन्कुण्डे कुण्डस्थदेवतानाम् आवाहनं पूजनं च करिष्ये । पुनर्जलमादाय । तथा च कुण्डे पञ्चभूसंस्कारपूर्वकम् अग्निप्रतिष्ठां करिष्ये । तत आचार्यानुज्ञया कश्चिद्विप्र उत्थाय हस्ते कुशान् गृहीत्वा तैः अग्न्यायतनं ( कुण्डं ) सम्मार्ज्य कुशोदकेन प्रोक्षयेत् । ॐआपो हिष्ठामयो० ॥ ॐयोवः शिवतमो० ॥ ॐतस्माऽअरङ्ग० ॥ ततो यजमानो हस्तेऽक्षतानादाय कुण्डं स्पृष्ट्वा आवाहयेत् ॥ आवाहयामि तत्कुण्डं विश्वकर्मविनिर्मितम् । शरीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम् ॥ ॐ भूर्भुवः स्वः कुण्डाय नमः कुण्डम् आवाह० स्थाप० ॥ सर्वोपचारार्थे गन्धं पुष्पं सम० । ततः प्रार्थयेत् ॥ ये च कुण्डे स्थिता देवाः कुण्डाङ्गे याश्च देवताः । ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं ददन्तु नः ॥ इति सम्प्रार्थ्य कुण्डमध्ये देवान् आवाहयेत् । हस्तेऽक्षतानादाय । ॐ विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् । तस्मैविशः समनमन्तपूर्वीरयमुग्रोविहव्व्योयथासत् । उपयामगृहीतोसीन्द्रायत्वाविश्वकर्म्मणऽएषते योनिरिन्द्रायत्त्वाविश्वकर्म्मणे ॥ ५८ ॥ कुण्डमध्ये ॐ भूर्भुवः स्वः विश्वकर्मणे नमः विश्वकर्माणम् आवा० स्थाप० ॥ भो विश्वकर्मन् इहागच्छ इह तिष्ठ ॥ ततः प्रार्थयेत् ॥ ब्रह्म वक्त्रं भुजौ क्षत्रमूरू वैश्यः प्रकीर्तितः । पादौ यस्य तु शूद्रो हि विश्वकर्मात्मने नमः । अज्ञानाज्ज्ञानतो वापि दोषाः स्युः खननोद्भवाः ॥ नाशय त्वखिलांस्ताँस्तु विश्वकर्मन्नमोऽस्तु ते ॥ ततो मेखलायोनिकण्ठनाभिवास्तुदेवतानाम् आवाहनं कुर्यात् ॥ तत्रादौ मेखलादेवता आवाहयेत् । हस्तेऽक्षतानादाय । ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪसुरेस्वाहा ॥ १५ ॥ विष्णो यज्ञपते देव दुष्टदैत्यनिपूदन ॥ विभो यज्ञस्य रक्षार्थं कुण्डे सन्निहितो भव ॥ उपरिमेखलायां श्वेतवर्णालङ्कृतायां ॐभूर्भुवःस्वः विष्णवे नमः विष्णुम् आवा० स्थाप० । भो विष्णो इहागच्छ इह तिष्ठ ॥ पुनरक्षतानादाय । ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्च-

---

१ यावत्सङ्ख्याकजपास्तत्संख्या वक्तव्या ॥ २ दशांशेन इत्यस्य स्थाने शतांशेन चेत् तथोहः कार्यः ॥

विवेः ॥ ३/१३ ॥ हंसपृष्ठसमारूढ आदिदेव जगत्पते । रक्षार्थं मम यज्ञस्य मेखलाया स्थिरो भव ॥ १ ॥ मध्यमेखलायां रक्तवर्णालङ्कृतायां ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणम् आवा० स्थाप० । भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ पुनर्हस्तेऽक्षतानादाय ॥ ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १/१६ ॥ गङ्गाधर महादेव वृषारूढ महेश्वर । आगच्छ मम यज्ञेऽस्मिन्रक्षार्थं रक्षसां गणात् ॥ ॐ भूर्भुवः स्वः रुद्राय नमः रुद्रम् आवा० स्थाप० ॥ भो रुद्र इहागच्छ इह तिष्ठ ॥ ततो योन्यावाहनम् । हस्तेऽक्षतानादाय ॥ क्षत्रस्ययोनिरसि क्षत्रस्यनाभिरसि ॥ मात्त्वाहिꣳसीन्मामाहिꣳसीः ॥ १/२० ॥ आगच्छ देवि कल्याणि जगदुत्पत्तिहेतुके ॥ मनोभवयुते रम्ये योनि त्वं सुस्थिरा भव ॥ १ ॥ जगदुत्पत्तिकायै मनोभवयुतायै योन्यै नमः योनिमावा० स्थाप० ॥ भो जगदुत्पत्तिके मनोभवयुते योनि इहागच्छ इह तिष्ठ ॥ ततः प्रार्थयेत् ॥ सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुरशीतिलक्षाणि पन्नगाद्याः सरीसृपाः ॥ पशवः पक्षिणः सर्वे संसरन्ति यतो भुवि ॥ योनिरित्येव विख्याता जगदुत्पत्तिहेतुका ॥ मनोभवयुता देवी रतिसौख्यप्रदायिनी ॥ मोहयित्री सुराणाञ्च जगद्धात्रि नमोऽस्तु ते ॥ योने त्वं विश्वरूपाऽसि प्रकृतिर्विश्वधारिणी ॥ कामस्था कामरूपा च विश्वयोन्यै नमो नमः ॥ अथ कण्ठदेवतावाहनम् । हस्तेऽक्षतानादाय । ॐनीलग्रीवाःशितिकण्ठादिवꣳरुद्राऽउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५६/१६ ॥ नीलग्रीवाःशितिकण्ठाःशर्वाऽअधःक्षमाचराः ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ ५७/१६ ॥ कुण्डस्य कण्ठदेशोऽयं नीलजीमूतसन्निभः ॥ अस्मिन्नावाहये रुद्रं शितिकण्ठं कपालिनम् ॥ ॐ भूर्भुवः स्वः कण्ठे रुद्राय नमः रुद्रम् आवा० स्थाप० । भो रुद्र इहागच्छ इह तिष्ठ । ततः प्रार्थयेत् ॥ कण्ठ मङ्गलरूपेण सर्वकुण्डे प्रतिष्ठितः । परितो मेखलास्त्वत्तो रचिता विश्वकर्मणा ॥ ततो नाभ्यावाहनम् ॥ ॐ नाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेपचितिर्भसत् । आनन्दनन्दावाण्डौ मे भगःसौभाग्यम्पसः ॥ जङ्घाभ्यां पद्भ्यां धर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥ ९/२० ॥ पद्माकाराऽथवा कुण्डसदृशाकृतिबिभ्रती । आधारः सर्वकुण्डानां नाभिमावाहयामि ताम् ॥ ॐ भूर्भुवः स्वः नाभ्यै नमः नाभिम् आवा० स्थाप० ॥ भो नाभे इहागच्छ इह तिष्ठ ॥ ततः प्रार्थयेत् ॥ नाभे त्वं कुण्डमध्ये तु सर्वदेवैः प्रतिष्ठिता । अतस्त्वां पूजयामीह शुभदा सिद्धिदा भव ॥ ततः कुण्डमध्ये नैर्ऋत्यकोणे वास्तुपुरुषमावाहयेत् ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः । यत्त्वे महे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥

(पा० गृ० ) ॥ आवाहयामि देवेशं वास्तुदेवं महाबलम् । देवदेवं गणाध्यक्षं पातालतलवासिनम् ॥ ॐ भूर्भुवः स्वः नैर्ऋत्यकोणे वास्तुपुरुषाय नमः वास्तुपुरुषम् आवा० स्थाप० ॥ भो वास्तुपुरुष इहागच्छ इह तिष्ठ ॥ ततः प्रार्थयेत् । यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमङ्गलम् । व्यापिनं भीमरूपञ्च सुरूपं विश्वरूपिणम् ॥ पितामहसुतं मुख्यं वन्दे वास्तोष्पतिं प्रभुम् ॥ वास्तुपुरुष देवेश सर्वविघ्नहरो भव । शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे ॥ एवं कुण्डस्थितान् सर्वान्देवानावाह्यैकतन्त्रेण प्रतिष्ठां कृत्वा पूजयेत् । हस्तेऽक्षतानादाय । ॐ मनोजूतिर्जु० । ॐभूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः सुप्रतिष्ठिता वरदा भवेयुः ॥ ततो गन्धाक्षतपुष्पाण्यादाय ॥ ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ इति सम्पूज्य । एकस्मिन्पात्रे बलिदानार्थं दध्योदनं कुण्डाद्बहिः संस्थाप्य बलिदानं कुर्यात् । हस्ते जलं गृहीत्वा । ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः यथाशक्ति अमुं दध्योदनबलिं सम० ॥ पुनर्जलं गृहीत्वा । अनेन यथाशक्ति विश्वकर्मादिवास्तुपुरुषान्तानां कुण्डस्थदेवानां पूजनेन बलिदानेन च विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः प्रीयन्तां न मम ॥

॥ इति कुण्डस्थदेवतापूजनप्रयोगः ॥

---

अथ पञ्चभूसंस्कारपूर्वकाग्निप्रतिष्ठापनप्रयोगः ॥

आचार्यः कश्चिद्विप्रो वा यजमानानुज्ञया हस्ते जलं गृहीत्वा । अस्मिन्कुण्डे[1] (यजमानानुज्ञया)पञ्चभूसंस्कारपूर्वकम् अग्निप्रतिष्ठां करिष्ये । इति संकल्प्य दक्षिणहस्ते दर्भपुञ्जं गृहीत्वोत्थाय दक्षिणत आरभ्योदक्संस्थं[2] पश्चिमतः प्रागन्तं त्रिवारं

---

१ प्रायः यज्ञस्य सम्पूर्णफलप्राप्तिसाधकं अपायासमाप्ति याज्ञिकं कर्म निगद्यते ॥ तच्च सर्वम् अग्न्याधीनं ज्ञेयम् ॥ अग्निश्च कुण्डाधीनः ॥ कुण्डञ्च आहुतिसंख्यार्हहस्तप्रमाणाधीनम् ॥ अतो याज्ञिककर्माचार्येण आहुतिप्रमाणं प्रथमतो विचार्य तत्संख्यार्हहस्तप्रमाणं कुण्डं विधेयम् अन्यथा यजमानस्य फलानुसन्धाने वैगुण्यं भवेत् ॥ यथा–आयामखातविस्तारो यथायथं तथातथम् । न्यूनाधिकं न कर्तव्यं कुण्डं तद्वंशनाशकम् ॥ खातेऽधिके भवेद्रोगी हीने धेनुधनक्षयम् । वक्रे कुण्डे च सन्तापो मरणं छिन्नमेखले ॥ मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः । योनिहीने स्त्रिया नाशो विकण्ठेऽपीति पद्यताम् (मृत्युम्) ॥ एवं लक्षणहीनस्य कुण्डस्य फलमीदृशम् । अतो दोषान्विचिन्त्यादौ कुण्डनिर्माणमारभेत् ॥ कुण्डरत्नाकरे–स्वल्पहोमे कुण्डकरणाशक्तौ स्थण्डिलमेवाभिहितम् ॥ यद्वाऽशक्तौ स्थण्डिलं स्वल्पहोमे रचैर्वा मृण्मयैर्वालुकाभिः ॥ अङ्गुष्ठोच्चं वेदमानाङ्गुलैर्वा वेदास्रं वै तद्धि मानं विशालम् ॥

२ परिसमूहनादिविषये शारदातिलकस्य पञ्चमपटले टीकातः प्रागग्राणां दक्षिणारम्भमुदक्संस्थम् । उदगग्राणां पश्चिमारभं प्राक्संस्थं वा परिसमूहनादिकमप्यवगम्यते । ताश्च सर्वा (क्रियाः) प्रादेशमिता (कार्याः) इत्यपि सम्प्रदायः ॥ तदुक्तं संग्रामगणितन्त्रे-प्राचीपूर्वमुदक्संस्थं दक्षिणारंभमालिखेत् । उदगग्रं पूर्वसंस्थं पश्चिमारभ-

परिसमूहनं कुर्यात् । तद्यथा । दर्भैः परिसमूह्य परिसमूह्य परिसमूह्य । एवं परिसमूहनं विधाय कुण्डाद्बहिः पूर्वस्यामीशान्यां वा दर्भत्यागं कुर्यात् । ततो दक्षिणहस्तेन गोमयमादाय पूर्ववत् दक्षिणत आरभ्योदक्संस्थं पश्चिमतः प्रागन्तं गोमयेनोपलिंपेत् ॥ तद्यथा । गोमयेन उपलिप्य उपलिप्य उपलिप्य । एवं त्रिवारम् उपलेपनं कृत्वा हस्तं प्रक्षाल्य दक्षिणहस्तेन स्रुवमादाय पूर्ववद्दक्षिणत आरभ्योदक्संस्थं पश्चिमतः प्रागन्तं स्रुवमूलेन त्रिरुल्लेखनं कुर्यात् ॥ तद्यथा । स्रुवमूलेन उल्लिख्य उल्लिख्य उल्लिख्य । एवं त्रिवारमुल्लेखनं कृत्वाऽनामिकाङ्गुष्ठेन पूर्ववत् कुण्डतः पांसूनामुद्धरणं विदध्यात् । तद्यथा । अनामिकाङ्गुष्ठेन उद्धृत्य उद्धृत्य उद्धृत्य । एवं त्रिवारं पांसूनामुद्धरणं कृत्वा तान् प्राच्यां क्षिप्त्वा पूर्ववत् न्युब्जपाणिना जलेन त्रिवारम् अभ्युक्षणं कुर्यात्॥तद्यथा। उदकेन अभ्युक्ष्य अभ्युक्ष्य अभ्युक्ष्य। ततोऽग्निं स्थापयेत्। बहुपशोर्वैश्यस्य गृहात् श्रोत्रियागारात् सूर्यकान्तसम्भूतात् स्वकीयगृहाद्वा सुवासिन्या स्त्रिया आनीतं निर्धूमम् अन्यताम्रादिपात्रेणाच्छादितम् अग्निं कुण्डस्य आग्नेय्यां दिशि निधाय आच्छादितं पात्रम् उद्घाट्य हुं फट् इति क्रव्यादांशम् अग्निं नैर्ऋत्यां दिशि परित्यज्य अग्निं कुण्डस्य उपरि त्रिवारं भ्रामयित्वा । ॐ अग्निं दूतम्पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२ आसादयादिह ॥ २२ ॥ इति मन्त्रं पठन् कुण्डे स्वात्माभिमुखं शतमङ्गलनामानम् अग्निं स्थापयेत् ॥ ततोऽग्न्यानीतपात्रे साक्षतोदकं निषिच्य तत्र शिष्टाचारात्किञ्चिद्यथाशक्ति हिरण्यं रौप्यद्रव्यं वा निक्षिप्य तत् द्रव्यं यजमानपत्न्यै दद्यात् । ततोऽग्नौ आवाहनादिमुद्राः प्रदर्शयेत् ॥ भो अग्ने त्वम् आवाहितो

---

मालिखेत् ॥ अतोऽत्रप्युच्यते परिसमूहनादिक्रियायामपि पक्षद्वयं दक्षिणारंभमुदक्संस्थं प्रागन्तं कार्यम् । अथवा पश्चिमारंभं पूर्वसंस्थमुदगन्तं कार्यम् ॥

१ कुशकण्डिकाभाष्ये–धृत्वाऽङ्गुष्ठकनिष्ठाभ्यां मूलैः साग्रैः कुशत्रयम् ॥ तदग्रैस्तस्य रजसः पूर्वस्यामपसारणम् ॥ १ ॥ कृमिकीटपतङ्गाद्या विचरन्ति महीतले ॥ तेषां संरक्षणार्थाय परिसमूहनमुच्यते ॥ २ ॥

२ कुशकण्डिकायाम्–पुरा शक्रेण वज्रेण हतो वृत्रो महासुरः ॥ व्यापिता मेदसा पृथ्वी तदर्थमुपलेपनम् ॥

३ हरिहरस्तु–प्रागग्रा उदक्संस्थाः स्थण्डिलपरिमाणाः तिस्रो रेखाः कर्तव्या इति वक्ति ॥ कल्पवल्ल्यामपि–रेखात्रयमुदक्संस्थं प्रागग्रं स्थण्डिलावधि ॥ अथवा तत्प्रकुर्वीत द्वादशाङ्गुलमायतम् ॥ वस्तुतस्तु इदमुल्लेखनं यावत्प्रमाणं स्थण्डिलस्य तावत्प्रमाणं स्रुवमूलेन यज्ञपात्रविशेषेण स्फ्यनामकेन खड्गाकृतिना खादिरेण वा कर्तव्यम् ॥

४ बहुपशोर्गृहादग्निमाहरेत् इति गृह्यसूत्रे । ५ शारदातिलके तु–सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् । आनीय वह्निं पात्रेण क्रव्यादांशं परित्यजेत् ॥ वसिष्ठसंहितायामपि–श्रोत्रियागारजं वाऽपि सूर्यकान्तोद्भवं तु वा । अरणीसम्भवं वाऽपि क्षिप्तं स्वर्गादिभाजने ॥ "मध्यमः स्वगृहादितः" । इति शङ्खवाक्यात्स्वगृहादग्निप्रणयनं श्रेयम् ॥

६ अत्रिस्तु–पात्रान्तरेण विहिते ताम्रपात्रादिके शुभे । अग्निप्रणयनं कुर्याच्छरावे तादृशेऽपि च ॥

७ निखात उत्तरांशो ध्यातव्योऽग्निः शाखादेवीमुखा ।

भव । भो अग्ने त्वं संस्थापितो[1] भव । भो अग्ने त्वं संनिहितो[2] भव । भो अग्ने त्वं संनिरुद्धो[3] भव । भो अग्ने त्वं सकलीकृतो[4] भव ॥ भो अग्ने त्वम् अवगुण्ठितो[5] भव । भो अग्ने त्वम् अमृती[6] कृतो भव । भो अग्ने त्वं परमीकृतो[7] भव ॥ इति तत्तन्मुद्राः प्रदर्श्य । अग्निम् इन्धनप्रक्षेपेण प्रज्वलितं कृत्वा करसम्पुटौ विधाय अग्निध्यानं कुर्यात् ॥ ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्त हस्तासो ऽअस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२ऽआविवेश ॥ १७ ॥ रुद्रतेजःसमुद्भूतं द्विमूर्धानं द्विनासिकम् ॥ षण्णेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् । याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् ॥ स्रुवं स्रुचञ्च शक्तिञ्च ह्यक्षमालाञ्च दक्षिणे । तोमरं व्यजनं चैव घृतपात्रञ्च वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥ याम्यायने चतुर्जिह्वं त्रिजिह्वं चोत्तरे मुखम् । द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम् । आत्माभिमुखमासीनं ध्यायेच्चैवं हुताशनम् ॥ गोत्रमग्नेस्तु शाण्डिल्यं शाण्डिल्यासितदेवलाः । त्रयोऽमी प्रवरा माता स्वरणी वरुणः पिता ॥ रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् । स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् ॥ शतमङ्गलनामानं वह्निमावाहयाम्यहम् ॥ त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते । आगच्छ भगवन्नग्ने कुण्डेऽस्मिन्सन्निधो भव ॥ भो वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेतित्रिप्रवरान्वित भूमिमातः वरुणपितः मेषध्वज प्राङ्मुख मम सम्मुखो भव ॥ इति ध्यात्वा हस्तेऽक्षतान् गृहीत्वाऽऽवाहयेत् । तद्यथा । ॐ मनोजूतिर्जु० ॥ १३ ॥ ॐ शतमङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव ॥ ततो गन्धाक्षतपुष्पाण्यादाय पूजनं कुर्यात् । ॐ भूर्भुवः स्वः शतमङ्गलनाम्ने वैश्वानराय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० । इति कुण्डस्य नैर्ऋत्यकोणे मध्ये वा अग्निं सम्पूज्य प्रार्थयेत् ॥ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । हिरण्यवर्णममलं समिद्धं विश्वतोमुखम् ॥

॥ इति पञ्चभूसंस्कारपूर्वकाग्निप्रतिष्ठापनप्रयोगः समाप्तः ॥

## ॥ अथ वैकल्पिकपदार्थावधारणादिकम् ॥

अथ यजमानकर्तृकवैकल्पिकपदार्थावधारणम् । यजमानो हस्ते जलं गृहीत्वा । देशकालौ सङ्कीर्त्य मया ब्राह्मणद्वारा कृतस्य अमुकलक्षगायत्रीजपानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तज्जपदशांशेन गायत्रीमन्त्रस्य करिष्यमाणहोमकर्मणि वैकल्पिक-

---

१ तथाविधो न्युब्जाञ्जलिः संस्थापिनीमुद्रा । २ उत्तानः सोऽभिसंयोगे संनिधापिनी । ३ संयुक्तकनिष्ठिकानूत्रम् अन्तः प्रविष्टाङ्गुष्ठमिव दृष्टनखा संनिरोधिनी । ४ पूर्णहस्तवेनावस्थिति संकलीकरणमुद्रा । ५ सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुण्ठनमुद्रेयमभितो भ्रामिता सती । इय मुद्रा हस्तद्वयेनैव विधेया इति साम्प्रदायिका आहुः । ६ धेनुमुद्रयाऽमृतीकरणम् । ७ करसम्पुटेन नमस्कारः परमीकरणम् ॥

पदार्थावधारणं देवताभिध्यानं च करिष्ये ॥ पूर्वेण ब्रह्मणो गमनमपरेण वा अग्नेरुत्तरतः पश्चिमतो वा पात्रासादनम् । त्रीणि पवित्राणि द्वे पवित्रे वा तैजसी मृन्मयी वा आज्यस्थाली । तैजस्यौ मृन्मय्यौ वा द्वे चरुस्थाल्यौ । पालाश्योऽन्या वा यथालाभोपपन्ना यज्ञियवृक्षोद्भवाः समिधः । प्राञ्चावाघारौ विदिशौ वा । समिद्धतमे आज्यभागौ आग्नेयमुत्तरपूर्वार्द्धे सौम्यं दक्षिणपूर्वार्द्धे वा । पूर्णपात्रं दक्षिणावरो वा । एतान्वैकल्पिकपदार्थानस्मिन्कर्मण्यहं करिष्ये । ततः समिद्वयं गृहीत्वा देवताभिध्यानं कुर्यात् । प्रजापतिम् इन्द्रम् अग्निं सोमम् एकैकयाऽऽज्याहुत्या । अत्र प्रधानं गायत्रीं सावित्रीं तथा च सरस्वतीम् एकैकचर्वाहुत्या । आदित्यं सोमं भौमं बुधं गुरुं शुक्रं शनैश्चरं राहुं केतुम् इति नवग्रहान् यथाप्राप्तार्कादिसमिच्चरुतिलाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्येणाष्टसङ्ख्याकाभिराहुतिभिः । तथा च ईश्वरम् उमां स्कन्दं विष्णुं ब्रह्माणम् इन्द्रं यमं कालं चित्रगुप्तम् एता अधिदेवताः । तथा च अग्निम् अपः पृथ्वीं विष्णुम् इन्द्रम् इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणम् एताः प्रत्यधिदेवताश्च तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्येण चतुश्चतुःसंख्याकाभिराहुतिभिः । तथा च विनायकादिपञ्चलोकपालान् वास्तोष्पतिं क्षेत्राधिपतिं तथा च इन्द्रम् अग्निं यमं निर्ऋतिं वरुणं वायुं सोमम् ईशानं ब्रह्माणम् अनन्तं तैरेव द्रव्यैः प्रत्येकं प्रतिद्रव्येण द्वाभ्यां द्वाभ्यामाहुतिभ्याम् । तथा च पुनरत्र प्रधानं भगवत्याः श्रीगायत्रीदेव्या जपदशांशपक्षेण व्याहृतिसहितस्य चतुर्विंशतिवर्णात्मकश्रीगायत्रीमन्त्रस्य तिलाज्यद्रव्यैः अमुकसंख्याकाभिराहुतिभिः । तथा च चरमेऽह्नि क्रमेण प्रधानदेवताङ्गत्वेन वास्तुमण्डलादिस्थापितदेवताः सर्वतोभद्रमण्डलदेवताः गायत्रीपीठदेवतासहितगायत्रीयन्त्रदेवताश्च प्रतिदैवतम् एकैकयाऽऽज्याहुत्या । शेषेण स्विष्टकृतं तथा च यज्ञस्य प्रारम्भत आसमाप्ति तत्तत्कर्मणि ज्ञानतोऽज्ञानतो भ्रान्त्या वा यथाविहितकर्माकरणजनितप्रत्यवायपरिहारार्थम् अग्निं वायुं सूर्यम् अग्नीवरुणौ अग्नीवरुणौ अग्निं

१ नाचाधान गृह्यभाष्ये याजुषां वै प्रकीर्तितम् । श्रौत कर्मणि सर्वत्र देवतान्वाहितिर्भवेत् ॥ पक्षान्तरेऽकरणे प्रत्यवायोक्ति । वृद्धमनु –देवताभिध्यानरूप अन्वाधान समिद्धुतम् । यो मूढधीर्न कुरुते हवनस्यापक फलम् ॥

२ प्राय सर्वत्र होमविधौ "यथा जपस्तथा होम " इति वचनानुसारेण होमा विधीयत इत्यतं च । अत सव्याहृतेश्चतुर्विंशतिवर्णात्मकश्रीगायत्रीमन्त्रस्य शास्त्रोक्तस्य जपस्यापि तथैव होम उचित । अपि तु धर्मसिन्धौ व्याहृतिरहितस्य गायत्रीमन्त्रस्यैव होमः कार्य इत्युक्तवान् व्याहृतिरहितस्य होम कार्ये उत पूर्ववचनानुसारेण यथाभूतस्य जपस्य होम कार्यं ? । नात्र विषयेऽस्माकमन्यानि व्याहृतिरहितस्य होमे प्रमाणान्युपलब्धानि । तथैव व्याहृतिहोमस्य निषेध वदता धर्मसिन्धुकारेणापि न कस्या अपि स्मृते ऋग्वेदे निषेधवचनमित्युक्तम् । अतो देशाचारतो होम व्यवस्था कार्या ॥

वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणम् आदित्यम् अदितिम् प्रजापतिम् एताः सर्वप्रायश्चित्तदेवताश्च एकैकयाऽऽज्याहुत्या अस्मिन् सग्रहमखश्रीगायत्रीपुरश्चरणकर्मण्यहं यक्ष्ये ॥ इति समिद्द्वयम् अग्नावादध्यात् ॥

इति वैकल्पिकपदार्थावधारणं देवताभिध्यानं च ॥

---

## ॥ अथ नवग्रहादिस्थापनपूजनप्रयोगः ॥

ईशान्यां चतुस्त्रिंशदङ्गुलोच्चसमचतुरस्रस्य ग्रहपीठस्य समीपे सपत्नीको यजमानः पश्चिमाभिमुख उपविश्य आचमनं प्राणायामञ्च कृत्वा। हस्ते जलं गृहीत्वा। मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अस्मिन् नवग्रहपीठे आदित्यादिनवग्रहाणाम् अधिदेवताप्रत्यधिदेवतापञ्चलोकपालवास्तुक्षेत्रपालदशदिक्पालदेवतासहितानां तत्तन्मण्डले स्थापनप्रतिष्ठापूजनमहं करिष्ये ॥ इति संकल्प्य । ततो वामहस्ते अक्षतान् गृहीत्वा दक्षहस्तेन तत्तत्स्थाने आदित्यादिदेवतानाम् आवाहनं कुर्यात् । तद्यथा ॥ ॐ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ $\frac{३}{४}$॥ मध्ये वर्तुले द्वादशाङ्गुले मण्डले प्राङ्मुखं सूर्यं—ॐ भूर्भुवः स्वः सूर्याय नमः सूर्यमावाह० स्था० ॥ कलिङ्गदेशोद्भव काश्यपसगोत्र रक्तवर्ण भो सूर्य इहागच्छ इह तिष्ठ ॥ १ ॥ ॐ इमन्देवाऽअसपत्नꣳसुवद्धम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजान-

१ सर्वत्राग्निप्रणयनानन्तरमेव ग्रहाणां पूजनं विधीयते परन्त्वस्माभिः वैकल्पिकपदार्थावधारणदेवताभिध्यानानन्तरं दत्तम् । वैकल्पिकपदार्थावधारणस्य देवताभिध्यानस्य च यजमानकर्तृकत्वात् । तथापि येषामिच्छा प्राक्कर्तव्यतायां स्यात्तैस्तथा २३१ पृष्ठस्थाग्निप्रतिष्ठाप्रयोगानन्तरं कार्यम् ॥

२ ग्रहपीठमालायाम्—वप्रत्रयान्वितां वेदीं वितस्त्युच्छ्रायसम्मिताम् ॥ द्व्यङ्गुलेनोच्छ्रितो वप्रः प्रथमः समुदाहृतः ॥ त्र्यङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि । द्व्यङ्गुलश्चैव विस्तारः सर्वेषां कथ्यते बुधैः ॥ रुद्रयामलेऽपि सर्वत्र ग्रहवेदीकरणं मात्स्ये—मण्डपेशानभागे तु ग्रहवेदी करोन्मिता ॥ निम्नगा चतुरस्रा च वितस्त्युच्छ्रायसम्मिता ॥ द्विरङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः । अङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥ द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः ॥ गायत्रीपुरश्चरणपद्धतौ—सा च कुण्डात्पञ्चत्रिंशदङ्गुलोपरीशानभागे हस्तविस्तृता समचतुरस्रा प्रागुदक्प्रवणा वप्रत्रयोपेता दशाङ्गुलोच्चा कार्या । तस्याः प्रथमो वप्रो व्यङ्गुलोच्छ्रायो द्वितीयतृतीयौ त्र्यङ्गुलोच्छ्रायौ त्रयोऽपि द्व्यङ्गुलविस्ताराः कार्याः । एवं च वप्रैः सहाष्टादशाङ्गुलोच्छ्रिता भवति । तस्यां च देवतावाहनं कुर्यात् ॥ ३ग्रहाकृतिविषये तु—पद्मासनः पद्मकरः पद्मगर्भः प्रजापतिः । सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥ १ ॥ श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः । गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥ २ ॥ रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः । चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥ ३ ॥ पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥ ४ ॥ देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥ ५ ॥ इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥ ६ ॥ करालवदनः खड्गचर्मशूली वरप्रदः । नीलसिंहासनस्थश्च राहुरत्र प्रशस्यते ॥ ७ ॥ धूम्राद्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ ८ ॥ सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः । अङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदा ॥ ९ ॥ इति ग्रहपीठमाने ग्रहाणां वर्णाकाराश्च ॥

राज्यायेन्द्रस्येन्द्रियाय । इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासोमो-
स्माकम्ब्राह्मणानाᳬराजा ॥ ९॥ आग्नेय्यां दिशि चतुरस्रे चतुर्विंशत्यङ्गुले मण्डले
प्रत्यङ्मुखं चन्द्रं—ॐ भूर्भुवः स्वः सोमाय नमः सोममावाह० स्थाप०॥यमुनातीरोद्भव
आत्रेयसगोत्र शुक्लवर्ण भो सोम इहागच्छ इह तिष्ठ ॥ २॥ ॐ अग्निर्मूर्द्धादिवः-
ककुत्पतिः पृथिव्याऽअयम्॥अपाᳬरेताᳬसिजिन्वति ॥ १२ ॥ दक्षिणस्यां दिशि
त्रिकोणे त्र्यङ्गुले मण्डले दक्षिणाभिमुखं भौमं—ॐ भूर्भुवः स्वः भौमाय नमः भौम-
मावा० स्थाप० ॥ अवन्तिदेशोद्भव भारद्वाजसगोत्र रक्तवर्ण भो भौम इहागच्छ इह
तिष्ठ ॥ ३॥ [illegible] ॥ अग्नि-
[illegible] [illegible]न्यां दिशि
न्त्सुधस्थेऽ [illegible]
बाणाकारे चतुरङ्गुले मण्डले उदङ्मुखं बुधं—ॐ भूर्भुवः स्वः बुधाय नमः बुधमावा०
स्थाप० ॥ मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण भो बुध इहागच्छ इह तिष्ठ ॥ ४॥
ॐबृहस्पतेऽअतियदर्य्योऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु॥यद्दीदयच्छवसऽऋतप्र-
जाततदस्मासुद्रविणन्धेहिचित्रम् ॥ १६ ॥ उत्तरस्यां दिशि दीर्घचतुरस्रे पद्माकारे
षडङ्गुले मण्डले उदङ्मुखं बृहस्पतिं—ॐ भूर्भुवः स्वः बृहस्पतये नमः बृहस्पतिमावा०
स्थाप० ॥ सिन्धुदेशोद्भव आङ्गिरसगोत्र पीतवर्ण भो बृहस्पते इहागच्छ इह तिष्ठ
॥ ५ ॥ ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमम्प्रजापतिः ॥ ऋतेन-
सत्यमिन्द्रियंविपानᳬशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ १६ ॥ पूर्वस्यां
दिशि पञ्चकोणे नवाङ्गुले मण्डले प्राङ्मुखं शुक्रं—ॐ भूर्भुवः स्वः शुक्राय नमः

नवग्रहमण्डलानि-मध्ये वर्तुलाकारे मण्डले प्राङ्मुखं सूर्यम् । आग्नेय्यां चतुरस्राकारे पश्चिमाभिमुखं चन्द्रम् । दक्षिणस्यां त्रिकोणाकारे दक्षिणाभिमुखं भौमम् । ईशान्यां बाणाकारे उत्तराभिमुखं बुधम् । उत्तरस्यां दीर्घच-तुरस्राकारे उत्तराभिमुखं गुरुम् । पूर्वे पञ्चकोणाकारे प्राङ्मुखं शुक्रम् । पश्चिमायां धनुषाकारे पश्चिमाभिमुखं शनैश्चरम् । नैर्ऋत्यां शूर्पाकारे दक्षिणाभिमुखं राहुम् । वायव्यां ध्वजाकारे दक्षिणाभिमुखं केतुम् । मण्डले इति शर्वेण निक्षेपणीयम् ॥ तदनुसारेणैवाधिदेवताप्रत्यधिदेवताः तत्तद्देवानां दक्षिणवामभागे क्रमेण स्थापयेत् ॥ तथैव रुद्रकल्पद्रुमे तु ग्रहवेदी कुण्डादीशान्यां हस्तोच्छ्रिता हस्तविस्तृता च चतुरस्रा वप्रत्रययुता कार्येति कथितम्, [illegible] वसिष्ठस्तु महपीठं द्विहस्तमाह ॥ तथैव नवग्रहाणां पूजनं शुभ कर्म विधेयं तत्रापि वसिष्ठयाज्ञवल्क्याद्य- [illegible] निवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु । निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगाद्भुतेषु च । उद्वेगशब्देन त्रास दारिद्र्यादौ । अद्भुतशब्देन भूकम्पादौ ॥ तथैव याज्ञवल्क्योऽपि—एवं विनायकं पूज्य ग्रहांश्चैव विधानतः । कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् ॥ नवग्रहाणां नामानि—सूर्यः सोमस्तथा भौमो बुधजीवसितार्कजा । राहु केतुरिति प्रोक्ता ग्रहा लोकहितावहा ॥ १ ॥ ग्रहाणां स्थापनदिक्-मध्ये तु भास्करं विद्यात्लोहितं ( भौमं ) दक्षिणे तथा । उत्तरे तु गुरुं विद्याद्बुधं पूर्वोत्तरे ( ईशान्यां ) तथा ॥ २ ॥ पूर्वे तु भार्गवं विद्यात्सोमं दक्षिण-पूर्वके (आग्नेये) । पश्चिमे तु शनिं विद्याद्राहुं पश्चिमदक्षिणे ( नैर्ऋत्याम् ) ॥ ३ ॥ पश्चिमोत्तरतः ( वायव्याम् ) केतुं स्थापयेच्छुक्लतण्डुलैः ॥ ४ ॥ अथाधिदेवताः । भास्करस्येश्वरं विद्यादुमां च शशिनस्तथा । स्कन्द-मङ्गारकस्यैव बुधस्यापि हरिं ( विष्णुं ) तथा ॥ १ ॥ ब्रह्माणं तु गुरोः पार्श्वे शुक्रस्यापि शचीपतिम् । शनैश्चरस्य

शुक्रमावा० स्थाप० ॥ भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण भो शुक्र इहागच्छ इह तिष्ठ ॥६॥ ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तु नः ॥ ३६/१२ ॥ पश्चिमायां दिशि धनुराकारे द्व्यङ्गुले मण्डले प्रत्यङ्मुखं शनिं—ॐ भूर्भुवः स्वः शनैश्चराय नमः शनैश्चरमावाहयामि स्थापयामि ॥ सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण भो शनैश्चर इहागच्छ इह तिष्ठ ॥ ७ ॥ ॐ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ॥ कया शचिष्ठयावृता ॥ ३६/४ ॥ नैर्ऋत्यां दिशि शूर्पाकारे द्वादशाङ्गुले मण्डले दक्षिणाभिमुखं राहुं—ॐ भूर्भुवः स्वः राहवे नमः राहुमावा० स्थाप० ॥ राठिनापुरोद्भव पैठिनसगोत्र नीलवर्ण भो राहो इहागच्छ इह तिष्ठ ॥८॥ ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे । समुषद्भिरजायथाः ॥ २९/३७ ॥ वायव्यां दिशि ध्वजाकारे षडङ्गुले मण्डले दक्षिणाभिमुखं केतुं—ॐ भूर्भुवः स्वः केतवे नमः केतुमावा० स्थाप० ॥ अन्तर्वेदिसमुद्भव जैमिनिसगोत्र धूम्रवर्ण भो केतो इहागच्छ इह तिष्ठ ॥ ९ ॥ इति नवग्रहाणां स्थापनम् ॥

॥ अथ अधिदेवतास्थापनम् ॥

ॐ त्र्यम्बकँय्यजामहेसुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ३/६० ॥ सूर्यदक्षिणपार्श्वे—ॐ भूर्भुवः स्वः ॐ ईश्वराय नमः ईश्वरमावा० स्थाप० ॥ भो ईश्वर इहागच्छ इह तिष्ठ ॥१०॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ३१/२२ ॥ सोमदक्षिणपार्श्वे—ॐ भूर्भुवः स्वः ॐ उमायै नमः उमामावा० स्थाप० ॥ भो उमे इहागच्छ इह तिष्ठ ॥ ११ ॥ ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ॥ २९/१२ ॥ भौमदक्षिणपार्श्वे—ॐ भूर्भुवः स्वः ॐ स्कन्दाय नमः स्कन्दमावा० स्थाप० ॥ भो स्कन्द इहागच्छ इह तिष्ठ ॥ १२ ॥ ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्त्वा ॥ ५/२१ ॥ बुधदक्षिणपार्श्वे—ॐ भूर्भुवः स्वः ॐ विष्णवे० विष्णुमा० स्था० ॥ भो विष्णो इहा० इह० ॥ १३ ॥ ॐ आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्य्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनः पर्ज्जन्योवर्षतुफलव-

द्वयं राहोः काल तथैव च ॥ २ ॥ केतोश्च चित्रगुप्तं स्यादधिदेवाश्च दक्षिणे । (एते ग्रहाणां दक्षिणे स्थाप्या इत्यर्थः) स्थापयित्वा ततो वामे स्थाप्याः प्रत्यधिदेवताः ॥ ३ ॥ अग्निराप क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवताः । प्रजापतिश्च सर्पाश्च ब्रह्मा प्रत्यधिदेवताः ॥ ४ ॥ विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेल्लोकपालांस्तथैवाश्विकुमारकौ ॥ ५ ॥

स्योनऽओषधयःपच्यन्ताँग्योगक्षेमोनंःकल्पताम् ॥ १३ ॥ गुरुदक्षिणपार्श्वे–ॐ भूर्भुवः स्वः ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि ॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ १४ ॥ ॐ सजोषाऽइन्द्रसगणोमरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ१रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ॥ १४ ॥ शुक्रदक्षिणपार्श्वे–ॐ भूर्भुवः स्वः ॐइन्द्राय नमः इन्द्रमावाहयामि स्थापयामि।भो इन्द्र इहागच्छ इह तिष्ठ ॥ १५ ॥ ॐ यमायत्त्वाङ्गिरस्वतेपितृमतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे ॥ १६ ॥ शनिदक्षिणपार्श्वे–ॐभूर्भुवः स्वः ॐ यमाय नमः यममावा० स्थाप० ॥ भो यम इहागच्छ इह तिष्ठ ॥ १६ ॥ ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥१६॥ राहुदक्षिणपार्श्वे–ॐ भूर्भुवः स्वः ॐकालाय नमः ॐकालमावाहयामि स्थापयामि। भो काल इहागच्छ इह तिष्ठ॥१७॥ ॐचित्रावसोस्वस्तितेपारमशीय ॥ १८ ॥ केतुदक्षिणपार्श्वे–ॐ भूर्भुवः स्वः ॐ चित्रगुप्ताय नमः चित्रगुप्तमावाहयामि स्थापयामि। भो चित्रगुप्त इहागच्छ इह तिष्ठ ॥ १८ ॥ इत्यधिदेवतानां स्थापनम् ॥

॥ अथ प्रत्यधिदेवतास्थापनम् ॥

ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२आसादयादिह॥१९॥ सूर्यवामपार्श्वे– ॐ भूर्भुवः स्वः ॐ अग्नये नमः अग्निमावाहयामि स्थापयामि। भो अग्ने इहागच्छ इह तिष्ठ ॥ १९ ॥ ॐ आपो हिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महे रणायचक्षसे ॥ २० ॥ सोमवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ अद्भ्यो नमः अप आवाहयामि स्थापयामि। भो आप इहागच्छत इह तिष्ठत ॥ २० ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः ॥ २१ ॥ भौमवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ पृथिव्यै नमः पृथिवीमावाहयामि स्थापयामि। भो पृथिवि इहागच्छ इह तिष्ठ ॥ २१ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫसुरेस्वाहा ॥२२॥ बुधवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ विष्णवे नमः विष्णुमावाहयामि स्थापयामि। भो विष्णो इहागच्छ इह तिष्ठ ॥२२॥ ॐत्रातारमिन्द्रमवितारमिन्द्रᳫहवेहवेसुहवᳫशूरमिन्द्रम्॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रᳫस्वस्तिनोमघवाधात्विन्द्रः ॥ २३ ॥ गुरुवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ इन्द्राय नमः इन्द्रमावाहयामि स्थापयामि। भो इन्द्र इहागच्छ इह तिष्ठ ॥ २३ ॥ ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्म्मायदीष्व ॥ २४ ॥ शुक्रवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ इन्द्राण्यै नमः इन्द्राणीमावाहयामि स्थापयामि। भो इन्द्राणि इहागच्छ इह तिष्ठ ॥ २४ ॥ ॐ प्रजापतेनत्वदेतान्यन्न्योविश्वारूपाणिपरिता-

बभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् ॥ ६३ ॥ शनिवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ प्रजापतये नमः प्रजापतिमावाहयामि स्थापयामि। भो प्रजापते इहागच्छ इह तिष्ठ ॥ २५ ॥ ॐ नमोऽस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः ॥ ६३ ॥ राहुवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ सर्पेभ्यो नमः सर्पानावाहयामि स्थाप० । भो सर्पा इहागच्छत इह तिष्ठत ॥२६॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ३३ ॥ केतुवामपार्श्वे–ॐ भूर्भुवः स्वः ॐ ब्रह्मणे नमः ब्रह्माणमावाहयामि स्थापयामि । भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ २७ ॥ इति प्रत्यधिदेवतास्थापनम् ॥

॥ अथ पञ्चलोकपालदेवतास्थापनम् ॥

ॐ गणानान्त्वागणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ ३३ ॥ राहोरुत्तरतः–ॐ भूर्भुवः स्वः ॐ गणपतये नमः गणपतिमावाहयामि स्थापयामि। भो गणपते इहागच्छ इह तिष्ठ ॥ २८ ॥ ॐ अम्बेऽअम्बिकेऽम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासिनीम् ॥ ३८ ॥ शनेरुत्तरतः–ॐ भूर्भुवः स्वः ॐ दुर्गायै नमः दुर्गामावाहयामि स्थापयामि । भो दुर्गे इहागच्छ इह तिष्ठ ॥ २९ ॥ ॐ वायोयेतेसहस्त्रिणोरथासस्तेभिरागहि ॥ नियुत्त्वान्सोमपीतये ॥ ३३ ॥ रवेरुत्तरतः–ॐ भूर्भुवः स्वः ॐ वायवे नमः वायुमावाहयामि स्थापयामि । भो वायो इहागच्छ इह तिष्ठ ॥ ३० ॥ ॐ घृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्यहविरसिस्वाहा ॥ दिशः प्प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यःस्वाहा ॥ ६ ॥ राहोर्दक्षिणे–ॐ भूर्भुवः स्वः ॐ आकाशाय नमः आकाशमावाहयामि स्थापयामि । भो आकाश इहागच्छ इह तिष्ठ ॥ ३१ ॥ ॐ यावाङ्कशामधुमत्त्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षतम् ॥ ७ ॥ केतुदक्षिणे–ॐ भूर्भुवः स्वः ॐ अश्विभ्यां नमः अश्विनावावाहयामि स्थापयामि । भो अश्विनौ इहागच्छतम् इह तिष्ठतम् ॥ ३२ ॥ इति पञ्चलोकपालदेवतास्थापनम् ॥

॥ अथ क्षेत्राधिपतेर्वास्तोष्पतेर्दशदिक्पालानाञ्च स्थापनम् ॥

ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽ एतारमग्नेः ॥ एमेनमवृधन्नमृताऽ अमर्त्यं वैश्वानरङ्क्षैत्रजित्याय देवाः ॥ ६२ ॥ गुरोरुत्तरे–ॐ भूर्भुवः स्वः क्षेत्राधिपतये नमः क्षेत्राधिपतिमावाहयामि स्थापयामि ॥ भो क्षेत्राधिपते इहा-

गच्छ इह तिष्ठ ॥ ३३ ॥ ॐ वास्तोष्पते प्रतिजानिह्यस्मान्त्स्वावेशोऽ अनमीवो भवानः । यत्त्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ क्षेत्राधिपत्युत्तरे—ॐ भूर्भुवः स्वः वास्तोष्पतये नमः वास्तोष्पतिमावाहयामि स्थापयामि ॥ भो वास्तोष्पते इहागच्छ इह तिष्ठ ॥ ३४ ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो मघवाधात्विन्द्रः ॥ ५०/२० ॥ मण्डलाद्बहिः पूर्वस्याम्—ॐ भूर्भुवः स्वः इन्द्राय नमः इन्द्रमा० स्था० ॥ भो इन्द्र इहागच्छ इह तिष्ठ ॥ ३५ ॥ ॐ त्वन्नोऽ अग्ने तव देव पायुभिर्म्मघोनो रक्ष तन्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवामस्यनिमेषꣳरक्षमाणस्तव व्रते ॥ १२/२४ ॥ मण्डलाद्बहिः आग्नेय्याम्— ॐ भूर्भुवः स्वः अग्नये नमः अग्निमावाहयामि स्थापयामि ॥ भो अग्ने इहागच्छ इह तिष्ठ ॥ ३६ ॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ १/३८ ॥ मण्डलाद्बहिः दक्षिणस्याम्—ॐ भूर्भुवः स्वः यमाय नमः यममावाहयामि स्था० । भो यम इहागच्छ इह तिष्ठ ॥ ३७ ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य ॥ अन्यमस्मदिच्छसातऽ इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ ६२/१२ ॥ ग्रहमण्डलाद्बहिः नैर्ऋत्याम्—ॐभूर्भुवः स्वः निर्ऋतये नमः निर्ऋतिमावाहयामि स्थापयामि ॥ भो निर्ऋते इहागच्छ इह तिष्ठ ॥ ३८ ॥ ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥ ४१/१८ ॥ ग्रहमण्डलाद्बहिः पश्चिमायाम्—ॐ भूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामि स्थाप० ॥ भो वरुण इहागच्छ इह तिष्ठ ॥ ३९ ॥ ॐ आनो नियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वस्तिभिः सदानः ॥ २/१६ ॥ ग्रहमण्डलाद्बहिः वायव्याम्—ॐ भूर्भुवः स्वः वायवे नमः वायुमावाहयामि स्थापयामि ॥ भो वायो इहागच्छ इह तिष्ठ ॥ ४० ॥ ॐ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ ५/१ ॥ ग्रहमण्डलाद्बहिः उत्तरस्याम्—ॐ भूर्भुवः स्वः सोमाय नमः सोममावाहयामि स्थापयामि ॥ भो सोम इहागच्छ इह तिष्ठ ॥ ४१ ॥ ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥ १/१६ ॥ ग्रहमण्डलाद्बहिः ईशान्याम्—ॐ भूर्भुवः स्वः ईशानाय नमः ईशानमावाहयामि स्थापयामि ॥ भो ईशान इहागच्छ इह तिष्ठ ॥ ४२ ॥ ॐअस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रऽ

इन्द्रज्येष्ठाऽअस्म्माँ२ऽअवन्तुदेवाः ॥ ४१ ॥ ग्रहमण्डलाद्बहिः ईशानपूर्वयोर्मध्ये ऊर्ध्वायाम्—ॐ भूर्भुवः स्वः ब्रह्मणे नमः ब्रह्माणमावाह० स्थाप० ॥ भो ब्रह्मन् इहागच्छ इह तिष्ठ ॥ ४३ ॥ ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥ यच्छा-नःशर्म्मसप्प्रथाः ॥ ३६ ॥ ग्रहमण्डलाद्बहिः नैर्ऋत्यपश्चिमयोर्मध्येऽधः—ॐभूर्भुवः स्वः अनन्ताय नमः अनन्तमावाहयामि स्थापयामि ॥ भो अनन्त इहागच्छ इह तिष्ठ ॥ ४४ ॥ प्रतिष्ठापनम्—ॐ मनोजूतिर्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिमन्त-नोत्त्वरिष्टँय्यज्ञ७समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोम्प्रतिष्ठ ॥ २ ॥ ॐ भूर्भुवः स्वः सूर्याद्यावाहितनवग्रहमण्डलदेवताः सुप्रतिष्ठिता वरदा भवत ॥ ततो ध्यानम्—ॐमहाऊर्जाहुतयोब्यन्तोविप्प्रायमतिम् ॥ तेषांविशिप्प्रियाणांवोहमिष-मूर्ज्ज७समग्ग्रभमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टंगृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वा जुष्टं-तमम् ॥ १ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः ध्यायामि ॥ आसनम्—ॐपुरुषऽएवेद७सर्व्वयद्भूतंयच्चभाव्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेना-तिरोहति ॥ १२ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः आसनं समर्पयामि ॥ पाद्यम्—ॐ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यविश्वा-भूतानित्रिपादस्यामृतन्दिवि ॥ १२ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः पादयोः पाद्यं समर्पयामि ॥ अर्घ्यम्—ॐधामन्तेविश्वम्भुवनमधिश्रितम-न्तःसमुद्रेहृद्यन्तरायुषि॥अपामनीकेसमिथेयऽआभृतस्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥ १७ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः अर्घ्यं समर्पयामि ॥ आचमनीयम्—ॐ ततोविराडजायतविराजोऽअधिपूरुषः । सजातोऽअत्त्यरिच्च्य-तपश्चाद्भूमिमथोपुरः॥ १२ ॥ॐभूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः आच-मनीयं समर्पयामि ॥ पञ्चामृतस्नानम्—ॐ घृतेनसीतामधुनासमज्ज्यतांविश्वैर्देवैरनु-मतामरुद्भिः॥ऊर्ज्जस्वती पयसापिन्वमानास्मान्त्सीतेपयसाब्भ्याववृत्स्व ॥ १२ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः पञ्चामृतस्नानं समर्पयामि॥पञ्चामृत-स्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि॥ गन्धोदकस्नानम्— ॐ गन्धर्वस्त्वाविश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमान-स्यपरिधिरस्यग्निरिडऽईडितः ॥ ३ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः गन्धोदकस्नानं समर्पयामि ॥ गन्धोदकस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ स्नानम्—ॐ शुद्धवालःसुर्वशुद्धवा० ॥ २४ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः शुद्धोदकस्नानं

समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ वस्त्रम्—ॐसुजातो॰ ज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥ ४१ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः वस्त्रं समर्पयामि ॥ वस्त्रान्ते आचमनीयं समर्पयामि ॥ उपवीतम्—ॐ यज्ञोदेवानां॰ ॥४॥ ॐभूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः उपवीतं समर्पयामि ॥ उपवीतान्ते आचमनीयं समर्पयामि ॥ गन्धम्—ॐ त्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः। त्वामोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ ९६ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः गन्धं सम॰ ॥ अक्षताः—ॐ अक्षन्नमीमदन्तह्यवप्रियाऽअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामतीयोजान्विन्द्रतेहरी ॥ ५१ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः अक्षतान्समर्पयामि ॥ पुष्पाणि—ॐ ओषधीःप्प्रतिमोदध्वम्पुष्प्पवतीःप्प्रसूवरीः । अश्वाऽइवसजित्त्वरीर्वीरुधः पारयिष्ण्वः ॥७७॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः पुष्पाणि समर्पयामि ॥ सौभाग्यद्रव्याणि—ॐ अहिरिवभोगैःपर्य्येतिबाहुञ्ज्यायाहेतिम्परिबाधमानः॥हस्तघ्नोविश्वावयुनानिविद्वान्पुमान्पुमाꣳसम्परिपातुविश्वतः ॥५१॥ ॐ भूर्भुव स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः सौभाग्यद्रव्याणि समर्पयामि ॥ धूपम्—ॐअश्वस्यत्वावृष्ण्णः शक्क्नाधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ अश्वस्यत्वावृष्ण्णः शक्का धूपयामिदेवयजनेपृथिव्याः ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ अश्वस्यत्वावृष्ण्णः शक्नाधूपयामिदेवयजनेपृथिव्याः ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ मखायत्त्वामखस्यत्वाशीर्ष्ण्णे ॥ ९८ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः धूपमाघ्रापयामि ॥ दीपम्—ॐ अग्निर्ज्योतिज्योतिरग्निः...ज्योतिः प्माग्रुषमोषर्चसाषर्चस्वान् ॥ सहस्रदाऽअसिसहस्रायत्त्वा ॥ ९१ ॥ ॐभूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः दीपं दर्शयामि ॥ नैवेद्यम्—ॐ अन्नपतेन्नस्यनोदेह्यनमीवस्यशुष्मिणः ॥ प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतुष्प्पदे ॥९१॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः नैवेद्यं निवेदयामि ॥ गायत्रीमन्त्रेण नैवेद्यं सम्प्रोक्ष्य वामकरं पद्माकारं कृत्वा दक्षकरेण तत्तद्ग्रासमुद्रया नैवेद्यं निवेदयेत् ॥ तर्जनीमध्यमाङ्गुष्ठैः—ॐ प्राणाय स्वाहा । मध्यमानामिकाङ्गुष्ठैः—ॐ अपानाय स्वाहा। कनिष्ठिकानामिकाङ्गुष्ठैः—ॐव्यानाय स्वाहा। कनिष्ठिकातर्जन्यङ्गुष्ठैः—ॐ उदानाय स्वाहा ॥ साङ्गुष्ठाभिः सर्वाङ्गुलिभिः—ॐ समानाय स्वाहा ॥ पूर्वापोशनं समर्प॰ ॥ उत्तरापोशनं समर्पयामि ॥ हस्तप्रक्षालनं सम॰ ॥ मुखप्रक्षालनं

स० ॥ आचमनीयं स० ॥ करोद्वर्तनार्थे चन्दनं समर्पयामि ॥ फलम्—ॐ याः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वꣳ हसः ॥ ६३ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः फलं समर्पयामि ॥ मुखवासार्थे ताम्बूलम्—उत स्मास्य द्रवतस्तुरण्यतः पर्णन्न वेरनुवाति प्रगर्द्धिनः । श्येनस्येव ध्रजतो ऽअङ्कसम्परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा ॥ ६४ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः मुखवासार्थे ताम्बूलं समर्पयामि ॥ दक्षिणा—ॐ यद्दत्तं यत्परादानं यत्पूर्त्तं याश्च दक्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्द्देवेषु नो दधत् ॥ ६६ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः सुवर्णपुष्पदक्षिणां समर्पयामि ॥ कर्पूरारार्तिक्यम्—ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ॥ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमञ्जुषध्वम् ॥ ६७ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः कर्पूरारार्तिक्यं समर्पयामि ॥ जलेन प्रदक्षिणावर्तनम् । पुष्पैर्देववन्दनम् । हस्तेन आत्मवन्दनम् । हस्तप्रक्षालनम् ॥ मन्त्रपुष्पाञ्जलिः—ॐ यज्ञेन यज्ञमयजन्त देवास्तानि० ॥ ३६ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ प्रदक्षिणा-ॐ सप्तास्यासन्परिधयस्त्रिः सप्त समिधः० ॥ ३५ ॥ ॐ भुर्भूवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः प्रदक्षिणां समर्पयामि ॥ विशेषार्घ्यम् । अर्घ्यपात्रे जलं गृहीत्वा चन्दनपुष्पाक्षतसहितं नारिकेलं हिरण्यञ्च धृत्वा तत्पात्रं हस्ते गृहीत्वा । अर्घं गृह्णन्त्विमं देवा आदित्यप्रमुखा ग्रहाः । निर्विघ्नेन च कुर्युस्ते कार्यं मे यजनोद्भवम् ॥ १ ॥ नौमि युष्मान्ग्रहान्सर्वानाकाशे भ्रमतोऽनिशम् । कल्याणाय सदा यूयं जगतां स पुनः पुनः ॥ २ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः विशेषार्घ्यं सम० । ततः प्रार्थयेत् ॥ आयुश्च विद्याञ्च यशश्च शौर्यं लक्ष्मीं स्थिरां नीतिदयादियुक्ताम् । पुत्रञ्च पौत्रञ्च पदं तथैशं यच्छन्तु यूयं ह्यभयं ग्रहा मे ॥ १ ॥ भूयात्कृता या भवतां मया सा पूजा सुपूर्णा विधिना स्वशक्त्या ॥ भूयात्तथैवाशु सदाऽस्मदीयं ज्ञातं शुभं यन्मनसाऽपि नैव ॥ २ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः प्रार्थनापूर्वकं नमस्कारान्समर्पयामि ॥ हस्ते जलं गृहीत्वा अनेन यथाज्ञानेन यथामिलितोपचारद्रव्यैः ध्यानावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणामन्त्रपुष्परूपैः षोडशोपचारैः कृतेन पूजनेन सूर्यादिनवग्रहमण्डलदेवाः प्रीयन्तां न मम ॥

॥ इति नवग्रहादिस्थापनपूजनप्रयोगः ॥

## ॥ अथ कुशकण्डिकाप्रयोगः ॥

अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्य । पूर्वे वायव्यकोणे प्राङ्मुखं ब्रह्माणमुपवेश्य उदङ्मुखो यजमानो हस्ते पूगीफलं गृहीत्वा ब्रह्माणं वदेत् । 'भो ब्रह्मन् ! अस्मिन्सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणि त्वं ब्रह्मा भव' । 'भवामि' इति ब्रह्मा वदेत् । ततो ब्रह्मा पूर्वेण स्वासने गत्वा तत्र स्वासनात्किञ्चित्तृणं दक्षिणस्यां दिशि निरस्य तत्रोपविशेत् । ततः प्रणीताप्रणयनार्थम् अग्नेरुत्तरदिशि वायव्यकोणे चैवमासनद्वयं निधाय ब्रह्मणा अनुज्ञातः प्रणीताप्रणयनं कुर्यात् । ब्रह्मणो मुखमवलोकयन् 'भो ब्रह्मन् ! अपः प्रणेष्यामि' इत्युक्त्वा 'ॐ प्रणय' इति ब्रह्मणा प्रत्यनुज्ञातः प्रणीतापात्रं वामहस्ते धृत्वा तत्र दक्षिणहस्तेन जलं प्रपूर्य तत् पात्रं वायव्यकोणे स्थापिते पूर्वासने क्षणं निधाय ततो दक्षिणकरस्यानामिकयाऽऽलभ्याग्नेरुत्तरदिशि स्थापिते कुण्डादुत्तरे द्वादशाङ्गुलभिन्नप्रदेशे द्वितीयासने निदध्यात् ॥ ततः परिस्तरणं कुर्यात् । तद्यथा । कुण्डस्य प्राक् उदगग्रैर्मुष्टिपरिमितैस्त्रिभिः कुशैर्वा । दक्षिणदिशि प्रागग्रैर्मुष्टिपरिमितैस्त्रिभिः कुशैर्वा । पश्चिमदिशि उदगग्रैर्मुष्टिपरिमितैस्त्रिभिः कुशैर्वा । तथैव उत्तरदिशि प्रागग्रैर्मुष्टिपरिमितैस्त्रिभिः कुशैर्वा । एवं प्रतिदिशं परिस्तरणं कृत्वा पात्रासादनं कुर्यात् ॥ यथा । पवित्रच्छेदनार्थं त्रयो दर्भाः । पवित्रे द्वे । प्रोक्षणीपात्रम् । ताम्रमयी आज्यस्थाली । द्वे ताम्रमय्यौ चरुस्थाल्यौ । सम्मार्गकुशाः पञ्च ।

---

१ एकमुष्ट्या परिस्तरणम् । चतसृषु दिक्षु यथैकैकमुष्टिपरिमितैः कुशैः स्वास्तया परिस्तरणं कार्यम् । अथवा कुशाभावे न्यूने वा प्रतिदिशं त्रिभिस्त्रिभिर्दर्भैः संख्यारहितैर्वा कार्यम् ॥ अत्र कुशशब्दस्तृणवाचकः दिङ्मात्रो ज्ञेयः ॥

२ तच्च प्रकारद्वयेन शास्त्रेऽभिहितम् । अग्नेरुत्तरतः पश्चिमतो वा । अग्नेरुत्तरतः पात्रासादने कर्तव्ये पात्राणां स्थापनं "प्रागग्रोदग्विलान्तं स्यादुत्तरासादनेऽग्नितः" । इति रीत्या कार्यम् ॥ अग्नेः पश्चिमतः पात्रासादने कर्तव्ये "पात्रजातं प्राग्विलान्तमुदगग्रञ्च पश्चिमे" ॥ इति रीत्या कार्यम् ॥ इदं भाष्यकारादिभिरपि स्पष्टीकृतम् । तद्यथा ॥ "अर्थवदासाद्य" इति प्रथमकाण्डस्य प्रथमकण्डिकाया द्वितीयसूत्रस्य कर्कजयरामकृतयोर्व्याख्ययोः प्रयोजनवत्पात्रजातमासाद्येत्यर्थः कृतः । अपि तु पात्राणामासादनविषये किमपि नोक्तम् । हरिहरकृतायां व्याख्यायां यावद्भिः पदार्थैः अर्थः प्रयोजनं तावतः पदार्थान्द्वन्द्वं प्राक्संस्थान् उदगग्रानग्नेरुत्तरतः पश्चाद्वा आसाद्येत्यर्थः कृतः । तेनावगम्यते उत्तरतः पश्चाद्वा पात्राणां द्वन्द्वं द्वन्द्वं प्राक्संस्थं उदगग्रमेवासादनं कर्तव्यम् । तेनाधुनिकैः क्रियमाणम् अग्नेः पश्चिमे प्रागग्रम् उदक्संस्थं पात्रासादनं हरिहरमतेनाशास्त्रीयमेवेति स्पष्टम् ॥ परञ्च गदाधरकृतायां व्याख्यायाम् अर्थः प्रयोजनम् अग्नेरुत्तरतः पश्चाद्वा द्वन्द्वं प्रयोजनवतां पात्राणाम् आसादनम् । कार्यक्रमेण मुख्यक्रमानुरोधात् पश्चात्प्राक्संस्थानामुदगग्राणां प्रागग्राणां वा आसादनम् । उत्तरतः उदक्संस्थानां प्रागग्राणामुदगग्राणां वाऽऽसादनं विधेयम् । तदेव कारिकायाम्—पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः । उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ॥ एतच्च विपुलस्थानसंभवे, असंभवे तु कात्यायनोक्तं (प्रागग्राणां उदगग्राणां वा) । प्रागग्रं प्राग्ग्रमुदगग्रेदगग्रं समीपतः इति देवयाज्ञिकाः ॥ गदाधरेणापि स्वकृतव्याख्यायां मुख्यतया पात्रासादनम् उत्तरे उदक्संस्थं प्रागग्रमेव । पश्चिमे उदगग्रं प्राक्संस्थमेव कथितम् । न त्वग्नेः मुख्यतया पश्चिमदिशि प्रागग्रमुदक्संस्थम् । उत्तरदिशि उदगग्रं प्राक्संस्थमुक्तम् । तत्तु विपुलस्थानासंभवे एव कात्यायनमतं करणेन तैरपि प्रदर्शितम् । अतस्तदेवोत्तरे पश्चिमे वा कार्यमिति तु न वैपरीत्यम् । तथैवास्मद्गुरुवर्यैः काशीस्थमहामहोपाध्यायैः पर्वतीयनित्यानन्दपन्तैरपि स्वप्रणीतसंस्कारप्रदीपस्य प्रथमे भागे "अर्थवदासाद्य" इत्यस्य व्याख्यायां यावद्भिः

उपयमनकुशाः सप्त। समिधस्तिस्रः। स्रुवः। स्रुक्। आज्यम्। तण्डुलाः। पूर्णपात्रम्। अन्यानि समित्तिलाज्यादीनि हवनीयद्रव्याणि च। एवं कर्मोपयोगिपात्राणाम् आसादनं कृत्वा पवित्रे कुर्यात्। तद्यथा। वामकरस्थितयोः प्रागग्रयोर्द्वयोः पवित्रयोः उपरि दक्षिणकरेणोदगग्राणि त्रीणि पवित्राणि निधाय उपरि प्रादेशमात्रं पवित्रद्वयम् अवशेषयित्वा दक्षिणकरेण द्वयोः पवित्रयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य वामकरेण सर्वाणि पवित्राणि युगपद्धृत्वा दक्षिणकराङ्गुष्ठाङ्गुलिपर्वाभ्याम् उपरि प्रादेशमात्रं छित्त्वाऽन्यानि सर्वाणि पवित्राण्युत्तरतः क्षिपेत्। अवशिष्टे प्रादेशमात्रे द्वे पवित्रे ग्राह्ये। ततः प्रणीतोत्तरम् आसने प्रोक्षणीपात्रं निधाय तस्मिन् सपवित्रेण दक्षिणहस्तेन पात्रान्तरेण वा प्रणीतोदकं चतुर्वारं गृहीत्वा वामकरे पवित्राग्रं दक्षिणे पवित्रयोर्मूलं धृत्वा मध्यतः पवित्राभ्यां प्रोक्षणीपात्रजलस्योत्पवनम्। पवित्रे प्रोक्षण्यां निधाय। तत्पात्रं दक्षिणकरेणादाय सव्ये पाणौ धृत्वा दक्षिणहस्तमुत्तानं कृत्वा दक्षिणकरस्य मध्यमानामिकाङ्गुल्योर्मध्यपर्वाभ्यां प्रोक्षणीस्थानामपामूर्ध्वमुद्गिङ्गनम्। ताभिः (प्रणीताद्भिः) तासां प्रोक्षणीस्थितानामपां प्रोक्षणम्। आज्यस्थाल्याः प्रोक्षणम्। चरुस्थाल्याः प्रोक्षणम्। सम्मार्गकुशानां प्रोक्षणम्। उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्रुवस्य प्रोक्षणम्। स्रुचः प्रोक्षणम्। आसादितानां समित्तिलाज्यादिहवनीयद्रव्याणां प्रोक्षणम्। ततः प्रोक्षणीपात्रम् असञ्चरे–प्रणीताग्न्योर्मध्ये आसनं निधाय तत्रासने–स्थापयेत्। तत आज्यस्थाल्याम् आज्यं निरूप्य। ब्रह्मणा कुण्डे दक्षिणप्रदेशे आज्याधिश्रयणम्॥ चरुस्थाल्यां प्रणीतोदकमासिच्य त्रिःप्रक्षालितांस्तण्डुलान्

पदार्थः प्रयोजनं तावतः पदार्थान् द्वन्द्वं प्राक्संस्थान् उदगग्रान् अग्नेरुत्तरतः पश्चाद्वा आसादयेत्। आसादनञ्च विनियोगक्रमेण। छन्दोगपरिशिष्टे–प्राग्यं प्राग्यमुदगग्रैरुदगग्रं समीपतः। तत्तथाऽऽसादयेत् पात्रं यथा विनियुज्यते इति॥ विशिष्टे नियोगो विनियोगः। मुख्यप्रयोग इति यावत्। तथा च यत्कार्यार्थं यावत्पात्रमुपादीयते तत्कार्यक्रमेण तत्सादनमित्यर्थः। तथैव कारिकायामपि–पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः। उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्॥ प्रागिलान्युदगग्राणि प्राक्संस्थान्यग्नितो यदि। प्रागग्रोदगिलान्यग्नेरुदक्संस्थानि चैव हि। इति पूर्वश्लोकस्य क्रमेणार्थसंगमनादपि नात्र तेषामस्मद्गुरुचरणानामपि व्याख्यायां पश्चिमे प्रागग्रमुदक्संस्थम् उत्तरे प्राक्संस्थमुदगग्रं दरीदृश्यते। तथैव श्रीधराचार्यप्रभृत्याचार्याणाम् आशयं श्रोत्रं यद्यलघुकारिकारूपेण ग्रथयितृभिः वैधिविद्भिः श्रीविष्णुशर्मभिरपि "प्रागग्रोदगिलान्नं स्यादुत्तरासादनेऽग्नितः। पात्रजातं प्रागिलान्यमुदगग्रञ्च पश्चिमे॥ इत्यभिहितम्॥ सर्वेषां व्याख्यानां पर्यालोचनेन उत्तरे प्रागग्रमुदक्संस्थमुदगग्रं पश्चिमे प्राक्संस्थम् उत्तरत्र प्रागिलं पात्रासादनमेव मुख्यतया कर्कगदाधरहरिहरप्रभृतीनामभिमतम्। विष्णुशर्मणो विदुषां व्याख्यात्रयमेवात्र इत्यवगम्यते सर्वदा तथैवोपलब्धम्॥

१ प्रणीताभिरासां प्रोक्षणम्। ताभिरित्यनेन प्रोक्षणीस्थिताद्भिः प्रणीतास्थिताद्भिर्वा इति प्रश्नः। केचन प्रोक्षणीपात्रस्थितानामपाम् अप्रयोज्यत्वात् ताभिः तासां प्रोक्षणं न्याय्यमित्याहुः। अन्ये तु उद्धृतोत्सवनादिभिः तासामपि अपां संस्कृतत्वात्ताभिरेव तासां प्रोक्षणमित्याहुः॥ अपरे तु तत्र प्रणीतासम्बन्धेनैव सर्वत्र व्यवहारदर्शनात् प्रणीतास्थिताद्भिरेव प्रोक्षणं कुर्वन्तीति वदन्ति। तथैव भाष्यकारादिभिरपि दर्शनात् प्रणीताद्भिरेव ...

निक्षिप्य आचार्येणाऽऽज्यस्योत्तरतः चरोरधिश्रयणं युगपत् । [ब्रह्मणाऽऽचार्येण चाधिश्रयणक्रिया सहैव कार्येत्यर्थः] ततो गृहीतोल्मुकेनाज्यचर्वोरुभयोः ईशानत ईशानपर्यन्तं प्रदक्षिणम् पर्यग्निकरणम् । हस्तस्य इतरथाऽऽवृत्तिः । ततोऽर्धश्रृते चरौ स्रुक्स्रुवयोः प्रतपनम् । दक्षिणहस्तेन स्रुक्स्रुवावादाय अधोमुखौ प्राञ्चौ तापयित्वा ततः स्ववामकरे धृत्वा दक्षिणहस्तस्थितैः सम्मार्गकुशाग्रैः स्रुक्स्रुवयोः मूलत आरभ्य उपरितः स्रुक्स्रुवयोरग्रपर्यन्तं सम्मृज्य सम्मार्गकुशमूलैः स्रुक्स्रुवाग्रत आरभ्य अधस्तात् स्रुक्स्रुवयोः मूलपर्यन्तं सम्मृज्य प्रणीतोदकेन स्रुक्स्रुवावभ्युक्ष्य पुनर्दक्षिणकरे धृत्वा पुनः पूर्ववत्प्रतप्य दक्षिणदिशि निदध्यात् ॥ एवं स्रुक्स्रुवयोः प्रतपनं कृत्वा सम्मार्गकुशानाम् अग्नौ उत्तरदिशि वा त्यागः । तत आज्योद्वासनं कुर्यात् । दक्षिणहस्तेन अग्नेः सकाशादाज्यं गृहीत्वा चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः प्रोक्षण्याः समीपे वायव्यकोणे क्षणं निधायाग्नेः पश्चिमदिशि स्थापयेत् । ततश्चरुमुत्थाप्य अग्नेरुत्तरतः प्रोक्षण्याः समीपे वायव्यकोणे क्षणं निधाय आज्यं प्रदक्षिणीकृत्य आज्यस्योत्तरतः स्थापयेत् । तत आज्योत्पवनम् । वामहस्तधृताग्राभ्यां दक्षिणहस्तधृतमूलाभ्यां पवित्राभ्याम् आज्योत्पवनम् । आज्यावेक्षणम् । अपद्रव्यनिरसनम् । ततः आज्यलिप्ताभ्यां पवित्राभ्यां प्रोक्षण्याः प्रत्युत्पवनम् । पवित्रे प्रोक्षण्यां निधाय।यजम नो दक्षिणहस्तेन उपयमनकुशानादाय सव्ये पाणौ धृत्वा हृदयमालभ्य दक्षिणहस्तेन घृताक्तास्तिस्रः समिधो गृहीत्वा तिष्ठन् समिधोऽभ्याधाय इति अग्नौ आदध्यात् ॥ ततो दक्षिणहस्तेन सपवित्रेण प्रोक्षण्युदकं गृहीत्वा ईशानकोणादारभ्य ईशानकोणपर्यन्तम् अग्नेः प्रदक्षिणं पर्युक्ष्य (हस्तस्य इतरथावृत्तिः) पवित्रे प्रणीतायां निधाय दक्षिणं जान्वाच्य सव्यहस्तेन उपयमनकुशानादाय हृदये सव्यहस्तं धृत्वा ब्रह्मणाऽन्वारब्धो दक्षिणहस्तधृतेन स्रुवेण जुहुयात् ॥ अग्नेरुत्तरप्रदेशे प्राञ्चं संततधारया मनसा—ॐप्रजापतये (स्वाहा) इदं प्रजापतये न मम । प्रोक्षणीपात्रे संस्रव-

१ प्रयोगदर्पणे पूर्णाहुतेः इतिकर्तव्यतायाः सार्धश्लोकेनेदमभिहितम् । पूर्णाहुतिं करिष्येऽहं वसोर्धारासमन्विताम् । अन्यदाज्यं समानीयाधिश्रित्य स्रुक्स्रुवावुभौ । तौ प्रतप्य च सम्मार्गैस्तैः सम्मृज्य प्रतिष्ठयेत् । अस्मिन् श्लोके स्रुक्स्रुवयोरुभयोः प्रतपनं पूर्णाहुत्यामेव दृश्यते । परमत्रापि उभयोः प्रतपने कृते न दोष उत समीचीनम् स्रुवोऽप्यनुग्रहमेव होमविधौ स्रुचोऽपि प्रयोजनत्वात् ॥ शारदातिलकेऽपि "पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तापयेद्गुरौ ॥" इति पञ्चमपटले उभयोः प्रतपनं दृश्यते । अत उभयोः स्रुक्स्रुवयोः प्रतपनं कर्तव्यम् ॥

२ आज्यचर्वोरुद्वासनेऽपि विकल्पो दृश्यते । दक्षिणहस्तेनाग्नेः सकाशादाज्यं गृहीत्वा चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः प्रोक्षण्याः समीपे निदध्यात् । ततश्चरुमुत्थाप्याज्यस्य पश्चिमतो नीत्वाऽऽज्यस्योत्तरतः स्थापयेत् । पश्चादाज्यं गृहीत्वाऽग्नेः पश्चिमदिशि स्थापयेत् । ततश्चरुमादाय आज्यं प्रदक्षिणीकृत्याज्यस्योत्तरतः स्थापयेत् ।

३ ब्रह्मणाऽन्वारब्धो जुहुयात् । विद्यावितिके इति पक्षे । नैर्ऋत्यकोणादारभ्य ईशानकोणपर्यन्तं संततधारया । ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम । वायव्यकोणादारभ्य आग्नेयकोणपर्यन्तम् आज्यस्य संततधारया । ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम । इति पूर्वापरोनयपाये ॥ गमिदतगे (प्रज्वलिते)

प्रक्षेपः। इति पूर्वाघारः॥ततः प्राञ्चं संततधारया अग्नेर्दक्षिणप्रदेशे–ॐइन्द्राय स्वाहा इदमिन्द्राय न मम। इत्युत्तराघारः॥ अग्नेः उत्तरपूर्वार्द्धे–ॐअग्नये स्वाहा इदमग्नये न मम। अग्नेर्दक्षिणपूर्वार्द्धे–ॐसोमाय स्वाहा इदं सोमाय न मम। इत्याज्यभागौ॥ ततो यजमानो हस्ते गन्धाक्षतपुष्पाण्यादायाग्निं पूजयेत्। ॐ भूर्भुवः स्वः शतमङ्गलनामाग्नये नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०॥ ततः पञ्चभिर्वारुणमन्त्रैर्घृतेन होमः। ॐवरुणस्योत्तम्भनमसि स्वाहा। इदं वरुणाय न मम॥ १॥ ॐ वरुणस्य स्कम्भसर्जनीस्थः स्वाहा। इदं वरुणाय न मम॥ २॥ ॐ वरुणस्यऽऋतसदन्यसि स्वाहा। इदं वरुणाय न मम॥ ३॥ ॐवरुणस्यऽऋतसदनमसि स्वाहा। इदं वरुणाय न मम॥ ४॥ ॐवरुणस्यऽऋतसदनमासीद स्वाहा। इदं वरुणाय न मम॥ ५॥ ततो यजमानः अञ्जलौ गन्धाक्षतपुष्पाण्यादाय भगवत्याः श्रीगायत्रीदेव्याश्चरुणा प्रधानाहुतिप्रदानार्थं भगवत्याः श्रीगायत्रीदेव्याः समीपं गत्वा भगवतीं श्रीगायत्रीदेवीं प्रार्थयेत्॥ देवेशि भक्तिसुलभे परिवारसमन्विते। यावद्धोमं करिष्यामि तावदग्नौ स्थिरा भव॥ इति सम्प्रार्थ्य तस्मिन्पुष्पाञ्जलौ आगतां श्रीगायत्रीदेवीं मनसा विभाव्य कुण्डस्य समीपम् आगत्य तां पुष्पाञ्जलिम् अग्नौ प्रक्षिप्यावाहनादिमुद्राः प्रदर्शयेत्॥ भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ आवाहिता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ संस्थापिता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ संनिधापिता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ संनिरुद्धा भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ षेडङ्गेन सकलीकृता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ अवगुण्ठिता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ अमृतीकृता भव। भो भगवति श्रीगायत्रीदेवि त्वम् अस्मिन्नग्नौ परमीकृता भव। एवमावाहनादिमुद्राः प्रदर्श्य हस्ते गन्धाक्षतपुष्पाण्यादाय देवीं पूजयेत्॥ॐभूर्भुवः स्वः भगवत्यै अग्निस्वरूपिण्यै श्रीगायत्रीदेव्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि। इति सम्पूज्य। ततो यजमानः श्रीगायत्रीदेव्यर्थं कृते द्वितीयचरौ घृतमभिघार्य स्रुच्यां चरुमादाय तिस्र आहुतीः दद्यात्॥तद्यथा॥ चरुं गृहीत्वा मूलमंत्रं पठित्वा। ॐभूर्भुवः स्वः भगवत्यै श्रीगायत्रीदेव्यै नमः स्वाहा। इदं श्रीगायत्रीदेव्यै न मम॥ १॥ चरुं गृहीत्वा पुनर्मूलमन्त्रमुच्चार्य। ॐ भूर्भुवः स्वः भगवत्यै श्रीसावित्रीदेव्यै नमः स्वाहा। इदं श्रीसावित्रीदेव्यै

---

आज्यभागौ। ॐ अग्नये स्वाहा इदमग्नये न मम। ॐ सोमाय स्वाहा इदं सोमाय न मम। इमौ द्वे आहुती कुण्डस्य मध्यभागे देये॥ १-८ आवाहनादिमुद्राणां लक्षणं १८२ तमे पृष्ठे द्रष्टव्यम्।

न मम ॥२॥ चरुं गृहीत्वा पुनर्मूलमन्त्रमुच्चार्य। ॐभूर्भुवः स्वः भगवत्यै श्रीसरस्वतीदेव्यै नमः स्वाहा। इदं श्रीसरस्वतीदेव्यै न मम ॥ ३ ॥ एवं होमं कृत्वा होमानन्तरं यजमानः स्वकीयाञ्जलौ पुनः पुष्पाण्यादाय कुण्डसमीपमागत्य कुण्डस्थितां भगवतीं श्रीगायत्रीदेवीं प्रार्थयेत्। तद्यथा। होमस्थानात्समागच्छ पूजास्थानं महेश्वरि। यावत्पूजां करिष्यामि तावत्पीठे स्थिरा भव ॥ इति सम्प्रार्थ्य तस्मिन्नञ्जलौ भगवतीं श्रीगायत्रीदेवीमागतां विभाव्य पीठसमीपमागत्य मूर्तौ पुष्पाञ्जलिं दत्वा पुनः पूर्ववत्तत्रावाहनादिमुद्राः प्रदर्शयेत् ॥ ततो यजमानो द्रव्यत्यागं कुर्यात् ॥ हस्ते जलं गृहीत्वा। मया संपादितानीमानि हवनीयद्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न मम। यथादैवतमस्तु ॥ ततो होमारम्भं कुर्यात्॥

॥ इति कुशकण्डिका समाप्ता ॥

---

तत्रादौ गणपतये वराहुतिं दद्यात्।[१] ॐगणानान्त्वा० ॥१॥ ॐगणपतये नमः स्वाहा ॥ तत आचार्यो नवग्रहाणां समिच्चरुतिलाज्यद्रव्यैः प्रतिद्रव्यमेकं ब्राह्मणम् द्वौ बहून् वाऽऽहुतीनां प्रमाणेनोपवेश्य पूर्वकृतान्वाधानानुसारेण होमं कुर्यात्[२] ॥

इति नवग्रहादीनां होमः ॥

---

॥ अथ प्रधानहोमः ॥

एवमाचार्यो ग्रहहोमं ब्राह्मणद्वारा समाप्य प्रधानदेवताया भगवत्याः श्रीगायत्रीदेव्याः सप्रणवव्याहृतिसहितस्य चतुर्विंशतिवर्णात्मकश्रीगायत्रीमन्त्रस्य दशांशपक्षेण होमार्थं ब्राह्मणानुपवेश्याग्नौ श्रीगायत्रीदेव्या आवाहनार्थं यजमानस्याञ्जलौ गन्धाक्षतपुष्पाणि दत्वा भगवत्याः श्रीगायत्रीदेव्याः पीठसमीपं तं नीत्वा पीठस्थितां भगवतीम् आवाहनार्थं प्रार्थयेत्। तद्यथा। पूजास्थानात्समागच्छ होमस्थानं महेश्वरि ॥ यावद्धोमं करिष्यामि तावदग्नौ स्थिरा भव ॥ देवेशि भक्तिसुलभे परिवारसमन्विते। यावद्धोमं करिष्यामि तावदत्र स्थिरा भव॥ इति सम्प्रार्थ्य तस्मिन्नञ्जलौ भगवतीं श्रीगायत्रीदेवीं समागतां मनसा विचिन्त्य यजमानः कुण्डसमीप-

---

१ हेमाद्रौ देवीपुराणे च। गणाधिपतये देया प्रथमा तु वराहुतिः। अन्यथा विफलं कर्म भवतीह न संशयः ॥

२ अधिदेवतानां प्रत्यधिदेवतानाञ्च होमेऽपि यद्द्रव्यं नवग्रहाणामुक्तं तदेव द्रव्यं होतव्यम् । तथा चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात्। तत्तन्मंत्रैश्च होतव्या क्रमात्तदधिदेवताः । अधिदेवताशब्देन प्रत्यधिदेवतानामपि ग्रहणं बोध्यम् उभयोः साहचर्यात् ॥ यदि ग्रहाणामष्टौ स्यादधिप्रत्यधिकेषु च । चतुश्चतुर्भिर्नैदेरम्बादीनां द्विद्विसंख्यया ॥ याज्ञवल्क्यस्मृतौ तु ग्रहाणां समिद्विषये भिन्नभिन्नतयेदमुक्तम्–अर्कः पलाशः खादिरो ह्यपामार्गोऽथ पिप्पलः । उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ एकैकस्यात्राष्टशतमष्टाविंशतिरेव वा। होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण वा युता ॥ तथैव–अधिप्रत्यधिदेवतानां स्थापनमपि बोध्यम् ॥

मागत्य कुण्डे पुष्पाञ्जलिप्रक्षेपेण तत्र भगवत्याः श्रीगायत्रीदेव्या आगमनं विभाव्य तत्तन्मुद्राप्रयोजनपूर्वकम् आवाहनादिमुद्राः* प्रदर्शयेत् ॥ भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ आवाहिता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ संस्थापिता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ सन्निहिता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ सन्निरुद्धा भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ सकलीकृता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ अवगुण्ठिता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ अमृतीकृता भव । भो भगवति गायत्रीदेवि त्वमस्मिन्नग्नौ परमीकृता भव ॥ इति मुद्राः प्रदर्श्य । अग्ने त्वमैश्वरं तेजः परमं प्रकृतेर्वपुः ॥ तस्मात्त्वदीयहृत्पद्मे गायत्रीं तर्पयाम्यहम् ॥ इत्यग्निं सम्प्रार्थयेत् । ततो ब्राह्मणाः सप्रणवव्याहृतिसहितां चतुर्विंशतिवर्णात्मिकां गायत्र्यृचं पठन्तः प्रतिमन्त्रं घृताक्ततिलद्रव्येण होमं कुर्युः । होमानन्तरं यजमानः स्वकीयाञ्जलौ पुनः पुष्पाण्यादाय कुण्डसमीपमागत्य कुण्डस्थितां भगवतीं श्रीगायत्रीदेवीं प्रार्थयेत् । तद्यथा । होमस्थानात्समागच्छ पूजास्थाने महेश्वरि । यावत्पूजां करिष्यामि तावत्पीठे स्थिरा भव ॥ इति सम्प्रार्थ्य तस्मिन्नञ्जलौ भगवतीं श्रीगायत्रीदेवीमागतां विभाव्य पीठसमीपमागत्य मूर्तौ पुष्पाञ्जलिं दत्वा पुनः पूर्ववत्तत्रावाहनादिमुद्राः प्रदर्शयेत् ॥ एवं प्रत्यहं प्रधानहोमस्यारंभे भगवत्याः श्रीगायत्रीदेव्या अग्नौ आवाहनं होमसमाप्तौ पुनः विसर्जनञ्च कृत्वा पीठे आवाहनादिमुद्राप्रदर्शनपूर्वकं स्थापनं कार्यम् ॥

॥ इति प्रधानहोमः ॥

॥ अथ होमदशांशेन तर्पणप्रयोगस्तर्पणदशांशेन मार्जनप्रयोगश्च ॥[1]

सर्वे ब्राह्मणाः पङ्क्त्याकारेणोपविश्य आचमनं प्राणायामञ्च कृत्वा देशकालौ सङ्कीर्त्य अस्माकं यजमानेन ब्राह्मणद्वारा कृतस्य सप्रणवव्याहृतिचतुर्विंशतिवर्णात्मकश्रीगायत्रीमन्त्रस्यामुकलक्षजपानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तथाच प्रारब्धस्य समग्रमन्त्रश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् अस्माभिश्च सप्रणवव्याहृतिश्रीगायत्रीमन्त्राणां जपदशांशेन कृतस्य होमकर्मणश्च परिपूर्णतार्थं तद्दशांशेन तर्पणं पृथक् पृथक् करिष्यामहे। एवं सङ्कल्पं कृत्वा स्वस्वपात्रे शुद्धं जलं पूरयित्वा तत्र

* अष्टमुद्रास्तु १८२ तमे पृष्ठे द्रष्टव्याः ॥

१ दशांशपक्षे—चतुर्विंशतिलक्षजपात्मकस्य ( [illegible] होम ) [illegible] तर्पणं चतु [illegible] मार्जनञ्च कार्यम् । [illegible] तु— ( [illegible] होम ) [illegible] तर्पणं कार्यम् । [illegible] आज्ञां कार्यं ॥ [illegible]

भगवत्याः श्रीगायत्रीदेव्याः पूजायन्त्रं विभाव्य गन्धाक्षतपुष्पाण्यादाय मूलमन्त्रमुच्चार्य। अस्मिञ्जले यन्त्रस्वरूपिण्यै भगवत्यै श्रीगायत्रीदेव्यै नमः भगवतीं श्रीगायत्रीदेवीं सर्वोपचारार्थे गन्धाक्षतपुष्पैः पूजयामि। इति सम्पूज्य। सप्रणवव्याहृतिगायत्रीमूलमन्त्रमुच्चारयन् प्रतिमन्त्रं 'भगवतीं श्रीगायत्रीदेवीं तर्पयामि' इति देवतीर्थेन तर्पयेत् ॥ एवं होमदशांशेन तर्पणं कृत्वा। हस्ते जलं गृहीत्वा। अस्माभिः कृतेन होमदशांशेन तर्पणेनानेन भगवती श्रीगायत्रीदेवी प्रीयतां न मम। ततस्तर्पणानन्तरं तस्मात् भगवतीं श्रीगायत्रीदेवीं स्वहृदि विसृज्य तर्पणजलं विसृजेयुः॥ ततो मार्जनम्॥ सर्वे ब्राह्मणा आचमनं प्राणायामञ्च कृत्वा। हस्ते जलं गृहीत्वा सङ्कल्पं कुर्युः। देशकालौ सङ्कीर्त्य। अस्माकं यजमानेन ब्राह्मणद्वारा कृतस्य सप्रणवव्याहृतिचतुर्विंशतिवर्णात्मकश्रीगायत्रीमन्त्रस्यामुकलक्षजपानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः सांगतासिद्ध्यर्थं च तर्पणदशांशेन गायत्र्या मूलमंत्रेण पृथक् पृथक् मार्जनं करिष्यामहे॥ एवं सङ्कल्पं विधाय पात्रे शुद्धं जलं पूरयित्वा हृदि गन्धाक्षतपुष्पैर्गायत्रीमावाह्य सप्रणवव्याहृतिचतुर्विंशतिवर्णसहितं गायत्रीमन्त्रमुच्चार्य प्रतिमन्त्रं भगवतीं श्रीगायत्रीदेवीं (मार्जयामि) अभिषिञ्चामि। इति पठन्तः स्वशिरसि अभिषेकं कुर्युः[1] ॥ तर्पणानन्तरं हस्ते जलं गृहीत्वा। अस्माभिः कृतेनानेन मार्जनेन भगवती श्रीगायत्रीदेवी प्रीयतां न मम। इति जलं भगवत्यै श्रीगायत्रीदेव्यै निवेद्य ततो देवीं विसृज्य तज्जलं शुद्धदेशे विसृजेयुः ॥

॥ इति होमदशांशेन तर्पणप्रयोगः तर्पणदशांशेन मार्जनप्रयोगश्च ॥

---

## ॥ अथ स्थापितदेवतानां होमः ॥

एवं प्रधानहोमं समाप्यान्तिमदिने तद्दशांशेन तर्पणं तर्पणदशांशेन मार्जनञ्च कृत्वा प्रधानदेवताया भगवत्याः श्रीगायत्रीदेव्या अङ्गदेवतात्वेन स्थापितानां वास्त्वादिक्षेत्रपालदेवतान्तानां तथा च सर्वतोभद्रमण्डलदेवतासहितश्रीगायत्रीपीठदेवतानां गायत्रीयन्त्रदेवतानाञ्च स्थापनक्रमेण प्रतिदैवतमेकैकाम् आज्योहुतिं[2] दद्यात्। यजमानो हस्ते जलं गृहीत्वा। मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं भगवत्याःश्रीगायत्रीदेव्या अङ्गत्वेन वास्त्वादिस्थापितदेवतानां तथा च सर्वतोभद्रमण्डलदेवतासहितगायत्रीपीठदेवतानां यन्त्रदेवतानां च स्थापनक्रमेण प्रत्येकमेकैकयाऽऽज्याहुत्या यक्ष्ये ॥

---

१ कुम्भमुद्रया अभिषेकमार्जने कर्तव्ये इत्यपि शिष्टा आहुः। अन्ये च पञ्चपल्लवैर्दूर्वया वा मार्जनवत् मार्जनं कार्यमित्याहुः ॥ २ आज्येनैकाहुत्या तिलादिद्रव्यैस्तु प्रत्येकं दशाहुतिभिर्वा ॥

## ॥ अथ वास्तुमण्डलदेवतानां होमः ॥

१ ॐ ब्रह्मणे नमः स्वाहा ।
२ ॐ अर्यम्णे नमः स्वाहा ।
३ ॐ विवस्वते नमः स्वाहा ।
४ ॐ मित्राय नमः स्वाहा ।
५ ॐ पृथ्वीधराय नमः स्वाहा ।
६ ॐ सावित्राय नमः स्वाहा ।
७ ॐ सवित्रे नमः स्वाहा ।
८ ॐ विबुधाधिपाय नमः स्वाहा ।
९ ॐ जयाय नमः स्वाहा ।
१० ॐ राजयक्ष्मणे नमः स्वाहा ।
११ ॐ रुद्राय नमः स्वाहा ।
१२ ॐ अग्न्यो नमः स्वाहा ।
१३ ॐ आपवत्साय नमः स्वाहा ।
१४ ॐ शिखिने नमः स्वाहा ।
१५ ॐ पर्जन्याय नमः स्वाहा ।
१६ ॐ जयन्ताय नमः स्वाहा ।
१७ ॐ कुलिशाय नमः स्वाहा ।
१८ ॐ सूर्याय नमः स्वाहा ।
१९ ॐ सत्याय नमः स्वाहा ।
२० ॐ भृशाय नमः स्वाहा ।
२१ ॐ आकाशाय नमः स्वाहा ।
२२ ॐ वायवे नमः स्वाहा ।
२३ ॐ पूष्णे नमः स्वाहा ।
२४ ॐ वितथाय नमः स्वाहा ।
२५ ॐ गृहक्षताय नमः स्वाहा ।
२६ ॐ यमाय नमः स्वाहा ।
२७ ॐ गन्धर्वाय नमः स्वाहा ।
२८ ॐ भृङ्गराजाय नमः स्वाहा ।
२९ ॐ मृगाय नमः स्वाहा ।
३० ॐ पितृभ्यो नमः स्वाहा ।
३१ ॐ दौवारिकाय नमः स्वाहा ।
३२ ॐ सुग्रीवाय नमः स्वाहा ।
३३ ॐ पुष्पदन्ताय नमः स्वाहा ।
३४ ॐ वरुणाय नमः स्वाहा ।
३५ ॐ असुराय नमः स्वाहा ।
३६ ॐ शोषाय नमः स्वाहा ।
३७ ॐ पापाय नमः स्वाहा ।
३८ ॐ रोगाय नमः स्वाहा ।
३९ ॐ अहये नमः स्वाहा ।
४० ॐ मुख्याय नमः स्वाहा ।
४१ ॐ भल्लाटाय नमः स्वाहा ।
४२ ॐ सोमाय नमः स्वाहा ।
४३ ॐ सर्पाय नमः स्वाहा ।
४४ ॐ अदित्यै नमः स्वाहा ।
४५ ॐ दित्यै नमः स्वाहा ।
४६ ॐ चरक्यै नमः स्वाहा ।
४७ ॐ विदार्यै नमः स्वाहा ।
४८ ॐ पूतनायै नमः स्वाहा ।
४९ ॐ पापराक्षस्यै नमः स्वाहा ।
५० ॐ स्कन्दाय नमः स्वाहा ।
५१ ॐ अर्यम्णे नमः स्वाहा ।
५२ ॐ जृम्भकाय नमः स्वाहा ।
५३ ॐ पिलिपिच्छाय नमः स्वाहा ।
५४ ॐ इन्द्राय नमः स्वाहा ।
५५ ॐ अग्नये नमः स्वाहा ।
५६ ॐ यमाय नमः स्वाहा ।
५७ ॐ निर्ऋतये नमः स्वाहा ।
५८ ॐ वरुणाय नमः स्वाहा ।
५९ ॐ वायवे नमः स्वाहा ।
६० ॐ कुबेराय नमः स्वाहा ।
६१ ॐ ईशानाय नमः स्वाहा ।
६२ ॐ ब्रह्मणे नमः स्वाहा ।
६३ ॐ अनन्ताय नमः स्वाहा ।

॥ इति वास्तुमण्डलदेवतानां होमः ॥

## ॥ अथ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसमन्वितश्रीगजाननादि-चतुःषष्टियोगिनीनां होमः ॥

१ ॐ महाकाल्यै नमः स्वाहा ।
२ ॐ महालक्ष्म्यै नमः स्वाहा ।
३ ॐ महासरस्वत्यै नमः स्वाहा ।
४ ॐ गजाननायै नमः स्वाहा ।
५ ॐ सिंहमुख्यै नमः स्वाहा ।
६ ॐ गृध्रास्यायै नमः स्वाहा ।
७ ॐ काकतुण्डिकायै नमः स्वाहा ।
८ ॐ उष्ट्रग्रीवायै नमः स्वाहा ।
९ ॐ हयग्रीवायै नमः स्वाहा ।
१० ॐ वाराह्यै नमः स्वाहा ।
११ ॐ शरभाननायै नमः स्वाहा ।
१२ ॐ उलूकिकायै नमः स्वाहा ।
१३ ॐ शिवारावायै नमः स्वाहा ।
१४ ॐ मयूर्यै नमः स्वाहा ।
१५ ॐ विकटाननायै नमः स्वाहा ।
१६ ॐ अष्टवक्रायै नमः स्वाहा ।
१७ ॐ कोटराक्ष्यै नमः स्वाहा ।
१८ ॐ कुब्जायै नमः स्वाहा ।
१९ ॐ विकटलोचनायै नमः स्वाहा ।
२० ॐ शुष्कोदर्यै नमः स्वाहा ।
२१ ॐ ललजिह्वायै नमः स्वाहा ।
२२ ॐ श्वदंष्ट्रायै नमः स्वाहा ।
२३ ॐ वानराननायै नमः स्वाहा ।
२४ ॐ रुक्षाक्ष्यै नमः स्वाहा ।
२५ ॐ केकराक्ष्यै नमः स्वाहा ।
२६ ॐ बृहत्तुण्डायै नमः स्वाहा ।
२७ ॐ सुराप्रियायै नमः स्वाहा ।
२८ ॐ कपालहस्तायै नमः स्वाहा ।
२९ ॐ रक्ताक्ष्यै नमः स्वाहा ।
३० ॐ शुक्यै नमः स्वाहा ।
३१ ॐ श्येन्यै नमः स्वाहा ।
३२ ॐ कपोतिकायै नमः स्वाहा ।
३३ ॐ पाशहस्तायै नमः स्वाहा ।
३४ ॐ दण्डहस्तायै नमः स्वाहा ।
३५ ॐ प्रचण्डायै नमः स्वाहा ।
३६ ॐ चण्डविक्रमायै नमः स्वाहा ।
३७ ॐ शिशुघ्न्यै नमः स्वाहा ।
३८ ॐ पापहन्त्र्यै नमः स्वाहा ।
३९ ॐ काल्यै नमः स्वाहा ।
४० ॐ रुधिरपायिन्यै नमः स्वाहा ।
४१ ॐ वसाधयायै नमः स्वाहा ।
४२ ॐ गर्भभक्षायै नमः स्वाहा ।
४३ ॐ शवहस्तायै नमः स्वाहा ।
४४ ॐ आन्त्रमालिन्यै नमः स्वाहा ।
४५ ॐ स्थूलकेश्यै नमः स्वाहा ।
४६ ॐ बृहत्कुक्ष्यै नमः स्वाहा ।
४७ ॐ सर्पास्यायै नमः स्वाहा ।
४८ ॐ प्रेतवाहनायै नमः स्वाहा ।
४९ ॐ दन्दशूककरायै नमः स्वाहा ।
५० ॐ क्रौञ्च्यै नमः स्वाहा ।
५१ ॐ मृगशीर्षायै नमः स्वाहा ।
५२ ॐ वृषाननायै नमः स्वाहा ।
५३ ॐ व्यात्तास्यायै नमः स्वाहा ।
५४ ॐ धूमनिःश्वासायै नमः स्वाहा ।
५५ ॐ व्योमैकचरणोर्ध्वदृशे नमः स्वाहा ।
५६ ॐ तापिन्यै नमः स्वाहा ।
५७ ॐ शोषणीदृष्ट्यै नमः स्वाहा ।

५८ ॐ कोटर्यै नमः स्वाहा ।
५९ ॐ स्थूलनासिकायै नमः स्वाहा ।
६० ॐ विद्युत्प्रभायै नमः स्वाहा ।
६१ ॐ वलाकास्यायै नमः स्वाहा ।
६२ ॐ मार्जार्यै नमः स्वाहा ।
६३ ॐ कटपूतनायै नमः स्वाहा ।
६४ ॐ अट्टाट्टहासायै नमः स्वाहा ।
६५ ॐ कामाक्ष्यै नमः स्वाहा ।
६६ ॐ मृगाक्ष्यै नमः स्वाहा ।
६७ ॐ मृगलोचनायै नमः स्वाहा ।

॥ इति गजाननादिचतुःषष्टियोगिनीनां होमः ॥

## ॥ अथैकपञ्चाशत्क्षेत्रपालदेवतानां होमः ॥

१ ॐ क्षेत्रपालाय नमः स्वाहा ।
२ ॐ अजराय नमः स्वाहा ।
३ ॐ व्यापकाय नमः स्वाहा ।
४ ॐ इन्द्रचौराय नमः स्वाहा ।
५ ॐ इन्द्रमूर्तये नमः स्वाहा ।
६ ॐ उक्षाय नमः स्वाहा ।
७ ॐ कूष्माण्डाय नमः स्वाहा ।
८ ॐ वरुणाय नमः स्वाहा ।
९ ॐ बटुकाय नमः स्वाहा ।
१० ॐ विमुक्ताय नमः स्वाहा ।
११ ॐ लिप्तकायाय नमः स्वाहा ।
१२ ॐ लीलाकाय नमः स्वाहा ।
१३ ॐ एकदंष्ट्राय नमः स्वाहा ।
१४ ॐ ऐरावताय नमः स्वाहा ।
१५ ॐ ओषधिघ्नाय नमः स्वाहा ।
१६ ॐ बन्धनाय नमः स्वाहा ।
१७ ॐ दिव्यकाय नमः स्वाहा ।
१८ ॐ कम्बलाय नमः स्वाहा ।
१९ ॐ भीषणाय नमः स्वाहा ।
२० ॐ गवयाय नमः स्वाहा ।
२१ ॐ घण्टाय नमः स्वाहा ।
२२ ॐ व्यालाय नमः स्वाहा ।
२३ ॐ अणवे नमः स्वाहा ।
२४ ॐ चन्द्रवारुणाय नमः स्वाहा ।
२५ ॐ पटाटोपाय नमः स्वाहा ।
२६ ॐ जटालाय नमः स्वाहा ।
२७ ॐ क्रतवे नमः स्वाहा ।
२८ ॐ घण्टेश्वराय नमः स्वाहा ।
२९ ॐ विटङ्काय नमः स्वाहा ।
३० ॐ मणिमानाय नमः स्वाहा ।
३१ ॐ गणबन्धवे नमः स्वाहा ।
३२ ॐ डामराय नमः स्वाहा ।
३३ ॐ ढुण्ढिकर्णाय नमः स्वाहा ।
३४ ॐ स्थविराय नमः स्वाहा ।
३५ ॐ दन्तुराय नमः स्वाहा ।
३६ ॐ धनदाय नमः स्वाहा ।
३७ ॐ नागकर्णाय नमः स्वाहा ।
३८ ॐ महाबलाय नमः स्वाहा ।
३९ ॐ फेत्काराय नमः स्वाहा ।
४० ॐ चीकराय नमः स्वाहा ।
४१ ॐ सिंहाय नमः स्वाहा ।
४२ ॐ मृगाय नमः स्वाहा ।
४३ ॐ यक्षाय नमः स्वाहा ।
४४ ॐ मेघवाहनाय नमः स्वाहा ।
४५ ॐ तीक्ष्णोष्ठाय नमः स्वाहा ।
४६ ॐ अनलाय नमः स्वाहा ।
४७ ॐ शुक्लतुण्डाय नमः स्वाहा ।
४८ ॐ सुधालापाय नमः स्वाहा ।
४९ ॐ बर्बरकाय नमः स्वाहा ।
५० ॐ पवनाय नमः स्वाहा ।
५१ ॐ पावनाय नमः स्वाहा ।

॥ इति क्षेत्रपालदेवतानां होमः ॥

## ॥ अथ सर्वतोभद्रमण्डलदेवतानां होमः ॥

१ ॐ ब्रह्मणे नमः स्वाहा ।
२ ॐ सोमाय नमः स्वाहा ।
३ ॐ ईशानाय नमः स्वाहा ।
४ ॐ इन्द्राय नमः स्वाहा ।
५ ॐ अग्नये नमः स्वाहा ।
६ ॐ यमाय नमः स्वाहा ।
७ ॐ निर्ऋतये नमः स्वाहा ।
८ ॐ वरुणाय नमः स्वाहा ।
९ ॐ वायवे नमः स्वाहा ।
१० ॐ अष्टवसुभ्यो नमः स्वाहा ।
११ ॐ एकादशरुद्रेभ्यो नमः स्वाहा ।
१२ ॐ द्वादशादित्येभ्यो नमः स्वाहा ।
१३ ॐ अश्विभ्यां नमः स्वाहा ।
१४ ॐसपैतृकविश्वेभ्यो देवेभ्यो नमः स्वाहा ।
१५ ॐ सप्तयक्षेभ्यो नमः स्वाहा ।
१६ ॐ भूतनागेभ्यो नमः स्वाहा ।
१७ ॐ गन्धर्वाप्सरोभ्यो नमः स्वाहा ।
१८ ॐ स्कन्दाय नमः स्वाहा ।
१९ ॐ नन्दीश्वराय नमः स्वाहा ।
२० ॐ शूलमहाकालाभ्यां नमः स्वाहा ।
२१ ॐ दक्षादिसप्तगणेभ्यो नमः स्वाहा ।
२२ ॐ दुर्गायै नमः स्वाहा ।
२३ ॐ विष्णवे नमः स्वाहा ।
२४ ॐ स्वधासहितपितृभ्यो नमः स्वाहा ।
२५ ॐ मृत्युरोगाभ्यां नमः स्वाहा ।
२६ ॐ गणपतये नमः स्वाहा ।
२७ ॐ अद्भ्यो नमः स्वाहा ।
२८ ॐ मरुद्भ्यो नमः स्वाहा ।
२९ ॐ पृथिव्यै नमः स्वाहा ।
३० ॐ गङ्गादिनदीभ्यो नमः स्वाहा ।
३१ ॐ सप्तसागरेभ्यो नमः स्वाहा ।
३२ ॐ मेरवे नमः स्वाहा ।
३३ ॐ गदायै नमः स्वाहा ।
३४ ॐ त्रिशूलाय नमः स्वाहा ।
३५ ॐ वज्राय नमः स्वाहा ।
३६ ॐ शक्तये नमः स्वाहा ।
३७ ॐ दण्डाय नमः स्वाहा ।
३८ ॐ खड्गाय नमः स्वाहा ।
३९ ॐ पाशाय नमः स्वाहा ।
४० ॐ अङ्कुशाय नमः स्वाहा ।
४१ ॐ गौतमाय नमः स्वाहा ।
४२ ॐ भरद्वाजाय नमः स्वाहा ।
४३ ॐ विश्वामित्राय नमः स्वाहा ।
४४ ॐ कश्यपाय नमः स्वाहा ।
४५ ॐ जमदग्नये नमः स्वाहा ।
४६ ॐ वसिष्ठाय नमः स्वाहा ।
४७ ॐ अत्रये नमः स्वाहा ।
४८ ॐ अरुन्धत्यै नमः स्वाहा ।
४९ ॐ ऐन्द्र्यै नमः स्वाहा ।
५० ॐ कौमार्यै नमः स्वाहा ।
५१ ॐ ब्राह्म्यै नमः स्वाहा ।
५२ ॐ वाराह्यै नमः स्वाहा ।
५३ ॐ चामुण्डायै नमः स्वाहा ।
५४ ॐ वैष्णव्यै नमः स्वाहा ।
५५ ॐ माहेश्वर्यै नमः स्वाहा ।
५६ ॐ वैनायक्यै नमः स्वाहा ।

॥ इति सर्वतोभद्रमण्डलदेवतानां होमः ॥

## ॥ अथ श्रीगायत्र्याः पीठयन्त्रदेवतानां होमः ॥

१ ॐ मं मण्डूकाय नमः स्वाहा ।
२ ॐ कं कालाग्निरुद्राय नमः स्वाहा ।
३ ॐ मं मूलप्रकृत्यै नमः स्वाहा ।
४ ॐ आं आधारशक्तिभ्यो नमः स्वाहा ।
५ ॐ कूं कूर्माय नमः स्वाहा ।
६ ॐ अं अनन्ताय नमः स्वाहा ।
७ ॐ वं वराहाय नमः स्वाहा ।
८ ॐ धं धरण्यै नमः स्वाहा ।
९ ॐ सुं सुधासिन्धवे नमः स्वाहा ।
१० ॐ रं रत्नद्वीपाय नमः स्वाहा ।
११ ॐ कं कल्पवृक्षाय नमः स्वाहा ।
१२ ॐ स्वं स्वर्णवेदिकायै नमः स्वाहा ।
१३ ॐ रं रत्नसिंहासनाय नमः स्वाहा ।
१४ ॐ धं धर्माय नमः स्वाहा ।
१५ ॐ ज्ञां ज्ञानाय नमः स्वाहा ।
१६ ॐ वैं वैराग्याय नमः स्वाहा ।
१७ ॐ ऐं ऐश्वर्याय नमः स्वाहा ।
१८ ॐ अं अधर्माय नमः स्वाहा ।
१९ ॐ अं अज्ञानाय नमः स्वाहा ।
२० ॐ अं अवैराग्याय नमः स्वाहा ।
२१ ॐ अं अनैश्वर्याय नमः स्वाहा ।
२२ ॐ अं अनन्ताय नमः स्वाहा ।
२३ ॐ अं अम्बुजाय नमः स्वाहा ।
२४ ॐ आं आनन्दकन्दाय नमः स्वाहा ।
२५ ॐ सं संविन्नालाय नमः स्वाहा ।
२६ ॐ सं सर्वतत्त्वात्मकपद्माय नमः स्वाहा ।
२७ ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः स्वाहा ।
२८ ॐ विं विकारमयकेसरेभ्यो नमः स्वाहा ।
२९ ॐ पं पंचाशद्वर्णबीजाढ्यकर्णिकायै नमः स्वाहा ।
३० ॐ अं द्वादशकलात्मने सूर्यमं० नमः स्वाहा
३१ ॐ उं षोडशकलात्मनेसोमम० नमः स्वाहा
३२ ॐ मं दशकलात्मनेवह्निमं० नमः स्वाहा ।
३३ ॐ सं सत्त्वाय नमः स्वाहा ।
३४ ॐ रं रजसे नमः स्वाहा ।
३५ ॐ तं तमसे नमः स्वाहा ।
३६ ॐ आं आत्मने नमः स्वाहा ।
३७ ॐ अं अन्तरात्मने नमः स्वाहा ।
३८ ॐ पं परमात्मने नमः स्वाहा ।
३९ ॐ ह्रीं ज्ञानात्मने नमः स्वाहा ।
४० ॐ मां मायातत्त्वाय नमः स्वाहा ।
४१ ॐ कं कलातत्त्वाय नमः स्वाहा ।
४२ ॐ विं विद्यातत्त्वाय नमः स्वाहा ।
४३ ॐ पं परतत्त्वाय नमः स्वाहा ।
४४ ॐ रां दीप्तायै नमः स्वाहा ।
४५ ॐ रीं सूक्ष्मायै नमः स्वाहा ।
४६ ॐ रुं जयायै नमः स्वाहा ।
४७ ॐ रें भद्रायै नमः स्वाहा ।
४८ ॐ रैं विभूत्यै नमः स्वाहा ।
४९ ॐ रों विमलायै नमः स्वाहा ।
५० ॐ रौं अमोघायै नमः स्वाहा ।
५१ ॐ रं विद्युतायै नमः स्वाहा ।
५२ ॐ रः सर्वतोमुख्यै नमः स्वाहा ।
५३ ॐ ब्रह्मविष्णुरुद्रयिम्यात्मकाय सौर-पीठाय नमः स्वाहा ।

॥ इति पीठदेवतानां होमः ॥

---

## ॥ अथ यन्त्रदेवतानां होमः ॥

५४ ॐ श्रीगायत्रीदेव्यै नमः स्वाहा ।
५५ ॐ श्रीगायत्रीदेव्यै नमः स्वाहा ।
५६ ॐ श्रीसावित्रीदेव्यै नमः स्वाहा ।
५७ ॐ श्रीसरस्वतीदेव्यै नमः स्वाहा ।

५८ ॐ ब्रह्मणे नमः स्वाहा ।
५९ ॐ विष्णवे नमः स्वाहा ।
६० ॐ रुद्राय नमः स्वाहा ।
६१ ॐ श्रीगायत्रीदेव्यै नमः स्वाहा ।
६२ ॐ श्रीसावित्रीदेव्यै नमः स्वाहा ।
६३ ॐ श्रीसरस्वतीदेव्यै नमः स्वाहा ।
६४ ॐ ब्रह्मणे नमः स्वाहा ।
६५ ॐ विष्णवे नमः स्वाहा ।
६६ ॐ रुद्राय नमः स्वाहा ।
६७ ॐ आदित्याय नमः स्वाहा ।
६८ ॐ भास्कराय नमः स्वाहा ।
६९ ॐ भानवे नमः स्वाहा ।
७० ॐ रवये नमः स्वाहा ।
७१ ॐ उषायै नमः स्वाहा ।
७२ ॐ प्रज्ञायै नमः स्वाहा ।
७३ ॐ प्रभायै नमः स्वाहा ।
७४ ॐ सन्ध्यायै नमः स्वाहा ।
७५ ॐ हृदयाय नमः स्वाहा ।
७६ ॐ शिरसे नमः स्वाहा ।
७७ ॐ शिखायै नमः स्वाहा ।
७८ ॐ कवचाय नमः स्वाहा ।
७९ ॐ नेत्रत्रयाय नमः स्वाहा ।
८० ॐ अस्त्राय नमः स्वाहा ।
८१ ॐ अस्त्राय नमः स्वाहा ।
८२ ॐ अस्त्राय नमः स्वाहा ।
८३ ॐ अस्त्राय नमः स्वाहा ।
८४ ॐ प्रल्हादिन्यै नमः स्वाहा ।
८५ ॐ प्रभायै नमः स्वाहा ।
८६ ॐ नित्यायै नमः स्वाहा ।
८७ ॐ विश्वम्भरायै नमः स्वाहा ।
८८ ॐ विलासिन्यै नमः स्वाहा ।
८९ ॐ प्रभावत्यै नमः स्वाहा ।
९० ॐ जयायै नमः स्वाहा ।
९१ ॐ शान्त्यै नमः स्वाहा ।
९२ ॐ कान्त्यै नमः स्वाहा ।
९३ ॐ दुर्गायै नमः स्वाहा ।
९४ ॐ सरस्वत्यै नमः स्वाहा ।
९५ ॐ विश्वरूपायै नमः स्वाहा ।
९६ ॐ विशालायै नमः स्वाहा ।
९७ ॐ ईशायै नमः स्वाहा ।
९८ ॐ व्यापिन्यै नमः स्वाहा ।
९९ ॐ विमलायै नमः स्वाहा ।
१०० ॐ तमोऽपहारिण्यै नमः स्वाहा ।
१०१ ॐ सूक्ष्मायै नमः स्वाहा ।
१०२ ॐ विश्वयोन्यै नमः स्वाहा ।
१०३ ॐ जयावहायै नमः स्वाहा ।
१०४ ॐ पद्मालयायै नमः स्वाहा ।
१०५ ॐ परायै नमः स्वाहा ।
१०६ ॐ शोभायै नमः स्वाहा ।
१०७ ॐ पद्मरूपायै नमः स्वाहा ।
१०८ ॐ ब्राह्म्यै नमः स्वाहा ।
१०९ ॐ माहेश्वर्यै नमः स्वाहा ।
११० ॐ कौमार्यै नमः स्वाहा ।
१११ ॐ वैष्णव्यै नमः स्वाहा ।
११२ ॐ वाराह्यै नमः स्वाहा ।
११३ ॐ इन्द्राण्यै नमः स्वाहा ।
११४ ॐ चामुण्डायै नमः स्वाहा ।
११५ ॐ अरुणायै नमः स्वाहा ।
११६ ॐ सूर्याय नमः स्वाहा ।
११७ ॐ चन्द्राय नमः स्वाहा ।
११८ ॐ भौमाय नमः स्वाहा ।
११९ ॐ बुधाय नमः स्वाहा ।
१२० ॐ बृहस्पतये नमः स्वाहा ।
१२१ ॐ शुक्राय नमः स्वाहा ।

१२२ ॐ शनैश्चराय नमः स्वाहा ।
१२३ ॐ राहवे नमः स्वाहा ।
१२४ ॐ केतवे नमः स्वाहा ।
१२५ ॐ इन्द्राय नमः स्वाहा ।
१२६ ॐ अग्नये नमः स्वाहा ।
१२७ ॐ यमाय नमः स्वाहा ।
१२८ ॐ निर्ऋतये नमः स्वाहा ।
१२९ ॐ वरुणाय नमः स्वाहा ।
१३० ॐ वायवे नमः स्वाहा ।
१३१ ॐ कुबेराय नमः स्वाहा ।
१३२ ॐ ईशानाय नमः स्वाहा ।
१३३ ॐ ब्रह्मणे नमः स्वाहा ।
१३४ ॐ अनन्ताय नमः स्वाहा ।
१३५ ॐ वज्राय नमः स्वाहा ।
१३६ ॐ शक्तये नमः स्वाहा ।
१३७ ॐ दण्डाय नमः स्वाहा ।
१३८ ॐ खड्गाय नमः स्वाहा ।
१३९ ॐ पाशाय नमः स्वाहा ।
१४० ॐ अङ्कुशाय नमः स्वाहा ।
१४१ ॐ गदायै नमः स्वाहा ।
१४२ ॐ त्रिशूलाय नमः स्वाहा ।
१४३ ॐ अब्जाय नमः स्वाहा ।
१४४ ॐ चक्राय नमः स्वाहा ।

॥ इति श्रीगायत्र्याः पीठयन्त्रदेवतानां होमः ॥

---

॥ अथ उत्तरतन्त्रारंभः ॥

॥ तत्रादौ फलादीनां होमः ॥

फलहोमः ॥ सपत्नीको यजमानः आचार्यादिसमस्तर्त्विग्भिः परिवृतः कुण्डस्य पश्चिमभागे उपविश्य।आचमनं मूलमन्त्रेण प्राणायामञ्च कृत्वा हस्ते जलं गृहीत्वा।देशकालौ सङ्कीर्त्य मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थमाचारात् फलहोमं करिष्ये । इति संकल्प्य स्रुचिमध्ये घृतेन सह द्राक्षां निधाय । ॐ आकृष्णेन रज० ॥ ४/३ ३/२ ॥ ॐभूर्भुवः स्वः सूर्याय नमः स्वाहा ॥ १ ॥ पुनः स्रुचिमध्ये आज्येन सह इक्षु निधाय । ॐइमन्देवा० ॥ ४/८ ॥ ॐभूर्भुवः स्वः सोमाय नमः स्वाहा ॥ २ ॥ पुनः स्रुचिमध्ये आज्येन सह पूगं निधाय । ॐअग्निर्मूर्द्धा० ॥ १/३ २ ॥ ॐभूर्भुवः स्वः भौमाय नमः स्वाहा ॥ ३ ॥ पुनः स्रुचिमध्ये नारिङ्गं निधाय । ॐउद्बुध्यस्वाग्ने० ॥ ६/१ १/८ ॥ ॐ भूर्भुवः स्वः बुधाय नमः स्वाहा ॥ ४ ॥ पुनः स्रुचिमध्ये आज्येन सह जम्बीरं निधाय । ॐबृहस्पते अति० ॥ ३/२६ ॥ ॐभूर्भुवः स्वः बृहस्पतये नमः स्वाहा ॥ ५ ॥ पुनः स्रुचिमध्ये आज्येन सह बीजपूरकं निधाय । ॐअन्नात्परि० ॥ ११/१ ५/६ ॥ ॐ भूर्भुवः स्वः शुक्राय नमः स्वाहा ॥ ६ ॥ पुनः स्रुचिमध्ये आज्येन सह उत्तत्तीं निधाय । ॐ शन्नोदेवी० ॥ ३/३ २/६ ॥ ॐ भूर्भुवः स्वः शनैश्चराय नमः स्वाहा ॥ ७ ॥ पुनः स्रुचिमध्ये आज्येन सह नारिकेलं निधाय । ॐकयानश्चि० ॥ ४/२ ४/१ ॥

---

१ फलहोमस्यानावश्यकत्वं सर्वैर्बुध्यते तथाप्याचारात् सर्वत्र सर्वैः क्रियते अत एवास्माभिरपि प्रदत्त. ॥
पूगनारिङ्गजम्बीरबीजपूरकम् । उत्तत्ती नारिकेलं च दाडिमं क्रमश. फलम् ॥

ॐभूर्भुवः स्वः राहवे नमः स्वाहा ॥ ८ ॥ पुनः स्रुचिमध्ये आज्येन सह दाडिमं निधाय। ॐ केतुं कृण्वन्न० ॥ ॐ भूर्भुवः स्वः केतवे नमः स्वाहा ॥ ९॥

ततो गुग्गुलहोमः॥हस्ते जलमादाय॥अत्राद्येत्याद्युच्चार्य मम गृहे भूतादिदोषपरिहारार्थं त्र्यम्बकमितिमन्त्रेण गुग्गुलहोमं करिष्ये। ॐत्र्यम्बकं यजा० ॥ ॥ स्वाहा॥

ततः सर्षपहोमः।अद्येत्याद्युच्चार्य मम सर्वारिष्टशान्त्यर्थं शत्रुबलक्षयार्थंञ्च जातवेदसे इतिमन्त्रेण सर्षपहोमं करिष्ये॥ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निः स्वाहा ॥ उदकस्पर्शः ॥

ततो लक्ष्मीहोमः।हस्ते जलमादाय अत्राद्येत्याद्युच्चार्य मम गृहे अलक्ष्मीविनाशार्थं दशविधलक्ष्मीप्राप्त्यर्थं श्रीलक्ष्मीहोममहं करिष्ये ॥ ततः सीताफलं क्षीरमाज्यं दाडिमं मधु शर्करां दुर्वां शमीं तण्डुलान् नागवल्लीदलानि च कदलीफलानीति सर्वाण्येकस्मिन् पात्रे एकीकृत्य जुहुयात् ॥

ॐ सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम्॥ सनिंमेधामयासिषं स्वाहा ॥ १ ॥ ॥ ॥ यांमेधांदेवगणाःपितरश्चोपासते ॥ तयामामद्यमेधयाग्नेमेधाविनंकुरुस्वाहा ॥ २ ॥ ॥ मेधांमेवरुणोददातुमेधामग्निःप्रजापतिः ॥ मेधामिन्द्रश्चवायुश्चमेधांधाताददातुमेस्वाहा ॥ ३ ॥ ॥ इदंमेब्रह्मचक्षत्रंचोभेश्रियमश्नुताम् ॥ मयिदेवादधतुश्रियमुत्तमां तस्यै ते स्वाहा ॥ ४ ॥ ॥ मम गृहे लक्ष्मीः स्थिरा भवतु । इति लक्ष्मीहोमः । इति फलादीनां होमः ॥

## ॥ अथ स्थापितदेवतानामुत्तरपूजनम् ॥

यजमानो हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सप्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनमहं करिष्ये । आग्नेय्यां गणपतिपूजनम् । ॐ गणानान्त्वा गणपतिꣳहवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे वसोमम । आहमजानि गर्भधमात्वमजासिगर्भधम् ॥ ॥ ॐ भूर्भुवः स्वः सिद्धिबुद्धिसहिताय श्रीगजाननाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० । अथ मातृकापूजनम् । ॐ समख्ये देव्याधिया सन्दक्षिणयोरुचक्षसा ॥ मामऽआयुः प्रमोषीर्म्मोऽअहन्तव वीरं विदेय तव देविसन्दृशि ॥ ॥ ॐ भूर्भुवः स्वः सगणेशगौर्य्याद्यावाहितमातृभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि । अथ सप्तवसोर्धारापूजनम्॥ ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यौ वहोरात्रे पार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् । इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइषाण ॥ ॥ ॐ भूर्भुवः स्वः श्र्यादिवसोर्धारादेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि

सम० । अथ नैर्ऋत्यां वास्तुपुरुषपूजनम् । ॐवास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवो भवानः । यत्त्वे महे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे ॥ ॐभूर्भुवः स्वः ब्रह्माद्यावाहितवास्तुमण्डलदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ आग्नेय्यां गौर्यादिमातृकाणां दक्षिणभागे योगिनीपूजनम् । ॐयोगेयोगेतवस्तरंवाजेवाजे हवामहे । सखायऽइन्द्रमूतये ॥१२॥ ॐ भूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिताभ्यो गजाननादिचतुःषष्टियोगिनीभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ वायव्यां क्षेत्रपालपूजनम्। ॐ नहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरंक्षैत्रजित्यायदेवाः ॥१३॥ ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्योऽजराद्येकपञ्चाशत्क्षेत्रपालदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०॥मध्ये सर्वतोभद्रमण्डलादिदेवतासहितश्रीगायत्रीदेव्याः पूजनम् । ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचोवेनऽआवः । सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्च विवः ॥ १४ ॥ ॐअम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम्॥१५॥ ॐ भूर्भुवः स्वः सर्वतोभद्रमण्डलदेवतासमन्वितपीठयन्त्राद्यावरणदेवतासहितायै साङ्गायै सपरिवारायै भगवत्यै श्रीगायत्रीदेव्यै नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ अग्निपूजनम्॥ ॐ अग्नेनयसुपथारायेऽअस्मान्विश्वानिदेववयुनानिविद्वान् । युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥१६॥ ॐ भूर्भुवः स्वः अग्नये नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ ईशान्यां सूर्यादिनवग्रहमण्डलदेवतापूजनम्। ॐग्रहाऽऊर्जाहुतयोव्यन्तोविप्रायमतिम् । तेषांविशिप्रियाणां वोहमिषमूर्ज्जᳪसमग्रभमुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरिन्द्रायत्वाजुष्टतमम् ॥ १ ॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि॥ ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः धूपमाघ्रापयामि । ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः दीपं दर्शयामि । ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः नैवेद्यं निवेदयामि । ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः मुखवासार्थे पूगीफलताम्बूलं समर्प० ॥ ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः यथाशक्ति प्रत्येकं महादक्षिणां सम० ॥ ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः कर्पूरारार्तिक्यं सम० ॥ ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः मन्त्रपुष्पाञ्जलिं सम० ॥ ॐ भूर्भुवः स्वः गणपत्यादिस्थापितदेवताभ्यो नमः फलेन विशेषार्घ्यं

सम० ॥ हस्तेजलमादाय । अनया पूजया गणपत्यादिस्थापितदेवाः प्रीयन्तां न मम ॥

ततः स्विष्टकृद्धोमः ॥ हविःशेषं गृहीत्वा ब्रह्मणाऽन्वारब्धो जुहुयात् ॥ ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ ततो नवाहुतयः ॥

---

## ॥ अथ सर्वप्रायश्चित्तनवाहुतयः ॥

सर्वप्रायश्चित्ताहुत्यर्थं यजमानो हस्ते जलं गृहीत्वा सङ्कल्पं कुर्यात् । अस्मिन्सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः प्रारम्भत आसमाप्ति देशतः कालतः तन्त्रतो मन्त्रतश्च ज्ञानतोऽज्ञानतश्च वा न्यूनाधिकान्यथाकरणजनितप्रत्यवायपरिहारार्थं तथा च प्रधानाङ्गदेवताविहितसमिधादिहवनीयद्रव्याणां न्यूनाधिक्यजनितप्रत्यवायपरिहारार्थं तथा च तेषा मध्ये कृमिकीटादिसंभवजनितप्रत्य० तथैव च तत्तद्देवतोक्तहवनीयद्रव्याभावजनितप्रत्यवायपरिहारार्थं तथा च कृमिकीटादीनामग्नौ दाहजनितप्रत्य० तथा च होमप्रदानसमयेऽग्नौ स्वाहाकारोत्तराव्यवहिताहुतिप्रक्षेपाभावजनितप्रत्यवायपरिहारार्थं तथैव प्रणीताग्न्योर्मध्ये गमनजनितप्रत्य० तथाच परिस्तरणादीनां दाहजनितप्रत्य० तथाच हवनीयद्रव्याणा कुण्डाद्बहिःपतनजनितप्रत्यवायपरिहारार्थं तथैव होमप्रदाने तत्तद्देवतामन्त्राणामुच्चारणे ह्रस्वदीर्घप्लुतस्वरितोदात्तादीनां व्यत्ययोच्चारणजनितप्रत्यवायपरिहारार्थं कृतस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साद्गुण्यार्थं सर्वप्रायश्चित्तहवनमहं करिष्ये ॥ ब्रह्मणाऽन्वारब्धो जुहुयात् ॥ ॐ भूः स्वाहा इदमग्नये न मम ॥ १ ॥ ॐ भुवः स्वाहा इदं वायवे न मम ॥ २ ॥ ॐ स्वः स्वाहा इदं सूर्याय न मम ॥ ३ ॥ ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥ २१ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ४ ॥ ॐ सत्वन्नोऽअग्नेवमो भवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो नऽएधि स्वाहा ॥ २१ ॥ इदमग्नीवरुणाभ्यां न मम ॥ ५ ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा ॥ इदमग्नये अयसे न मम ॥ ६ ॥ ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥ इदं वरुणाय

---

१ पा गृ. प्रथमीकण्डिकाया तृतीये चतुर्थे पञ्चमे च सूत्रे भगवता गृह्यसूत्रकारेण "अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्च एतन्नित्यꣳसर्वत्र" एवेनैताश्चतुर्दशाहुतिषु ब्रह्मणान्वारब्धो यजमानः अष्टावाहुतीर्दद्यात् ॥ तथैव यथाज्याद्धविरपि अन्यथोक्तं स्विष्टकृदाहुति महाव्याहृतिभ्य प्राग्देया । यत्र च केवलं घृतमेव हविः स्यात्तत्र तु ॐ प्रजापतये स्वाहा इत्याहुतिः प्राग्देया ॐ स्विष्टकृते स्वाहा इत्याहुतिश्च यथादिशेव "प्राग्महाव्याहृतिभ्य स्विष्टकृदन्यच्चेदाज्याद्धविः" इत्यस्यार्थनिष्कर्षः ॥

पवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम ॥ ७ ॥ ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमँश्रथाय । अथावयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥ ११ ॥ इदं वरुणायादित्यायादितये च न मम ॥ ८ ॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम ॥ ९ ॥

इति सर्वप्रायश्चित्तनवाहुतयः ॥

॥ अथ दिग्पालादिस्थापितदेवतादीनां बलिदानम् ॥

यजमानो हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं दशदिक्पालदेवतानां स्थापितदेवतादीनाञ्च पूजनपूर्वकबलिदानं करिष्ये ॥ प्राच्याम्—ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनो मघवा धात्विन्द्रः ॥ २० ॥ प्राच्यां दिशि—इन्द्रं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैः त्वामहं पूजयामि । इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं सम० ॥ भो इन्द्र दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन इन्द्रः प्रीयतां न मम ॥ १ ॥ आग्नेय्याम्—ॐ त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य हेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ २१ ॥ आग्नेय्यां विदिशि—अग्निं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि । भो अग्ने दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन अग्निः प्रीयतां न मम ॥ २ ॥ दक्षिणस्याम्—ॐ सुमायत्त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्म्माय स्वाहा घर्म्मः पित्रे ॥ २२ ॥ दक्षिणस्यां दिशि—यमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो यम दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन यमः प्रीयतां न मम ॥ नैर्ऋत्याम्—ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यं-

मस्तु ॥ ६२/१२ ॥ नैर्ऋत्यां विदिशि—निर्ऋतिं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । निर्ऋतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं वलिं सम० । भो निर्ऋते दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकवलिदानेन निर्ऋतिः प्रीयतां न मम ॥ ४ ॥ पश्चिमायाम्—ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥२/२१॥ पश्चिमायां दिशि—वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं वलिं समर्प० ॥ भो वरुण दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकवलिदानेन वरुणः प्रीयतां न मम ॥ ५ ॥ वायव्याम्—ॐ आनोनियुद्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम् । वायोऽअस्मिन्त्सवनेमादयस्व यूयं पातस्वस्तिभिःसदा नः ॥ २/३८ ॥ वायव्यां विदिशि—वायुं साङ्गं सपरिवारं सायुधं सशक्तिम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं वलिं समर्पयामि । भो वायो दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकवलिदानेन वायुः प्रीयतां न मम ॥ ६ ॥ उत्तरस्याम्—ॐ वयꣳसोमव्रतेतवमनस्तनूषुविभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ५/३६ ॥ उदीच्यां दिशि-सोमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं वलिं समर्पयामि । भो सोम दिशं रक्ष वलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकवलिदानेन सोमः प्रीयतां न मम ॥ ७ ॥ ईशान्याम्—ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् । पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ २/३८ ॥ ईशान्यां विदिशि—ईश्वरं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । ईश्वराय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं वलिं समर्प-

यामि ॥ भो ईश्वर दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन ईश्वरः प्रीयतां न मम ॥ ८ ॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्—ॐअस्मे रुद्रामेहनापर्वतासोवृत्रहत्त्येभरहूतौसुजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रऽइन्द्रज्ज्येष्ठाऽअस्माँ२ऽअवन्तुदेवाः ॥ ३३/६ ॥ पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्—ब्रह्माणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो ब्रह्मन् दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन ब्रह्मा प्रीयतां न मम ॥ ९ ॥ निर्ऋतिवरुणयोर्मध्येऽधः—ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानःशर्म्मसप्प्रथाः ॥ ३३/६ ॥ निर्ऋतिवरुणयोर्मध्येऽधोदिशि—अनन्तं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । अनन्ताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्प० ॥ भो अनन्त दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन अनन्तः प्रीयतां न मम ॥१०॥ इति दशदिक्पालबलिः ॥

---

## ॥ अथ स्थापितदेवतादीनां बलिदानम् ॥

आग्नेय्यां गणपतिबलिः ॥ ॐ गणानान्त्वा गणपतिꣳ हवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम॥आहमजानिगर्ब्भधमात्त्वमजासि गर्ब्भधम् ॥ २३/१९ ॥ ॐभूर्भुवः स्वः गणपतिं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । गणपतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्प० ॥ भो गणपते इमं बलिं गृहाण । मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु।आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव। अनेन पूजनपूर्वकबलिदानेन गणपतिः प्रीयतां न मम॥तद्दक्षिणे वसोर्धारासमन्वितसगणेशगौर्यादिमातृकाणां बलिः।ॐ समख्ये देव्याधिया सन्दक्षिणयोरुचक्षसा। माम्ऽआयुःप्प्रमोषीर्म्मोऽअहन्तवंवीरं विदेयतवदेविसन्दृशि ॥ ३३ ॥ ॐ भूर्भुवःस्वः

वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातृः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गन्धाद्युपचारैः वः अहं पूजयामि । ॐ भूर्भुवः स्वः वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातृभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपम् आसादितं बलिं समर्प० ॥ भो भो वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातरः इमं बलिं गृह्णीत। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत । आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत। अनेन पूजनपूर्वकबलिदानेन वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातरः प्रीयन्तां नमम ॥ नैर्ऋत्यां वास्तोष्पतिबलिः॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽअनमीवो भवानः । यत्वेमहेप्रतितन्नोजुषस्वशन्नो भवद्विपदे शं चतुष्पदे॥ भूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहितं वास्तुपुरुषं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि।ॐभूर्भुवः स्वः ब्रह्मादिवास्तुमण्डलदेवतासहिताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय वास्तुपुरुषाय इमं सदीपम् आसादितं बलिं समर्प० ॥ भो ब्रह्मादिवास्तुमण्डदेवतासहितवास्तुपुरुप इमं बलिं गृहाण । मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु। आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन ब्रह्मादिवास्तुमण्डलदेवतासहितवास्तुपुरुषः प्रीयतां न मम ॥ आग्नेय्यां योगिनीबलिः । ॐ योगे योगेतवस्तरंवाजेवाजेहवामहे । सखायुऽइन्द्रमूतये ॥११॥ ॐभूर्भुवः स्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिनीः साङ्गाः सपरिवाराः सायुधाः सशक्तिका एभिर्गन्धाद्युपचारैर्वः अहं पूजयामि। ॐभूर्भुवःस्वः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिताभ्यः गजाननादिचतुःषष्टियोगिनीभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपम् आसादितं बलिं समर्प०॥भो भो श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिन्यः इमं बलिं गृह्णीत। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत। आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत। अनेन पूजनपूर्वकबलिदानेन श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिन्यः प्रीयन्तां नमम ॥ वायव्यां क्षेत्रपालबलिः। ॐनहिस्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवाः॥ ११ ॥ ॐभूर्भुवः स्वः क्षेत्रपालसहितान् अजराद्येकपञ्चाशत्क्षेत्रपालदेवान् साङ्गान्सपरिवारान् सायुधान्सशक्ति-

कान् एभिर्गन्धाद्युपचारैर्वः अहं पूजयामि। ॐ भूर्भुवः स्वः क्षेत्रपालसहितेभ्योऽजराद्येकपञ्चाशत्क्षेत्रपालदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपम् आसादितं बलिं समर्प०॥ भो भो क्षेत्रपालसहिता अजराद्येकपञ्चाशत्क्षेत्रपालदेवाः इमं बलिं गृह्णीत। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत। आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदा भवत। अनेन पूजनपूर्वकबलिदानेन क्षेत्रपालसहिता अजराद्येकपञ्चाशत्क्षेत्रपालदेवाः प्रीयन्तां न मम॥ मध्यपीठे प्रधानदेवतायाः श्रीगायत्र्या बलिः॥ ॐ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतः सुरुचो वेनऽआवः॥ स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ १३॥ ॐ अम्बेऽ अम्बिकेऽम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम्॥ १६॥ ॐ भूर्भुवः स्वः ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्वितां श्रीगायत्रीपीठयन्त्रावरणदेवतासहितां भगवतीं श्रीगायत्रीदेवीं साङ्गां सपरिवारां सायुधां सशक्तिकाम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि। ॐ भूर्भुवः स्वः ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्वितायै श्रीगायत्रीपीठयन्त्रावरणदेवतासहितायै भगवत्यै श्रीगायत्रीदेव्यै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै इमं सदीपम् आसादितं बलिं समर्पयामि॥ भो भो ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्विते श्रीगायत्रीपीठयन्त्रावरणदेवतासहिते भगवति श्रीगायत्रिदेवि इमं बलिं गृहाण। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु। आयुःकर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री निर्विघ्नकर्त्री कल्याणकर्त्री वरदा भव। अनेन पूजनपूर्वकबलिदानेन सर्वतोभद्रमण्डलदेवतासमन्विता श्रीगायत्रीपीठयन्त्रावरणदेवतासहिता भगवती श्रीगायत्रीदेवी प्रीयतां न मम॥ ईशान्यां नवग्रहबलिः। ॐ ग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम्॥ तेषां विशिप्रियाणां वोहमिषमूर्जꣳ समग्रभमुपयामगृहीतोसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्॥ ९॥ ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवान्साङ्गान्सपरिवारान्सायुधान्सशक्तिकान् एभिर्गन्धाद्युपचारैः वः अहं पूजयामि। ॐ भूर्भुवः स्वः सूर्यादिनवग्रहमण्डलदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपम् आसादितं बलिं समर्प०। भो भो सूर्यादिनवग्रहमण्डलदेवाः इमं बलिं गृह्णीत। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत। आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदा भवत। अनेन पूजनपूर्वकबलिदानेन सूर्यादिनवग्रहमण्डलदेवाः प्रीयन्तां न मम॥ अथ महाक्षेत्रपालबलिः॥ एकस्मिन्वंशपात्रे यथाशक्ति सर्वं बलिं निधाय मध्ये घृतदीपं प्रज्वाल्य

मण्डपाद्बहिः बलिदानं कुर्यात् ॥ हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं भूतप्रेतपिशाचडाकिनीशाकिनीसमन्वितस्य सपरिवारस्य क्षेत्रपालस्य बलिदानं करिष्ये ॥ ततो हस्ते गन्धाक्षतपुष्पाण्यादाय बलिपात्रे क्षेत्रपालं पूजयेत् ॥ ॐनहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः॥एमेनमवृधन्नमृताऽअमर्त्यंवैश्वानरङ्क्षैत्रजित्त्यायदेवाः॥६३॥ ॐभूर्भुवःस्वः क्षेत्रपालं साङ्गं सपरिवारं सायुधं सशक्तिकं भूतप्रेतपिशाचडाकिनीशाकिनीसहितम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि।ॐभूर्भुवःस्वः भूतप्रेतपिशाचडाकिनीशाकिनीसहिताय क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं महाबलिं सम० ॥ भो क्षेत्रपाल इमं बलिं गृहाण। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु। आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव। ततः प्रार्थयेत् ॥ नमामि क्षेत्रपाल त्वां भूतप्रेतगणाधिप। पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ १ ॥ आयुरारोग्यमैश्वर्यं देहि त्वं सर्वदा मम । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः॥ २॥ सर्वदा सर्वकार्येषु क्षेत्रपालसमन्विताः॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥ ३ ॥ इति सम्प्रार्थ्य । हस्ते जलं गृहीत्वा अनेन पूजनपूर्वकबलिदानेन भूतप्रेतपिशाचडाकिनीशाकिनीसहितः महाक्षेत्रपालः प्रीयतां न मम॥ ततः पश्चादनवेक्षमाणः कश्चित् पुरुषो बलिपात्रं गृहीत्वा चतुष्पथे स्थापयेत् ॥ यजमानश्च बलिं नीत्वा गच्छतः पृष्ठभागे ॐ हिङ्काराय स्वाहा० इति मन्त्रं पठन् द्वारपर्यन्तं जलं क्षिपेत्॥ ॐ हिङ्कारायस्वाहा हिङ्कृतायस्वाहा क्रन्दतेस्वाहावक्रन्दायस्वाहा प्रोथतेस्वाहा प्रप्रोथायस्वाहा गन्धायस्वाहा घ्रातायस्वाहा निविष्टायस्वाहोपविष्टायस्वाहा सन्दितायस्वाहा वल्गतेस्वाहासीनायस्वाहा शयानायस्वाहा स्वपतेस्वाहा जाग्रतेस्वाहा कूजतेस्वाहा प्रबुद्धायस्वाहा विजृम्भमाणायस्वाहा विचृत्तायस्वाहा सᳪहानायस्वाहोपस्थितायस्वाहायनायस्वाहा प्रायणायस्वाहा ॥ ७३ ॥ ततः सपत्नीको यजमानः परावृत्य मण्डपाद्बहिः पाणिपादं प्रक्षाल्याचम्य मण्डपं प्रविशेत्॥

॥ इति दिक्पालादिस्थापितदेवतादीनां बलिदानम् ॥



## अथ वसोर्धारासमन्वितपूर्णाहुतिहोमादिकम् ।

अथ पूर्णाहुतिहोमं कुर्यात् । हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं वसोर्धारासमन्वितं पूर्णाहुतिहोमं करिष्ये ॥ इति सङ्कल्प्य । आचार्यः कश्चिद्विप्रो वा उत्थाय आज्यस्थाल्याम् अन्यदाज्यं निरुप्य आज्यस्थालीम् अग्नौ अधिश्रयेत् । ततो युगपत् स्रुक्स्रुवौ गृहीत्वा पूर्ववत् प्राञ्चौ अधोमुखौ तापयित्वा सम्मार्गकुशैः तयोः पूर्ववत् संस्कारान्विधाय अग्नेः पश्चिमदिशि निदध्यात् । तत आज्यमुद्वास्य पवित्राभ्यामुत्पूय आज्यमवेक्ष्य अपद्रव्यं निरस्य पवित्रे प्रणीतायां निदध्यात् । ततः स्रुचि मध्ये स्रुवेण चतुर्वारम् आज्यं गृहीत्वा तदुपरि रक्तसूत्रेण वेष्टितं श्रीनालिकेरं निधाय तं गन्धाक्षतपुष्पमालाहरिद्राभिरलंकृत्य तदुपरि अधोमुखं स्रुवं निधाय दक्षिणहस्तेन तां गृहीत्वा सपत्नीको यजमान उत्थाय अग्नेः पश्चिमस्यां दिशि तिष्ठन् पूर्णाहुतिं जुहुयात् ॥

ॐ समुद्रादूर्म्मिर्म्मधुमाँ२ऽउदारदुपाᳫंशुनासममृतत्त्वमानट् । घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृतस्यनाभिः ॥ ८९/१७ ॥ वयन्नामप्प्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानञ्चतुः शृङ्गोवमीद्गौरऽएतत् ॥ ९०/१७ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्द्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ९१/१७ ॥ त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ इन्द्रऽएकᳫंसूर्य्यऽएकञ्जजानवेनादेकᳫंस्वधयानिष्टतक्षुः ॥ ९२/१७ ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोवेतसोमध्यऽआसाम् ॥ ९३/१७ ॥ सम्म्यक्स्रवन्तिसरितोनधेनाऽअन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽइवक्षिपणोरीषमाणाः ॥ ९४/१७ ॥ सिन्धोरिवप्प्राध्वनेशूघनासोवातप्प्रमियः पतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनवाजीकाष्ठाभिन्दन्नूर्म्मिभिः पिन्वमानः ॥ ९५/१७ ॥ अभिप्प्रवन्तसमनेवयोषाः कल्याण्यः स्मयमानासोऽअग्निम् ॥ घृतस्यधाराः समिधोनसन्तताजुषाणोहर्य्यतिजातवेदाः ॥ ९६/१७ ॥ कन्याऽइववहतुमेतवाऽउऽअञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमः सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ ९७/१७ ॥ अब्भ्यर्षतसुष्टुतिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञंनयतदेवतानोघृतस्यधारामधुमत्पवन्ते ॥ ९८/१७ ॥ धामन्तेविश्वम्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृतस्तमश्यामधुमन्तन्तऽऊर्म्मिम् ॥ ९९/१७ ॥ पुनस्त्वादित्यारुद्रावसवः समिन्धताम्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्त्वन्तन्वंवर्द्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥ १२/१२ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानर-

मृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ [illegible] ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाऽइषमूर्जꣳशतक्रतोस्वाहा ॥ [illegible] ॥ इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवतेऽग्नये अद्भ्यश्च न मम ॥ त्यागः संस्रवप्रक्षेपः ॥ इति पूर्णाहुतिहोमः ॥

---

## अथ वसोर्द्धारां जुहुयात् ॥

ॐ सप्ततेऽअग्नेसमिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधामप्प्रियाणि ॥ सप्तहोत्राः सप्तधात्वायजन्तिसप्तयोनीरापृणस्वघृतेनस्वाहा ॥ [illegible] ॥ शुक्रज्योतिश्चचित्रज्योतिश्चसत्त्यज्योतिश्चज्योतिष्माँश्च ॥ शुक्रश्चऽऋतपाश्चात्यꣳहाः ॥ [illegible] ॥ ईदृङ्चान्यादृङ्चसदृङ्चप्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः ॥ [illegible] ॥ ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचविधर्त्ताचविधारयः ॥ [illegible] ॥ ऋतजिच्चसत्त्यजिच्चसेनजिच्चसुषेणश्च । अन्तिमित्रश्चदूरेऽअमित्रश्चगणः ॥ [illegible] ॥ ईदृक्षासऽएतादृक्षासऽऊषुणः सदृक्षासः प्रतिसदृक्षासऽएतन ॥ मितासश्चसम्मितासोनोऽअद्यसभरसोमरुतोयज्ञेऽअस्मिन् ॥ [illegible] ॥ स्वतवाँश्चप्रघासीचसान्तपनश्चगृहमेधीच ॥ क्रीडीचशाकीचोज्जेषी ॥ [illegible] ॥ इन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्विशोमरुतोनुवर्त्मानोभवन् ॥ एवमिमंयजमानन्दैवीश्चविशोमानुषीश्चानुवर्त्मानोभवन्तु ॥ [illegible] ॥ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व ॥ [illegible] ॥ घृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ [illegible] ॥

॥ ततः ॐ वाजश्चमे० इति सम्पूर्णमध्यायं पठेत् ॥

१ ॐ वाजश्चमे० ॥ [illegible] ॥ २ प्राणश्चमे० । ३ ओजश्चमे० । ४ ज्यैष्ठ्यञ्चमे० । ५ सत्त्यञ्चमे० । ६ ऋतञ्चमे० । ७ यन्ताचमे० । ८ शञ्चमे० । ९ ऊर्क्चमे० । १० रयिश्चमे० । ११ वित्तञ्चमे० । १२ व्रीहयश्चमे० । १३ अश्माचमे० । १४ अग्निश्चमऽआपश्चमे० । १५ वसुचमे० । १६ अग्निश्चमऽइन्द्रश्चमे० । १७ मित्रश्चमऽइन्द्रश्चमे० । १८ पृथिवीचमऽइन्द्रश्चमे० । १९ अꣳशुश्चमे० । २० आग्रयणश्चमे० । २१ स्रुचश्चमे० । २२ अग्निश्चमे० । २३ व्रतञ्चमऽऋतवश्चमे० । २४ एकाचमे० । २५ चतस्रश्चमे० । २६ त्र्यविश्चमे० । २७ पष्ठवाट्चमे० २८ वाजायस्वाहा० २९ आयुर्यज्ञेनकल्प्प० प्रजाऽअभूम वेट्स्वाहा ॥ [illegible] ॥

---

१ पूर्णाहुत्यनन्तरं वसोर्द्धाराहोमे 'सप्त ते अग्ने' इति दशमंत्रात्मकानुवाकोऽभिसूक्तं विष्णु सूक्तं रुद्रसूक्तम् इन्दुसूक्तम् इति पठनीयानि ॥ २ अयमध्यायो ग्रन्थान्ते परिशिष्टप्रकरणे रुद्राष्टाध्याय्यां सप्तमो द्रष्टव्यः ॥

ततः अग्निसूक्तम्–ॐसमास्त्वाग्नऽऋतवोवर्द्धयन्तुसंवत्सराऽऋषयोयानिसत्त्या ॥ सन्दिव्येनदीदिहिरोचनेनविश्वाऽआभाहिप्रदिशश्चतस्रः ॥ १ ॥ सञ्चेद्ध्यस्वाग्नेप्रचबोधयैनमुच्चतिष्ठमहतेसौभगाय ॥ माचरिषदुपसत्तातेऽअग्नेब्रह्माणस्तेयशसःसन्तुमान्ये ॥ २ ॥ त्वामग्नेवृणतेब्राह्मणाऽइमेशिवोऽअग्नेसंवरणेभवानः ॥ सपत्नहानोऽअभिमातिजिच्चस्वेगयेजागृह्यप्रयुच्छन् ॥ ३ ॥ इहैवाग्नेऽअधिधारयारयिम्मात्त्वानिक्रन्पूर्वचितोनिकारिणः ॥ क्षत्रमग्नेसुयममस्तुतुब्भ्यमुपसत्तावर्द्धतान्तेऽअनिष्टृतः ॥ ४ ॥ क्षत्रेणाग्नेस्वायुःसꣳरभस्वमित्रेणाग्नेमित्रधेयेयतस्व ॥ सजातानाम्मद्ध्यमस्थाऽएधिराज्ञामग्नेविहव्योदीदिहीह ॥ ५ ॥ अतिनिहोऽअतिस्रिधोत्त्यचित्तिमत्यरातिमग्ने ॥ विश्वाह्यग्नेदुरितासहस्वाथास्मभ्यꣳसहवीराꣳरयिन्दाः ॥ ६ ॥ अनाधृष्योजातवेदाऽअनिष्टृतोविराडग्नेक्षत्रभृद्दीदिहीह ॥ विश्वाऽआशाःप्रमुञ्चन्मानुषीर्भियःशिवेभिरद्यपरिपाहिनोवृधे ॥ ७ ॥ बृहस्पतेसवितर्बोधयैनꣳसꣳशितञ्चित्सन्तराꣳसꣳशिशाधि ॥ वर्द्धयैनम्महतेसौभगायविश्वऽएनमनुमदन्तुदेवाः ॥ ८ ॥ अमुत्रभूयादधयद्यमस्यबृहस्पतेऽअभिशस्तेरमुञ्चः ॥ प्रत्यौहतामश्विनामृत्युमस्माद्देवानामग्नेभिषजाशचीभिः ॥ ९ ॥

विष्णुसूक्तम्–ॐविष्णोर्नुकंवीर्य्याणिप्रवोचंयःपार्थिवानिविममेरजाꣳसि ॥ योऽअस्कभायदुत्तरꣳसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्त्वा ॥ १ ॥ दिवोवाविष्णऽउतवापृथिव्यामहोवाविष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्त्वा ॥ २ ॥ प्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः॥यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ॥ ३ ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि॥ वैष्णवमसिविष्णवेत्त्वा॥ ४ ॥इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम्॥समूढमस्यपाꣳसुरेस्वाहा ॥ ५ ॥त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः॥अतोधर्माणि धारयन्॥ ६ ॥

॥ ततः ॐनमस्तेरुद्र० इति सम्पूर्णं शतरुद्राध्यायं पठेत् ॥

१ ॐनमस्तेरुद्र० ॥ १ ॥ २ यातेरुद्रशिवा० । ३ यामिषुङ्गिरिशन्त० । ४ शिवेनवचसा० । ५ अद्ध्यवोचदधिवक्ता० । ६ असौयस्ताम्रो० । ७ असौयोवसर्प्पति० । ८ नमोस्तुनी० । ९ प्रमुञ्चधन्व० । १० विज्यन्धनुः । ११ यातेहेतिर्मी० । १२ परितेधन्वनो० । १३ अवतत्य० । १४ नमस्तऽआ० । १५ मानोमहान्त० । १६ मानस्तोके० । १७ नमोहिरण्यबाहवे० । १८ नमोबभ्लुशाय० ।

१ अयमध्यायो ग्रन्थान्ते परिशिष्टप्रकरणे रुद्राध्यायाख्यो पञ्चमो द्रष्टव्यः ॥

१९ नमोरोहिताय० । २० नमः कृत्स्नायतया० । २१ नमो घर्षते० । २२ नमऽ उष्णीषिणे० । २३ नमोविसृजद्भ्यो० ।२४ नमः सभाभ्यः ।२५ नमोगणेभ्यो० । २६ नमःसेनाभ्यः० । २७ नमस्तक्षभ्यो० । २८ नमःश्वभ्यः० । २९ नमः कपर्दिने० । ३० नमोह्रस्वाय० । ३१ नमऽआशवे० । ३२ नमोज्येष्ठाय० । ३३नमः सोभ्याय० ।३४नमो वन्याय ।३५नमोविल्मिने०।३६ नमोधृष्णवे० । ३७नमः स्रुत्याय० । ३८ नमःकूप्याय० । ३९ नमोवास्याय० । ४० नमः शङ्गवे० । ४१ नमः शम्भवाय०.। ४२ नमःपार्याय० । ४३ नमः सिकत्याय० । ४४नमोव्रज्याय० । ४५ नमःशुष्क्याय० । ४६ नमः पर्णाय० । ४७ द्रापेऽअन्धसस्पते० । ४८ इमारुद्राय० । ४९ यातेरुद्रशिवातनूः० । ५० परिनोरुद्रस्य० । ५१ मीढुष्टम० । ५२ विकिरिद्र० । ५३ सहस्राणि० । ५४ असङ्ख्याता० । ५५ अस्मिन्महत्य० । ५६ नीलग्रीवाःशितिकण्ठादिवं० । ५७ नीलग्रीवाःशितिकण्ठाः शर्वा० । ५८ येवृक्षेषु० । ५९ येभूताना० । ६० येपथाम्पथि० । ६१ येतीर्थानि० । ६२ येन्नेषु० । ६३ यऽएतावन्तश्च० । ६४ नमोस्तु रुद्रेभ्योयेदिवि० । ६५ नमोस्तुरुद्रेभ्योयेन्तरिक्षे० । ६६नमोस्तुरुद्रेभ्योयेपृथिव्यां०।प्राञ्चम्भेदद्भमः ॥ १६६ ॥

इन्दुसूक्तम्—ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ १६७ ॥ सन्तेपयाᳩसिसमुयन्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः ॥ आप्यायमानोऽअमृतायसोमदिविश्रवाᳩस्युत्तमानि धिष्व ॥ १६८ ॥ आप्यायस्वमदिन्तमसोमविश्वेभिरᳪशुभिः ॥ भवानःसुप्रथस्तमःसखावृधे ॥ १६९ ॥ ॐयत्कर्म्मणात्यरीरिचंयद्वान्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्स्विष्टᳪसुहुतं करोतु स्वाहा ॥ नात्र संस्रवप्रक्षेपः । किन्तु यजमानो वदेत् । इदमग्नये वाजादिभ्योऽग्नये विष्णवे रुद्राय सोमाय वैश्वानराय च न मम ॥ एवं वसोर्धारां हुत्वा यजमानः करसम्पुटं कृत्वा भगवत्याः श्रीगायत्रीदेव्याः स्तुतिं कुर्यात् ॥ नमस्ते देवि गायत्रि सावित्रि त्रिपदेऽक्षरे । अजरे अमरे मातस्त्राहि मां भवसागरात् ॥ १ ॥ नमस्ते सूर्यसंकाशे सूर्यसावित्रिकेऽमले । ब्रह्मविद्ये महाविद्ये वेदमातर्नमोऽस्तु ते॥२॥अनन्तकोटिब्रह्माण्डव्यापिनि ब्रह्मचारिणि ॥ नित्यानन्दे महामाये परेशानि नमोऽस्तु ते ॥ ३ ॥ त्वं ब्रह्मा त्वं हरिः साक्षाद्रुद्रस्त्वमिन्द्रदेवता । मित्रस्त्वं वरुणस्त्वं च त्वमग्निरश्विनौ भगः ॥ ४ ॥ पूषाऽर्यमा मरुत्वांश्च ऋषयोऽपि मुनीश्वराः । यक्षाश्च पितरो नागा गन्धर्वाप्सरसां गणाः ॥ ५ ॥ रक्षोभूतपिशाचाश्च त्वमेव परमेश्वरि । ऋग्यजुःसामविद्याश्च ह्यथर्वाङ्गिरसानि च ॥ ६ ॥ त्वमेव सर्वशास्त्राणि त्वमेव सर्वसंहिताः । पुराणानि च तन्त्राणि महागममतानि च ॥ ७ ॥ त्वमेव पञ्च भूतानि तत्त्वानि

जगदीश्वरि । ब्राह्मी सरस्वती संध्या तुरीया त्वं महेश्वरी ॥ ८ ॥ तत्सद्ब्रह्मस्वरूपा त्वं किंचित्सदसदात्मिका । परात्परेशि गायत्रि नमस्ते मातरम्बिके ॥ ९ ॥ चन्द्रे कलात्मिके नित्ये कालरात्रि स्वधे स्वरे । स्वाहाकारेऽग्निवक्त्रे त्वां नमामि जगदीश्वरि ॥ १० ॥ नमो नमस्ते गायत्रि सावित्रि त्वां नमाम्यहम् । सरस्वति नमस्तुभ्यं तुरीये ब्रह्मरूपिणि ॥११॥ अपराधसहस्राणि त्वसत्कर्मशतानि च । मत्तो जातानि देवेशि त्वं क्षमस्व दिने दिने ॥१२॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ १३ ॥ एवं भगवतीं श्रीगायत्रीदेवीं स्तुत्वा ततः स्वासने उपविश्य भस्मधारणं कुर्यात् ॥ ॐ त्र्यायुषं० ॥६९॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम् । तेज आयुष्यमारोग्यं देहि मे हव्यवाहन । भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च । एवं भस्मधारणं कृत्वा संस्रवप्राशनम् । कुशपवित्राभ्यां मार्जनम् । अग्नौ पवित्रप्रतिपत्तिः । ततो ब्रह्मणे पूर्णपात्रदानं प्रणीतोदकेन कुर्यात् । यजमानः प्रणीतोदकं गृहीत्वा सङ्कल्पं कुर्यात् । मया कृतस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं ब्रह्मन् इदं पूर्णपात्रं सदक्षिणाकं तुभ्यमहं संप्रददे । इति सङ्कल्पजलं सहिरण्यं पूर्णपात्रञ्च "प्रतिगृह्यताम्" इति वदन् ब्रह्मणे दद्यात् । ब्रह्मा "प्रतिगृह्णामि" इति वदन् 'ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु' इति गृह्णीयात् ॥ ततः प्रणीताविमोकः[1] । तेन जलेन यजमानशिरसि मार्जनम् । ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ इति यजमानशिरसि मार्जयेत् ॥ ततो यजमानो हस्ते जलं गृहीत्वा (पूर्वोक्तजपांशीभूतमार्जनदशांशेन) ब्राह्मणभोजनसङ्कल्पं कुर्यात् । तद्यथा । मया ब्राह्मणद्वाराचरितस्य सप्रणवव्याहृतिसहितस्य चतुर्विंशतिवर्णात्मक श्रीगायत्रीमन्त्रस्यामुकलक्षसङ्ख्याजपानुष्ठानकर्मणः साद्गुण्यार्थं जपेन सह प्रारब्धस्य पञ्चाङ्गसहितस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः परिपूर्णतासिद्ध्ये मार्जनदशांशेन सुवासिनीकुमारिकाबटुकसहितम् अमुकसङ्ख्याकं ब्राह्मणभोजनं कारयिष्ये । तेन भगवती श्रीगायत्रीदेवी प्रीयतां न मम ॥

॥ इति वसोर्द्धारासमन्वितपूर्णाहुतिहोमादिकम् ॥

## अथ श्रेयःसंपादनादिकम् ।

तत आचार्यः ऋत्विग्भिः सह सपत्नीकाय यजमानाय श्रेयोदानं कुर्यात् ॥ आचार्यः उदङ्मुखो भूत्वा वृतैः सर्वब्राह्मणैः सह यजमानहस्ते 'ॐ शिवा

१ अग्नेः पश्चात्प्रणीताविमोक इति शिष्टाः ।

आपः सन्तु' इति जलं दद्यात् । 'ॐ सौमनस्यमस्तु' इति पुष्पाणि दद्यात् । 'ॐगन्धाः पान्तु' इति गन्धं दद्यात् । 'ॐअक्षताः पान्तु' इत्यक्षतान् दद्यात्। तत आचारात् "यत्पापं रोगमशुभम् अकल्याणं तद्दूरे प्रतिहतमस्तु" इति पठन् यजमानहस्तस्योपरि जलं भ्रामयित्वा त्रिवारम् अधः क्षिपेत् ॥ तत आचार्यः स्वकीयहस्ते गन्धाक्षतपुष्पफलसहितं जलं गृहीत्वा वदेत् । "भवन्नियोगेन मया अस्मिन् सप्रणवव्याहृतिसहितस्य चतुर्विंशतिवर्णात्मकगायत्रीमन्त्रस्य ब्राह्मणद्वारा कृतस्य अमुकलक्षजपानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तद्दशांशेन प्रारब्धे सग्रहमख-श्रीगायत्रीपुरश्चरणकर्मणि यत्कृतम् आचार्यत्वं तथा च एभिर्ब्राह्मणैः सह यत्कृतं ब्रह्मत्वं गाणपत्यं सादस्यं तथा च यः कृतो जपः यः कृतो होमः यत्कृतं तर्पणं मार्जनं ब्राह्मणभोजनञ्च इत्येतत्कर्मभ्यः यदुत्पन्नं श्रेयः तत्तुभ्यमहं सम्प्रददे। तेन श्रेयसा त्वं श्रेयस्वी भव॥" इति वदन्यजमानहस्ते जलसहितं फलं दद्यात्। सजलं फलं गृहीत्वा 'भवामि' इति यजमानो वदेत् । यजमानस्तत्फलं देव्यै समर्पयेत् पत्न्यै वा दद्यात् ॥ ततो यजमानो वरणक्रमेणाचार्यप्रभृतिभ्य ऋत्विग्भ्यो दक्षिणाप्रदानं कुर्यात्॥तत्रादौ सङ्कल्पमाचरेत्। देशकालौ सङ्कीर्त्य मया आचरितस्य सग्रहमखश्रीगायत्रीपुरश्चरण-कर्मणः साङ्गतासिद्ध्यर्थं वृतेभ्य आचार्यादिसमस्तर्त्विग्भ्यः यथाशक्ति दक्षिणाप्रदानं करिष्ये । इति सङ्कल्प्य दक्षिणां दद्यात्॥ तत्रादौ गोप्रदानम् ।सङ्कल्पं कृत्वा तच्च गोनिष्क्रयद्रव्यं आचार्याय दद्यात्। यथा—तद्द्रव्यं गृहीत्वा । मया कृतस्य सग्रह-मखगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् इमां गोनिष्क्रयीभूतां दक्षिणां तुभ्य-महं सम्प्रददे इति आचार्याय दद्यात्॥ आचार्यः 'ॐदेवस्यत्वा०' इति गृह्णीयात्। 'ॐस्वस्ति' इति च वदेत्॥तत आचार्याय दक्षिणादानम्। गन्धाक्षतपुष्पैराचार्यं स-म्पूज्य । यथाशक्ति वस्त्रकुण्डलकंकणमुद्रिकादिसहितां सुवर्णदक्षिणां रजतद्रव्यं वा गृहीत्वा। मया कृतस्य सग्रहमखगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थम् इमां, यथाशक्ति वस्त्रोपवस्त्रादिसहितां सुवर्णदक्षिणां रजतद्रव्यं वा तुभ्यमहं सम्प्रददे ॥ इति वदन् आचार्याय दक्षिणां दद्यात्। एवं ब्रह्मणे गणपतये सदसस्पतये ऋत्विग्भ्य द्वारपालादिसर्वेभ्यो ब्राह्मणेभ्यो वरणक्रमेण दक्षिणां दद्यात् ॥ ततः सदक्षिणाकं सुवर्णदानं भूमिदानं तिलदानञ्च दद्यात् । हस्ते जलमादाय इदं सुवर्णदानम् अग्निदैवतम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । दानसाङ्गतासिद्ध्यर्थम् इमां दक्षिणाञ्च तुभ्यमहं सम्प्रददे॥ भूमिदानम् ॥ इमां भूमिं वा तन्निष्क्रयद्र-व्यम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । दानसाङ्गतासिद्ध्यर्थम् इमां दक्षिणाञ्च तुभ्यमहं सम्प्रददे॥ तिलपात्रदानम् ॥ इदं तिलपात्रं तिलपूरितं प्रजा-

१ स्वर्णगोभूतिलान् दद्यात् सर्वदोषापनुत्तये ।

पतिदैवतम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ॥ दानसाङ्गतासिद्ध्यर्थम् इमां दक्षिणाञ्च तुभ्यमहं संप्रददे ॥ इति श्रेयसंपादनादिकम् ॥

## ॥ अथ यज्ञान्तो महाभिषेकः ॥

एवं ब्राह्मणेभ्यो दक्षिणाप्रदानं यथाशक्ति गोप्रभृतिदानानि कृत्वा सपत्नीको यजमानोऽभिषेकार्थं नूतने वस्त्रोपवस्त्रे धृत्वा यज्ञमण्डपे वायव्यां क्षेत्रपालस्य सन्निधौ निर्मिते वारुणमण्डलपीठे ( भद्रासने ) स्ववामभागे पत्नीञ्चोपवेश्य स्वकीयपुत्रपौत्रादीनपि यथासंभवं तत्रोपवेश्य स्वयं पत्न्या दक्षिणभागे पूर्वाभिमुख उपविश्याचार्यादिसमस्तर्त्विजः प्रार्थयेत् ॥ तद्यथा । भो ब्राह्मणाः! भवन्तः कृपां कृत्वा युष्मत्सहायेन मयाऽऽचरितस्य सब्रह्मकश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं तथा च कृतस्य कर्मणः संपूर्णफलप्राप्त्यर्थञ्च सपरिवारं मां महाभिषेकेन पवित्रीकुर्वन्तु इति भवतः प्रार्थये॥ इत्युक्त्वा यथाशक्ति हिरण्यदानेन च तान्संतोषयेत् ॥ ते चाचार्यादयः सर्वे ऋत्विजः तस्याभ्यर्थनां यथाशक्ति प्रदत्तां दक्षिणाञ्च स्वीकृत्य सर्वेभ्यः कलशेभ्यः मुख्यदेवताकलशाद्वा एकस्मिन्प्रशस्ते पात्रे जलमानीयोदङ्मुखास्तिष्ठन्तः वैदिकैर्मन्त्रैः पौराणिकैर्मन्त्रैश्च सकुटुम्बं तमभिषिञ्चेयुः ॥

तत्रादौ आचार्यः पञ्चवाक्यैः पुण्याहवाचनं कारयेत् ॥ यजमानो वदेत्—भो ब्राह्मणाः! मह्यं सकुटुम्बिने महाजनान् नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्याभिषेकस्नानकर्मणः पुण्याहं भवन्तो ब्रुवन्तु। अस्तु पुण्याहम् । एवं त्रिः ॥ भो ब्राह्मणाः० । अस्याभिषेकस्नानकर्मणः कल्याणं भवन्तो ब्रुवन्तु। अस्तु कल्याणम्। एवं त्रिः॥ भो ब्राह्मणाः० । अस्याभिषेकस्नानकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु। कर्म ऋध्यताम् । एवं त्रिः ॥ भो ब्राह्मणाः० । असै अभिषेकस्नानकर्मणे स्वस्ति भवन्तो ब्रुवन्तु। आयुष्मते स्वस्ति। एवं त्रिः॥ भो ब्राह्मणाः०। अस्याभिषेकस्नानकर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु। अस्तु श्रीः। एवं त्रिः॥ ततोऽभिषेकं कुर्युः॥

## ॥ अथाभिषेकमंत्राः ॥

ॐ आपोहिष्ठा०॥ ॐ योवः॑ शिवत॑मो॰ ॥ तस्मा॒ऽअर॑ङ्ग॰ ॥ ११-१६/३६ ॥ त्रातार॒मिन्द्र॑० ॥ २०/० ॥ इ॒मम्मे॑वरुणश्रुधी॰ ॥ २१/१ ॥ तत्त्वा॑यामि॒० ॥ २१/२ ॥ त्वन्नो॑ऽअग्ने॒वरु॑णस्य॰ ॥ २१/३ ॥ सत्वन्नो॑ऽअग्नेवमो॒भ॑वो॰ ॥ २१/४ ॥ उदु॑त्त॒मंव॑रुण॒पाश॑॰ ॥ १२/१२ ॥ वरु॑णस्यो॒त्तम्भ॑॰ ॥ ४/३६ ॥ भग॒प्रणे॑त॒र्भग॒सत्य॑राधो॒ भग॒मान्धिय॒मुद॑वाद॒दन्नः ॥ भग॒प्रनो॑जनय॒गोभि॒रश्वै॒र्भग॒प्रनृ॒भिर्नृ॒वन्त॑ᳫँस्याम ॥ ३६/३४ ॥ इ॒दमा॑प॒ᳫँप्रव॑हतावद्य॒ञ्चमलं॑चयत् ॥ यच्चा॑भिदु॒द्रोहानृ॑तं॒यच्च॑शे॒पेऽअ॒भीरु॑णम् ॥ आपो॑मा-

तस्मादेनसः पवमानश्च मुञ्चतु ॥ १९ ॥ पुनन्तुमापितरः सोम्म्यासः पुनन्तुमापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेण शतायुषा ॥ पुनन्तुमापितामहाः पुनन्तु-प्रपितामहाः । पवित्रेण शतायुषाविश्वमायुर्व्यश्नवै ॥ ३७ ॥ अग्नऽआयूंषि पवसऽआसुवोर्जमिषञ्चनः ॥ आरेबाधस्व दुच्छुनाम् ॥ ३८ ॥ पुनन्तुमादेवज-नाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानि जातवेदः पुनीहिमा ॥ ३९ ॥ पवि-त्रेण पुनीहिमा शुक्रेणदेवदीद्यत् ॥ अग्ने क्रत्वाक्रतूँ२रनु ॥ ४० ॥ यत्ते पवित्र-मर्चिष्यग्ने विततमन्तरा ॥ ब्रह्म तेन पुनातु मा ॥ ४१ ॥ पवमानः सोऽअ-द्यनः पवित्रेण विचर्षणिः ॥ यः पोता स पुनातु मा ॥ ४२ ॥ उभाभ्यान्देव सवितः पवित्रेण सवेनच ॥ माम्पुनीहि विश्वतः ॥ ४३ ॥ वैश्वदेवी पुनती देव्यागाद्यस्या-मिमा बह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तः सधमादेषु वयꣳस्यामपतयोरयीणाम् ॥ ४४ ॥ आप्यायस्वसमेतु ते विश्वतः सोमवृष्ण्यम् ॥ भवावाजस्य सङ्गथे ॥ १९२ ॥ पावकानस्सरस्वती० ॥ ३४ ॥ चित्पतिर्म्मापुनातु० ॥ ४ ॥ शिरोमेश्रीर्य्यशोमुखन्त्वि-षिः केशाश्चश्मश्रूणि ॥ राजामेप्राणोऽअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ २० ॥ जिह्वामेभद्रं वाङ्महोमनोमन्युःस्वराड् भामः ॥ मोदाः प्रमोदाऽअङ्गुलीरङ्गानिमि-त्रम्मेसहः ॥ २० ॥ बाहूमेबलमिन्द्रियꣳ हस्तौ मे कर्म्म वीर्य्यम् ॥ आत्मा क्षत्रमुरो मम ॥ २० ॥ पृष्टीर्म्मेराष्ट्रमुदरमꣳसौग्रीवाश्चश्रोणी ॥ ऊरूऽअरत्नीजानुनी विशो मेङ्गानिसर्वतः ॥ २० ॥ नाभिर्मे चित्तं विज्ञानम्पायुर्मेपचितिर्भसत् ॥ आनन्द-नन्दावाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजा प्रतिष्ठितः ॥ २० ॥ पयः पृथि० ॥ १८ ॥ देवस्यत्वा सवितुः प्रसवेश्विनो० ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्येनाभिषिञ्चाम्यसौ ॥ ९ ॥ देवस्यत्वा० ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ १८ ॥ देवस्यत्वा० ॥ अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ २० ॥ सोमस्य त्वाद्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसासूर्य्यस्यवर्चसेन्द्रस्येन्द्रियेण ॥ क्षत्रा-णाङ्क्षत्रपतिरेद्ध्यति, दिद्युत्पाहि ॥ १० ॥ विश्वानिदेव० ॥ ३० ॥ धामच्छदग्नि० ॥ ९८ ॥ त्वँय्यविष्ठ० ॥ ९८ ॥ अन्नपते० ॥ ११ ॥ पालाशं भवति । तेन ब्राह्मणो-भिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥ औदुंबरं भवति ॥ तेन स्वोभिषिञ्चत्यन्नं वाऽऊर्गुदुंबरऽऊर्ग्वैस्वं यावद्वैपुरुषस्यस्वंभवति नैव तावदशना-यतितेनोर्क्स्वंतस्मादौदुंबरेण स्वोभिषिञ्चति ॥ नैय्यग्रोधपादं भवति । तेनमित्र्यो राजन्योभिषिञ्चति पद्भिर्वैन्यग्रोधः प्रतिष्ठितोमित्रेणवैराजन्यः प्रतिष्ठितस्तस्मान्नै-

न्यग्रोधपादेन मिश्रो राजन्योऽभिषिञ्चति ॥ आश्वत्थं भवति । तेन वैश्योऽभिषिञ्चति यद्देवादोश्वत्थे तिष्ठतऽइन्द्रोमरुतऽउपामंत्रयते तस्मादाश्वत्थेन वैश्योभिषिञ्चति ॥ यद्देव कल्पाञ्जुहोति । प्राणावै कल्पाऽअमृतमुवैप्राणाऽअमृतेनैवैनमेतदभिषिञ्चति ॥ सर्वेषां वाऽएषवेदानाᳯ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाᳬरसेनाभिषिञ्चति ॥ पौराणाः—सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥१॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते। आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा॥३॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥४॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५ ॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥६॥ ऋषयो मुनयो गावो देवमातर एव च। देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः॥७॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च। औषधानि च रत्नानि कालस्यावयवाश्च ये॥८॥ सरितः सागराः शैलास्तीर्थानि जलदानदाः। ब्रह्मा विष्णुश्च रुद्रश्च मुनयः सकला ग्रहाः॥ ९ ॥ सौभाग्यं ते प्रयच्छन्तु वेदमन्त्राश्च कल्पकाः॥ ब्रह्माणी चैव गायत्री सावित्री श्रीरुमा सती ॥१०॥ अरुन्धत्यनसूया च तव सन्तु फलप्रदाः। तीर्थानि सरितः पुण्याः सरांसि पुष्कराणि च॥११॥ अचलाश्च चलाश्चैव तव स्वस्तिकराः सदा॥ वेदव्यासश्च वाल्मीकी रामश्चापि पराशरः॥१२॥ देवलः पर्वतश्चैव दुर्वासा भार्गवस्तथा॥ याज्ञवल्क्यश्च जाबालिर्जमदग्निः शुचिश्रवाः॥१३॥ विश्वामित्रः स्थूलशिराश्च्यवनोऽत्रिर्विदूरथः। एकतश्च द्वितश्चैव त्रितो गौतमगालवौ॥ १४ ॥ शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः॥ कात्यायनश्च कण्वश्च वालखिल्यास्तथैव च ॥ १५॥ पृथुर्दिलीपो भरतो मान्धाता च पुरूरवाः। अम्बरीषः ककुत्स्थश्च मुचकुन्दोऽथ भूभृतः ॥ १६ ॥ श्वेतश्च शृङ्गवान् मेरुर्विन्ध्याद्रिर्गन्धमादनः। माल्यवान्पारियात्रश्च सर्व एव महीधराः॥१७॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषं तथा ॥ १८ ॥ छन्दः शास्त्राणि सर्वाणि पुराणैः सकलैः सह। गायत्री पापशमनी दुर्गादेवी महाशिवः॥१९॥ स्थानानि च समस्तानि पुण्यान्यायतनानि च। लवणः क्षीरतोयश्च घृतमण्डोदकस्तथा॥ २० ॥ दधिमण्डः सुरोदश्च इक्षुः स्वादूदकस्तथा। पुष्करश्च प्रयागश्च प्रभासं नैमिषं तथा ॥ २१ ॥ गयाशिरो ब्रह्मशिरस्तथैवोत्तरमानसम्। गङ्गाद्वारं कुशावर्तं बिल्वकं नीलपर्वतः ॥ २२ ॥ वाराहं भृगुतुङ्गश्च शालिग्रामसरस्तथा। शूर्पारकं पौण्ड-

रीकं गङ्गासागरसङ्गमः ॥ २३ ॥ धर्मारण्यं फल्गुतीर्थं विमुक्तं मोक्षदं तथा । गङ्गा सरस्वती पुण्या सरयू गण्डकी तथा ॥ २४ ॥ कौशिकी यमुना क्षिप्रा चन्द्रभागा च गोमती । मन्दाकिनी दशार्णा च तामसी च कुमुद्वती ॥ २५ ॥ रेवा वैतरणी भीमा कृष्णा वेण्या मही तथा । गोदावरी भीमरथी गौतमी चाश्वनद्यपि ॥ २६ ॥ तुङ्गभद्रा ताम्रपर्णी कावेरी नेत्रवल्यपि । नन्दा चाऽलकनन्दा च करतोया च पिप्पला ॥२७॥ सर्वपापशमन्यश्च सर्वलोकस्य मातरः । स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु सर्वदा॥२८॥भूराद्याः सप्तलोकाश्च पातालानि चतुर्युगम् । ब्राह्मादिसप्तकल्पाश्च मनवश्च चतुर्दश ॥ २९ ॥ संवत्सराश्च ऋतवो मासपक्षदिनानि च। एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥३०॥ सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते॥३१॥भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः॥३२॥यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि।ललाटे कर्णयोरक्ष्णोरापो निघ्नन्तु ते सदा ॥ ३३ ॥ शान्तिः शान्तिः सुशान्तिर्भवतु । अमृताभिषेकोऽस्तु ॥ यजमानो हस्ते जलं गृहीत्वा । अभिषेककर्तृकेभ्यो ब्राह्मणेभ्यो यथोत्साहं दक्षिणां दास्ये तेन भगवती श्रीगायत्री देवी प्रीयताम्॥

॥ इति यज्ञान्तो महाभिषेकः ॥

---

## ॥ अथ अवभृथस्नानविधिः ॥

यजमानस्य तीर्थे गत्वा अवभृथस्नानं कर्तुम् इच्छा चेत् प्रधानदेवताकलशं गायत्रीयन्त्रं कुण्डाद् भस्म मृद्वटम् पूजार्थं पूजासामग्रीं तीर्थजले होमार्थं स्रुवं चणकांश्च गृहीत्वा आचार्यादिसमस्तर्त्विग्भिः परिवृतः स्वकीयस्त्रीपुत्रपौत्रादिपरिवारजनैः सह मङ्गलवाद्यघोषपुरःसरं यजमानो जलाशयं गच्छेत् ॥ ततोऽर्धमार्गे गत्वा क्षेत्रपालाय बलिदानं दद्यात्॥ततस्तीर्थसमीपमागत्य तीर्थजलेन तत्समीपवर्तिनीं भूमिं "ॐआपोहिष्ठेति"त्रिभिर्मन्त्रैः सम्प्रोक्ष्य सपत्नीकः स्वयं तीर्थाभिमुखः उदङ्मुखः पूर्वाभिमुखो वा तिष्ठेत् ॥ तत आचमनं प्राणायामञ्च कृत्वा हस्ते जलं गृहीत्वा। मया कृतस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः संपूर्णफलप्राप्त्यर्थं पुत्रपौत्रादिपरिवारजनैः ज्ञातिपौरवासिभिश्च परिवृतः अस्मिन्तीर्थे अवभृथस्नानमहं करिष्ये इति सङ्कल्पं कुर्यात् । तत आचार्यो यथावकाशं गणपतिपूजनं स्वस्तिपुण्याहवाचनञ्च कारयेत् । ततः स्वसमीपे विरचितस्याष्टदलस्य मध्ये एकं कलशं निधाय तस्य पुण्याहवाचनो-

---

१ अयं विधिः श्रौतातिदेशीयः स्मार्तो ज्ञेयः॥ श्रौतावभृयस्नानकर्मणोऽतिदेशमादाय स्मार्तसङ्कलितोऽयं विधिः।

२ अत्र पुण्याहवाचने ऊहः । मया कृतस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः सम्पूर्णफलप्राप्त्यर्थं अस्मिन्तीर्थे करिष्यमाणावभृथस्नानकर्मणः पुण्याहं भवन्तो ब्रुवन्तु । एवं कल्याणम् । ऋद्धिम् । स्वस्ति । श्रीरस्तु । इति वाच्यम्॥

क्तविधिना स्थापनं कुर्यात् । ततो यजमानस्तत्र कलशे "ॐतत्त्वायामि" इति मंत्रेण च वरुणमावाह्य मनोजूतिरिति प्रतिष्ठाप्य प्रार्थयेत् ॥ जलाधिप समागच्छ परिवारसमन्वितः । अस्मिन्कुम्भे करिष्यामि यावत्पूजां स्थिरो भव ॥ इति सम्प्रार्थ्य । सर्वोपचारार्थे गन्धाक्षतपुष्पैश्च सम्पूज्य तत्राष्टदलस्य पूर्वादितः क्रमेण॥ ॐमत्स्यै नमः मत्सीम् आ० स्था० ॥ १ ॥ ॐ कूर्म्यै नमः कूर्मीम् आ० स्था० ॥ २ ॥ ॐ वाराह्यै नमः वाराहीम् आ० स्था० ॥ ३ ॥ ॐ माण्डूक्यै नमः माण्डूकीम् आ० स्था० ॥ ४ ॥ ॐमकर्यै नमः मकरीम् आ० स्था० ॥ ५ ॥ ॐ ग्राहक्यै नमः ग्राहकीम् आ० स्था० ॥ ६ ॥ ॐ क्रौञ्चिक्यै नमः क्रौञ्चिकीम् आ० स्था० ॥ ७ ॥ एवं जलमातृः अक्षतैः संस्थाप्य ॥ "ॐ मनोजूतिरि"ति प्रतिष्ठाप्य च ताः ॐमत्स्यादिमातृभ्यो नमः इति यथालब्धोपचारैः आवाहनादिषोडशोपचारान्तं पूजयेत् ॥ ततो यजमानो जलाशयं गत्वा तीर्थमपि "ॐतत्त्वायामि" इति मंत्रेण आवाहनादिषोडशोपचारैः सम्पूज्य तस्मिन्स्थितानां मत्स्यादिजीवानां संतोषार्थं तत्र चणकादींश्च निक्षिप्य तीर्थस्थितानां गङ्गादिदेवतानां प्रीतये च पुरुषसूक्तेन दुग्धेनाभिषेकं कुर्यात् ॥ ततस्तीर्थजले आज्यस्य स्रुवेण द्वादशाहुतीर्दद्यात् ॥ ॐ अद्भ्यः स्वाहा । इदमद्भ्यो न मम ॥ १ ॥ ॐवार्भ्यः स्वाहा । इदं वार्भ्यो न मम ॥ २ ॥ ॐ उदकाय स्वाहा । इदम् उदकाय न मम ॥ ३ ॥ ॐतिष्ठन्तीभ्यः स्वाहा । इदं तिष्ठन्तीभ्यो न मम ॥ ४ ॥ ॐस्रवन्तीभ्यः स्वाहा । इदं स्रवन्तीभ्यो न मम ॥ ५ ॥ ॐ स्यन्दमानाभ्यः स्वाहा । इदं स्यन्दमानाभ्यो न मम ॥ ६ ॥ ॐ कूप्याभ्यः स्वाहा ॥ इदं कूप्याभ्यो न मम ॥ ७ ॥ ॐसूद्याभ्यः स्वाहा । इदं सूद्याभ्यो न मम ॥ ८ ॥ ॐ धार्याभ्यः स्वाहा । इदं धार्याभ्यो न मम ॥ ९ ॥ ॐ अर्णवाय स्वाहा । इदम् अर्णवाय न मम ॥१०॥ ॐ समुद्राय स्वाहा । इदं समुद्राय न मम ॥ ११ ॥ ॐ सरिराय स्वाहा । इदं सरिराय न मम ॥१२॥ एवं द्वादशाहुतीर्दत्वा सपत्नीको यजमानस्तस्मिन् तीर्थजले श्रीगायत्रीयन्त्रं 'श्रीगायत्रीयन्त्राधिष्ठितदेवताभ्यो नमः' इति गन्धाक्षतपुष्पैः संपूज्य ततः तं हस्ते गृहीत्वा निमज्जेत् ॥ ततः उन्मज्य प्रधानकलशं गृहीत्वा प्रधानकलशादर्धं जलं तीर्थे निक्षिप्यार्धजलसमन्वितं कलशं तीर्थजलेन सम्पूर्य कुण्डादानीतं भस्मापि तस्मिन्तीर्थे निक्षिप्य तस्मात्किञ्चित् आदाय स्वकीये शरीरे 'ॐमसचेति' मंत्रं पठन् अनुलिम्पेत् ॥ ततः आचार्यादिसमस्तऋत्विग्भिः पुत्रपौत्रादिपरिवारजनैः ज्ञातिभिः पौरवासिभिश्च सह तस्मिन्तीर्थे स्नायात् । ॐ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमेनोयासिषमवमर्त्यैर्म-

स्त्वंकृतम्पुरुराव्णोदेवरिषस्पाहिदेवानाᳪंसमिदसि ॥ २७ ॥ एवं स्नात्वा तदनन्तरं 'ॐआकृष्णेन' इति मंत्रेण सूर्यं नमस्कृत्य ॥ 'ॐवरुणस्योत्तम्भनमसि०' इति मंत्रेण तीर्थमपि नमस्कृत्य। तीर्थाद्बहिरागत्य नवानि वस्त्राणि धृत्वा स्नाने धृतानि निष्कास्य यथाशक्ति तीर्थतटे स्थितान् ब्राह्मणान् आचार्यादिसमस्तर्त्विजश्च दक्षिणादानेन संतोष्य सजलं प्रधानकलशं यन्त्रम् अवशिष्टं भस्म घटसहितमादाय मंगलवाद्यघोषपुरःसरं यज्ञमंडपमागत्य प्रधानपीठे प्रधानकलशं यन्त्रञ्च संस्थाप्य आनीतं भस्म पुनः कुण्डे प्रक्षिप्य घृतपात्रदानं देवताविसर्जनाद्यवशिष्टं कर्म समापयेत्॥

॥ इति अवभृथस्नानविधिः ॥

## ॥ अथ घृतपात्रदानादिकम् ॥

एवं सपत्नीको यजमानो मंडपमागत्य कुण्डस्य पश्चिमदिशि भगवत्याः श्रीगायत्रीदेव्याः पीठसमीप उपविश्य घृतपूरिते कांस्यपात्रे स्वस्य मुखावलोकनं कुर्यात्॥ ॐरूपेणवोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु । ऋतस्यपथाप्रेत चन्द्रदक्षिणाविस्वःपश्यव्युन्तरिक्षंयतस्वसदस्यैः ॥ ४७ ॥ ततः तस्मिन्किञ्चिद्धिरण्यं निधाय हस्ते तत्पात्रमादाय सङ्कल्पं कुर्यात्। इदम् आज्यपात्रं सदक्षिणाकम् अमुकगोत्रोत्पन्नाय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे॥ इति घृतपात्रं दद्यात्। पुनर्हस्ते जलमादाय भोजनसङ्कल्पं कुर्यात्॥ मया कृतस्य सग्रहमखश्रीगायत्रीपुरश्चरणकर्मणः साङ्गतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् सुवासिनीः कुमारीः बटुकाँश्च भोजयिष्ये तेन भगवती आराध्यदेवता सपरिवारा श्रीगायत्रीदेवी प्रीयतां न मम। पुनर्जलमादाय। न्यूनातिरिक्तदोषपरिहारार्थं नानागोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथाशक्ति दक्षिणादानं करिष्ये॥ इति दक्षिणां दत्वा देवताविसर्जनादिकं कुर्यात्॥

## ॥ अथ देवताविसर्जनं पीठादिदानञ्च ॥

सपत्नीको यजमानो हस्ते गन्धाक्षतपुष्पाण्यादाय । ॐउत्तिष्ठब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तुमरुतः सुदानवऽ इन्द्रप्राशूर्भवासचा ॥ ५६ ॥ यान्तु देवगणाः सर्वे स्वशक्त्या पूजिता मया । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ आवाहितगणपत्यादिगायत्र्यन्ताः सर्वे देवाः स्वस्वस्थानं गच्छत । शुभे कार्ये पुनरागमनाय च॥ इत्युक्त्वा गन्धाक्षतपुष्पाणि स्थापितदेवतानां पीठोपरि निःक्षिपेत् ॥ ततोऽग्निविसर्जनम् । पुनर्गन्धाक्षतपुष्पाणि गृहीत्वा ॥ ॐ यज्ञ यज्ञं गच्छ यज्ञपतिङ्गच्छस्वां योनिङ्गच्छस्वाहा । एषते यज्ञोयज्ञपते सहसूक्तवाकः सर्ववीरस्तञ्जुषस्वस्वाहा ॥ २२ ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ १ ॥ इति अग्निविसर्जनं कुर्यात् ॥ ततः स्थापितदे-

वतापीठादिमण्डपान्तं सर्वं ध्वजापताकादिसमन्वितं यावद्यज्ञसंभारम् आचार्याय दद्यात् ॥ तत्र सङ्कल्पार्थं यजमानो हस्ते जलं गृहीत्वा। इमं स्थापितदेवतानां पीठादिसहितं ध्वजापताकादिमण्डपसमन्वितं सर्वोपस्करसहितं यज्ञसंभारम् आचार्याय तुभ्यमहं सम्प्रददे । इति आचार्यस्य हस्ते जलं दद्यात् ॥ आचार्यः 'देवस्यत्वा सवितुः० इति मन्त्रेण 'ॐ स्वस्ति' इत्युक्त्वा तज्जलं गृह्णीयात् ॥ ततः संपूर्णतां वाचयेत्। यथा—अञ्जलिं बद्ध्वा ब्राह्मणान् प्रार्थयेत्—मया यदेतत्सग्रहमखश्रीगायत्रीपुरश्चरणाख्यं कर्म कृतं तत्कालहीनं कर्महीनं द्रव्यहीनं भक्तिहीनं श्रद्धाहीनं शक्तिहीनं भवेत् तत् सर्वं श्रीमतां ब्राह्मणानां वचनात् श्रीगायत्रीदेवीप्रसादाच्च सर्वं परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु । अस्तु परिपूर्णमिति द्विजा वदेयुः ॥

ततं आचार्यः प्रैषात्मकं पुण्याहवाचनं कलशस्थापनं कृत्वा कारयेत् ॥

## ॥ अथ प्रैषात्मकपुण्याहवाचनम् ॥

स्वपुरतः पञ्चवर्णैरष्टदलं कृत्वा तत्र भूमिं स्पृशेत्—ॐमहीद्यौः० ॥ तत्र यवप्रक्षेपः—ॐओषधयः० ॥ तदुपरि कलशस्थापनम्—ॐआजिघ्र० ॥ तत्र जलपूरणम्—ॐवरुणस्यो० ॥ गन्धप्रक्षेपः—ॐत्वाङ्गन्धर्वा० ॥ धान्यप्रक्षेपः—ॐ धान्यमसि० ॥ सर्वौषधीप्रक्षेपः०—ॐयाऽओषधीः० ॥ दूर्वाप्रक्षेपः—ॐकाण्डात्काण्डा० ॥ पञ्चपल्लवप्रक्षेपः—ॐ अश्वत्थेवो० ॥ सप्तमृत्प्रक्षेपः—ॐस्योनापृथिवि० ॥ फलप्रक्षेपः—ॐ याः फलिनी० ॥ पञ्चरत्नप्रक्षेपः—ॐपरिवाज० ॥ हिरण्यप्रक्षेपः—ॐहिरण्यगर्भः० ॥ रक्तसूत्रवेष्टनम्—ॐसुजातोज्योति० ॥ पूर्णपात्रम्—ॐपूर्णादर्वि० ॥ वरुणावाहनम्—ॐतत्त्वायामि० ॥ अस्मिन् कलशे वरुणं साङ्गं० आवा० स्था० ॥ प्रतिष्ठापनम्—ॐमनोजूतिर्जु० ॥ ॐवरुणाय नमः चन्दनं सम० ॥ इत्यादिपञ्चोपचारैः संपूज्य तत्त्वायामि०इति पुष्पाञ्जलिं समर्प्य॥ अनेन पूजनेन वरुणः प्रीयताम्॥ अनामिकया कलशं स्पृष्ट्वा अभिमन्त्रयेत्—कलशस्य० दुरितक्षयकारकाः ॥ गायत्र्यादिभ्यो नमः इत्यनेन पञ्चोपचारैरभ्यर्च्य कलशं प्रार्थयेत्—देवदानव० सन्निधो भव ॥ यजमानो युग्मविप्रान् गन्धमाल्यवस्त्रदक्षिणादिभिः सम्पूज्य तान् उदङ्मुखानुपवेश्य पूजितकलशं कराभ्यामालभ्य—मम गृहे ॐपुण्याहं भवन्तो ब्रुवन्तु॥ ॐअस्तु पुण्याहम् इति द्विजाः। एवं त्रिः ॥ मम गृहे ॐकल्याणं भवन्तो ब्रुवन्तु। ॐअस्तु कल्याणमिति द्विजाः। एवं त्रिः॥ मम गृहे ॐऋद्धिं भवन्तो ब्रुवन्तु॥ ॐकर्म ऋद्ध्यताम् इति द्विजाः। एवं त्रिः ॥ मम गृहे ॐस्वस्ति भवन्तो ब्रुवन्तु। ॐआयुष्मते स्वस्ति इति द्विजाः। एवं त्रिः ॥ मम गृहे ॐश्रीरस्त्विति भवन्तो ब्रुवन्तु । ॐअस्तु श्रीः इति

१पुण्या.सूत्रे-पुण्याहवाचनशुद्धिपूर्तेष्वृद्धिर्विवाहान्तापत्यसंस्काराःप्रतिष्ठोद्यापनादि पूर्तं तत्कर्मणश्चायन्तयोःकुर्यात्

द्विजाः। एवं त्रिः॥इति पुण्याहं वाचयित्वा मन्त्राशिषो गृहीत्वा—प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥ ॐविष्णवे नमः॥ ॐविष्णवे नमः ॥ ॐविष्णवे नमः॥ ततो ब्राह्मणान् भोजयित्वा दीनादींश्चान्नादिना सन्तोष्य स्वयं सुहृन्मित्रादियुतः सानन्दो भुञ्जीत ॥

॥ इति सग्रहमखश्रीगायत्रीपुरश्चरणप्रयोगः समाप्तः ॥

॥ अथ श्रीगायत्रीस्तवराजः ॥

ॐ अस्य श्रीगायत्रीस्तवराजस्तोत्रमंत्रस्य विश्वामित्र ऋषिः सकलजननी चतुष्पदा गायत्री परमात्मा देवता सर्वोत्कृष्टपरं धाम प्रथमपादो बीजं द्वितीयः शक्तिः तृतीयः कीलकं दशप्रणवसंयुक्ता सव्याहृतिका तूर्यपादसहिता व्यापकं मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥ न्यासं कृत्वा ध्यायेत् ॥ तद्यथा ॥ गायत्री वेदधात्री शतमखफलदा वेदशास्त्रैकवेद्या चिच्छक्ति ब्रह्मविद्यां परमशिवपदं श्रीपदं वै करोति ॥ सर्वोत्कृष्टं पदं तत्सवितुरनुपदांते वरेण्यं शरण्यं भर्गो देवस्य धीमह्यभिदधति धियो यो न (ःप्रचोदयात्) इत्यौर्वतेजः॥१॥ साम्राज्यबीजं प्रणवत्रिपादं सव्यापसव्यं प्रजपेत्सहस्रम्॥संपूर्णकामः प्रभवेद् विभूतिस्तथा भवेद्वाक्यविचित्रवाणी ॥ २ ॥ शुभं शिवं शोभनमस्तु मह्यं सौभाग्यभोगोत्सवमस्तु नित्यम् ॥ प्रकाशविद्यात्रयशास्त्रसर्वं भवेन्महामन्त्रफलं प्रिये वै ॥ ३ ॥ ब्रह्मास्त्रं ब्रह्मदंडं शिरसि शिखिमहद्ब्रह्मशीर्षं नमोंतं सूक्तं पारायणोक्तं प्रणवमथ महावाक्यसिद्धान्तमूलम् ॥ तुर्यं त्रीणि द्वितीयं प्रथममनुमहावेदवेदांतसूक्तं नित्यं स्मृत्यानुसारं नियमितचरितं मूलमंत्रं नमोन्तम् ॥ ४ ॥ अस्त्रं शस्त्रहतं स्वघोरसहितं दंडेन वाजीहतं चादित्यादिहतं शिरोंतसहितं पापक्षयार्थं परम् ॥तुर्यान्त्यादिविलोममंत्रपठनं बीजं शिखान्तोर्ध्वकं नित्यं कालनियम्यविप्रविदुषां किं दुष्कृतं भूसुराः ॥ ५ ॥ नित्यं मुक्तिप्रदं नियम्य पवनं निर्घोषशक्तित्रयं सम्यग्ज्ञानगुरूपदेशविधिवद्देवीं शिखान्तामपि ॥ अष्टैकोत्तरसंख्ययानुगतसौषुम्नादिमार्गत्रयीं ध्याये नित्यसमस्तवेदजननीं देवीं त्रिसंध्यामयीम् ॥ ६ ॥ गायत्रीं सकलागमार्थफलदां सौरस्य बीजेश्वरीं सर्वाम्नायसमस्तमंत्रजननीं सर्वज्ञधामेश्वरीम् ॥ ब्रह्मादित्रयसंपुटार्थकरणीं संसारपारायणीं संध्यां सर्वसमानतंत्रपरमां ब्रह्मानुसंधायिनीम् ॥ ७ ॥ एकद्वित्रिचतुःसमानगणनावर्णाष्टकं पादयोः पादादौ प्रणवादिमंत्रपठनं मात्रात्रयीसंपुटम् ॥ संध्यायां द्विपदं पठेत्परतरं सायं तुरीयायुतं नित्यं नित्यमनंतकोटिफलदं प्राप्तुं नमस्कुर्महे ॥ ८ ॥ ओजोऽसीति सहोऽस्यथो बल-

मसि ओजोऽसि तेजस्विनी वर्चस्वी सविताग्निसोममममृतं रूपं परं धीमहि॥ देवानां द्विजवर्यतां मुनिगणे मुक्त्यर्थितां शान्तितामोमित्येकमृचं पठंति यमिनो यं यं स्मरेत्प्राप्नुयात् ॥ ९ ॥ ओमित्येकमजस्वरूपममलं तत्सप्तधा भाजितं तारं तंत्र-समन्वितं परतरे पादत्रयं गर्भितम् ॥ आपोज्योतिरसोमृतं ,जनमहः सत्यं तपः स्वर्भुवर्भूर्भूयः प्रणमामि भूर्भुवःस्वरोमेतैर्महामंत्रकम् ॥ १० ॥ आदौ बिंदुमनु-सरन्परतरे बालात्रिवर्णोच्चरन्व्याहृत्यादिसबिंदुयुक्तत्रिपदातारत्रयं तुर्यकम् ॥ आरोहादवरोहतः क्रमगता श्रीकुंडलीसंस्थिता देवी मानसपंकजे त्रिनयना पंचानना पातु माम् ॥ ११ ॥ सर्वे सर्ववशे समस्तसमये सत्यात्मिके सात्त्विके सावित्रीसवितात्मके शशियुते सांख्यायनीगोत्रजे ॥ संध्यात्रीण्युपकल्प्य संग्रह-विधौ संध्याभिधानात्मके गायत्रीं प्रणवादिमंत्रगुरुणा संप्राप्य तस्मै,नमः ॥ १२ ॥ क्षेमं दिव्यमनोरथं परतरे चेतः समाधीयतां ज्ञानं नित्यवरेण्यमेतदमलं देवस्य भर्गो धियः ॥ मोक्षश्रीर्विजयार्थिनोऽथ सवितुर्यच्छ्रेष्ठधीस्तत्पदं प्रज्ञामेधप्र-चोदयात्प्रतिदिनं यो नः पदं पातु माम् ॥ १३ ॥ सत्यं तत्सवितुर्वरेण्यविमलं विश्वा-दिमायात्मकं सर्वाद्यं प्रतिपादपादरमया तारं तथा मन्मथम् ॥ तुर्यान्तं त्रितयं द्वितीयमपरं संयोगसव्याहृतिं सर्वाम्नायमनोन्मयीं मनसिजां ध्यायामि देवीं पराम् ॥ १४ ॥ आदौ गायत्रिमंत्रे गुरुकृतनियमं धर्मकर्मानुकूलं सर्वाद्यं सारभूतं सक-लमनुमयं देवतानामगम्यम् ॥ देवानां पूर्वदेवं द्विजकुलमुनिभिः सिद्धविद्याध-राद्यैः को वा वक्तुं समर्थस्तव मनुमहिमाबीजराजादिमूलम् ॥ १५ ॥ गायत्रीं त्रिपदां त्रिबीजसहितां त्रिव्याहृतिं त्रैपदां त्रिब्रह्मां त्रिगुणां त्रिकालनियमां वेद-त्रयीं तां पराम् ॥ सांख्यादित्रयरूपिणीं त्रिनयनां मात्रात्रयीं तत्परां त्रैलोक्यत्रि-दशत्रिकोटिसहितां संध्यात्रयीं तां नुमः ॥ १६ ॥ ओमित्येतत्रिमात्रां त्रिभुवन-करणं त्रिस्वरं वह्निरूपं त्रीणि त्रीणि त्रिपादं त्रिगुणगुणमयं त्रैपुरांतं त्रिसूक्तम् ॥ तत्त्वानां पूर्वशक्तिं त्रितयगुरुपदं पीठयंत्रात्मकं तं तस्मादेतत् त्रिपादं त्रिपदमनु-सरं त्राहि मां भो नमस्ते ॥ १७ ॥ स्वस्तिश्रद्धातिमेधा मधुमतिमधुरः संशयः प्रज्ञकांतिर्विद्या बुद्धिर्बलं श्रीरतनुधनमतिः सौम्यवाक्यानुवृत्तिः ॥ मेधा प्रज्ञा प्रतिष्ठा मृदुमधुरगिरा पूर्णविद्याप्रपूर्णं प्राप्तं प्रत्यूपचिंत्यं ,प्रणवपरवशा-त्प्राणिनां नित्यकर्म ॥ १८ ॥ पंचाशद्वर्णमध्ये प्रणवपरयुते मंत्रमाद्यं नमोंतं सर्वं सव्यापसव्यं शतगुणमभितो वर्गमष्टोत्तरं ते ॥ एवं नित्यं प्रजप्तं त्रिभुवनसहितं तूर्ययुक्तं त्रिपादं ज्ञानं विज्ञानगम्यं गगनसुसदृशं ध्यायते यः स मुक्तः ॥ १९ ॥ आदिक्षांतसबिंदुयुक्तसहितं मेरुं क्षकारात्मकं व्यस्ताव्यस्तसमस्तवर्गसहितं पूर्णं

शताष्टोत्तरम् ॥ गायत्रीं जपतां त्रिकालसहितां नित्यं सनैमित्तिकं चैवं जाप्यफलं शिवेन कथितं सद्भोग्यमोक्षप्रदम् ॥ २० ॥ सप्तव्याहृतिसप्ततारविकृतिः सत्यं वरेण्यं धृतिः सर्वं तत्सवितुश्च धीमहि महद् देवस्य भर्गं भजे॥धाम्नो धाम च भादिधारणमहाधीमत्पदं ध्यायते ॐ तत्सर्वमनुप्रपूर्णदशकं पादत्रयं केवलम् ॥ २१ ॥ विज्ञानं विलसद्विवेकवचसः प्रज्ञानुसंधारिणीं श्रद्धामेध्ययशःशिरःसुमनसःस्वस्तिश्रियं त्वां सदा ॥ आयुष्यं धनधान्यलक्ष्मीमतुलां देवीकटाक्षं परं तत्काले सकलार्थसाधनमदान्मुक्तिं महत्त्वं पदम् ॥ २२ ॥ पृथ्वी गंधोऽर्चनायां नभसि कुसुमता वायुधूपप्रकर्षो वह्निर्दीपप्रकाशो जलममृतमयं नित्यसंकल्पपूजा ॥ एतत्सर्वं निवेद्यं सुखवति हृदये सर्वदा दंपतीनां त्वं सर्वज्ञे शिवं मे कुरु तव ममता भक्तवृन्दे प्रसिद्धा ॥ २३ ॥ सौम्यं सौभाग्यहेतुं सकलसुखकरं सर्वसौख्यं समस्तं सत्यं सद्भोगनित्यं सुखजनसुहृदं सुंदरं श्रीसमस्तम् ॥ सौमंगल्यं समग्रं सकलशुभकरं स्वस्तिवाचं समस्तं संवेद्यं सद्विवेकं त्रिपदपदयुगं प्राप्तुमाद्यं समस्तम् ॥ २४ ॥ गायत्रीपदपंचपंचप्रणवद्वंद्वं त्रिधा संपुटं सृष्ट्यादिक्रममंत्रजाप्यदशकं देवीपदं भूत्रयम् ॥ मंत्रादिस्थितिकेषु संपुटमिदं श्रीमातृकावेष्टनं वर्णोत्यादिविलोममंत्रजपनं संहारसंमोहनम् ॥ २५ ॥ भूराद्यं भूर्भुवःस्वस्त्रिपदपदयुतं त्र्यक्षमाद्यंतयोज्यं सृष्टिस्थित्यंतकार्यं क्रमशिखिसकलं सर्वमंत्रं प्रशस्तम् ॥ सर्वांगं मातृकाणां मनुमयवपुषं मंत्रयोगं प्रयुक्तं संहारं क्षादिवर्णं वसुशतगणनं मंत्रराजं नमामि॥ २६ ॥ विश्वामित्रकृतं परं हितकरं सर्वार्थसिद्धिप्रदं स्तोत्राणां परमं प्रभातसमये पारायणं नित्यशः ॥ वेदानां विधिवादमंत्रसफलं सिद्धिप्रदं संपदां स प्राप्नोत्यपरत्र सर्वसुखदं चायुष्यमारोग्यताम् ॥ २७ ॥

॥ इति श्रीविश्वामित्रकृतः श्रीगायत्रीस्तवराजः समाप्तः ॥

बाणाङ्केभवसुभूशाके चैत्रे शुक्ले विधौ दिने । तिथौ प्रतिपदायां तु गायत्र्याः कृपया मुदा ॥१॥
कच्छमांडविजातेन मोहमय्यां निवासिना । मया भाणजिपुत्रेण जीवनरामशर्मणा ॥ २ ॥
ग्रथितेयं श्रीगायत्रीपुरश्चरणपद्धतिः । संपूर्णतां गता भूयाद् याज्ञिकानां सुसिद्धये ॥ ३ ॥
भूयो भूयो नमस्कुर्वे गायत्रीं वरदां शुभाम् । यत्कृपातो हि जायन्ते ब्रह्मवर्चस्विनो द्विजाः॥४॥

॥ इति श्रीगायत्रीपुरश्चरणपद्धतिः समाप्ता ॥



# गायत्रीपुरश्चरणपद्धतिशुद्धिपत्रम् ।

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १६ | ह्यथ | ह्यथर्व— |
| २ | ६ | ब्रुवन् | ब्रवन् |
| ३ | १२ | ,, | ,, |
| ,, | ,, | मेवार्थः | मेवार्यः |
| ४ | २३ | सर्व | सर्वं |
| ५ | १२ | मुम्बापुरीम् | मुम्बापुरीम् |
| १ | ६ | कशा | कशाः |
| २ | १५ | कुर्यात् | कुर्यात् |
| ५ | १० | कतव्या— | कर्तव्या— |
| ९ | १५ | विशेपार्घ्यं | विशेपार्घ्यं |
| ,, | २१ | सव | सर्व |
| ११ | २० | क्षुद्र | र्क्षुद्र |
| १२ | १४ | प्रश्नि | पृश्नि |
| ,, | १५ | निधूतं | निर्धूतं |
| १९ | २४ | गृहीत्वा पवित्रे | गृहीत्वा वामहस्ते पवित्राग्रं दक्षिणे पवित्रयोर्मूलं धृत्वा मध्यतः पवित्राभ्या-मुत्पवनं प्रोक्षणीपात्रजलस्य । पवित्रे |
| २३ | ६ | देवभ्यो | देवेभ्यो |
| ,, | १३ | शिवः | शिवाः |
| २४ | १ | दश दान | दशदान |
| ,, | १८ | दश गायत्र्या | दशगायत्र्या |
| २९ | १२ | पूजा | पूजा |
| ३० | २८ | प्रतिकूल | प्रतिकुल |
| ३१ | ७ | चेव | चैव न |
| ,, | १० | नियन्ध | नियन्धे |
| ३३ | १४ | यो | यो |
| ३४ | २७ | त्यनिर्वन्धः | यन्धनरहितः |

## ॥ शुद्धिपत्रम् ॥

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४१ | २९ | आचमनीयं स० ॥ मधु-स्नानम् ॥ | आचमनीयं स०॥ ततो घृतस्नानम्॥ ॐ घृतं मिमिक्षे० ॥६६॥ ॐ भूर्भुवस्वः सि० म० घृतस्नानं सम० । घृतस्ना० शुद्धोदक० शुद्धोद० आचमनीयं स०॥ मधुस्नानम् ॥ |
| ४२ | २८ | -सुधायं | सुधार्यं |
| ४३ | ३ | रक्त | रक्तं |
| ४४ | ३ | शीर्ष्ण्णे | शीर्ष्ण्णो |
| ,, | ४ | ,, | ,, |
| ,, | ५ | ,, | ,, |
| ,, | ६ | ,, | ,, |
| ,, | ,, | ,, | ,, |
| ,, | ,, | ,, | ,, |
| ४६ | ११ | रग्मिर्द्दे | रग्मिर्हे |
| ५५ | १ | पातत | पातित- |
| ,, | ८ | सव्वे | सर्वे |
| ५९ | ८ | आंसनार्थे | आसनार्थे |
| ,, | २५ | नैबद्यान्ते | नैवेद्यान्ते |
| ६२ | २ | सर्रस्वाल्य | सर्रसत्य |
| ७१ | २६ | तेऽर्घं | तेऽर्घ |
| ७२ | ८ | तत | ततः |
| ७७ | १० | यत्त | यत्तऽ |
| ७८ | ११ | सत यज- | ततो यज- |
| ७९ | १३ | -घोपणे | -घोपेण |
| ८० | १३ | किंट्टे | किंट्टि |
| ८१ | १५ | रार्न्तुद्र | रार्न्तुद्र |
| ८५ | १५ | इहा गच्छ | इहागच्छ |
| ८५ | २३ | युयोध्य | युयोध्य |
| ८६ | ९ | इहागच्छ इह तिष्ठ | इहागच्छत इह तिष्ठत |
| ८६ | १४ | सेद्वधे | सद्वधे |

# ॥ शुद्धिपत्रम् ॥

| पत्रम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८७ | ३ | यर्पिष्ठा | ब्रर्पिष्ठा |
| ८८ | २९ | सर्ज्जनी | सर्ज्जनीत्स्यो |
| ८९ | २४ | जूहु | जुहू |
| ९२ | १० | भवान्तृ | भवान्तृ |
| ,, | २४ | वर्ण्णद्द॰ | वर्ण्णद्द॰ |
| ,, | २४ | न्ययनद्द॰ | न्ययनद्द |
| ,, | २६ | यक्षि | यक्षि |
| ,, | २७ | उपयज्ञद्द | उपयज्ञद्द |
| ,, | २९ | न्नुरुच | न्त्रुरुच |
| १०२ | १ | ब्रंष्टधिया | ब्रंष्ट्रधिया |
| १०७ | १४ | नाभि | नाभि |
| | | | हद्द॰सेमपा |
| ११० | ६ | हद्द॰हंसद्द | त्वद्द॰हंसद्द |
| १११ | ८ | वेष्ठारं | वेष्टारं |
| ,, | १२ | जूतिर्ज्जू | जुतिर्ज्जु |
| ११३ | १९ | दुगपारायै | दुर्गपारायै |
| ११७ | ५ | पुष्ठि | पुष्टि |
| ११८ | ४ | याहि | याहि |
| ११८ | ४ | इन्द्रायाहि | इन्द्रायाहि |
| ,, | १२ | भुङ्गेन | भुङ्क्तेन |
| १२३ | १७ | क्षेत्रपादेवेभ्यो | क्षेत्रपालदेवेभ्यो |
| १२४ | १० | आनोभद्रा– | आनोभद्राः० |
| ,, | ११ | शिशान | शिशानो० |
| ,, | १७ | धान्यपूञ्जान् | धान्यपुञ्जान् |
| १२५ | ७ | पितृभिः | पितृभिः |
| ,, | २५ | दार्धे | दाघर्त्य |
| १२६ | १ | विश्वा | धिष्ण्या |
| ,, | ,, | विद्वान | विद्वान् |
| १२७ | ९ | ज.दु.सु.सु.सु इ.ळ. | ज.क्षी.दु.सु.सु.इ.ळ. |

